॥ ॐ अर्हम् ॥

नमोनमः श्रीप्रभुधर्मसूरये।

# आदर्श विभूतिः



कर्ता—

न्याय-विशारद-न्याय-तीर्थ-उपाध्याय

श्रीमङ्गलविजयजी महाराज

प्रकाशक—

हेमचंद सबचंद शाह

कलकत्ता

प्रथमावृत्ति—

१०००

वीर सं. २४६७] धर्म सं. १९ [वि. सं. १९९७



शास्त्रविशारद जैनाचार्य

श्रीमद् विजयधर्मसूरीश्वरजी महाराज

# श्रद्धाञ्जलिः

विशुद्ध चारित्रचूडामणि शुद्धधर्मोपदेशक सकलागमरहस्यवेदक
विशुद्धाऽऽसेवनादि शिक्षाद्वारा पाषाणसदृशानाम् नवपल्लवकर्तृक
सर्वत्र जैनसाहित्यप्रचारक जैनसाहित्यद्वारा जैनसरस्वत्याः
प्रत्येक देशिविदेशी विबुधजनहृदयप्रवेशक परम
प्रभावक शासनोद्धारक सूरिचक्रचक्रवर्ति जंगमयुग-
प्रधान अनेक राजन्योपदेशक परमाराध्यदेव
शास्त्रविशारद जैनाचार्य श्रीविजयधर्म-
सूरीश्वराणां करकमलेषु सादरमिदं
श्रद्धांजलिरुपाकृति—पुष्पं मंगल-
विजयेन भक्तिपूर्वकं समर्प्यते।

यदि अपने में दोष है और कोई निंदा करता है, तो उसका उपकार मानना चाहिये, इसलिये कि वह अपने दोषका स्मरण कराता है। यदि एव नहीं है, और कोइ निंदा करता है तो उस पर दया करनी चाहिये, इसलिये कि वह विचारा निरर्थक कर्मबन्धन-पाप करता है-अपनी जीभ से हमारा मल साफ करता है।

—विजयधर्मसूरि

# आदर्शविभूति–सहायक–शुभनामावलिः

## श्रेष्ठि हनुमानसिंहजी लक्ष्मीचन्द्र कर्णावटस्य धर्मपत्नी श्रीमती सुशीला गटांबाइ इतिनामधेयस्यौदार्यप्रदर्शनम्

वडलूग्रामवास्तव्यः, मरुदेशीयश्रावकः ।
लक्ष्मीचन्द्रो महाभागो, बंगदेशे समागतः ॥ १ ॥

स्वकीयपूण्ययोगेन, लक्ष्मीस्तेन समर्जिता ।
सर्वत्र प्रौढिमा तस्य, यशः ख्यातिः समर्गला ॥ २ ॥

शीलालंकारसद्युक्ता, धर्मध्यानपरायणा ।
धर्मपत्नी गटांबाई, तस्य श्रीश्रेष्ठिनो मता ॥ ३ ॥

चत्वारस्तनुजा जाताः, तयोः पुण्यप्रभावतः ।
प्रथमो मन्नुलालाख्यः, छन्नुलालो द्वितीयकः ॥
तृतीयः पन्नालालः स्यात्, धन्नुलालः चतुर्थकः ।
धैर्यौदार्यगुणाऽऽढ्यं च, श्रेष्ठिपु परिशोभते ॥ ४ ॥

जैनधर्मे सदा रक्तौ, देवगुरुप्रपूजकौ ।
एकदा गुरुदेवानां, आगतिस्तत्र जायते ॥ ५ ॥

तच्छ्रुत्वा दम्पती तत्राऽऽगत्य भक्तिविधापनम् ।
अकुरुतां विशुद्धेन, भावेन सर्वदा च तौ ॥ ६ ॥

एकदा गुरुव्याख्याने, सहस्रजनसंकुले ।
विहारभावना शुद्धा, गुरुणा परिज्ञापिता ॥ ७ ॥
तच्छ्रुत्वा श्राद्धवर्यैस्तैः, पृष्टं विहारकारणम् ।
स्थानाऽभावे हि चास्माकं, स्थितिरत्र न जायते ॥ ८ ॥
भाटकस्थानसंस्थित्यर्थं, मह्यं नैव प्रकल्पते ।
स्वकीयं स्थानकं शुद्धं, यदि केनाऽपि दीयते ॥ ९ ॥
तदाऽत्रैव प्रस्थातव्ये, ह्यवकाशो भवेन्मम ।
अन्यथा कालिकातायां, चातुर्मासं न संभवेत् ॥ १० ॥
समुत्थाय त्रयः श्राद्धाः, कुर्वन्ति प्रार्थनां शुभाम् ।
भवतामत्र स्थित्यर्थं, त्रीणि स्थानानि सन्ति वै ॥ ११ ॥
यस्यैव रोचते स्थानं, युष्माकं दीयते च तत् ।
विलम्बोऽत्र न कर्तव्यः, आगत्य तद् विलोक्यताम् ॥ १२ ॥
लक्ष्मीचन्द्रीयस्थानं हि, सानुकूलं च सर्वथा ।
स्वाध्यायध्यानयोगाय, प्रगुणं परिज्ञायताम् ॥ १३ ॥
पञ्चशतादिसाहस्रं, रुप्यानां चैव भाटकम् ।
प्रतिमासं च तस्यैव, त्यक्त्वा स्थानं समर्पितम् ॥ १४ ॥
ऐहलौकिकलाभस्तु, रुप्यानां परिज्ञायताम् ।
पुण्यधनस्य प्राप्तिश्च, परलोके गरीयसी ॥ १५ ॥
अतोऽत्रैव समागत्य, पवित्रं मद्गृहं कुरु ।
युष्मच्चरणन्यासश्च, पुण्ययोगेन जायते ॥ १६ ॥

अष्टमासिकपर्यन्ता, गुरूणां जायते स्थितिः ।
दशसहस्रसंख्यानां, अपरं च व्ययः कृतः ॥ १७ ॥
पञ्चवत्सरपर्यन्तं, अन्ये च साधवः खलु ।
चातुर्मासं च तत्रैवा-ऽकुर्वन्, तस्यैव प्रेमतः ॥ १८ ॥
तत्र स्थित्वा च व्याख्यानं, प्रतिदिनं विधीयते ।
धर्मध्यानं गुरूणां च, सुन्दरं परिजायते ॥ १९ ॥
श्रेष्ठिनां स्वर्गवासे तद्, धर्मपत्नी ततोऽधिका ।
कुरुते भक्तिभावं च, नित्यं धर्मविवृद्धये ॥ २० ॥
अनेकतीर्थस्थानेषु, धर्मशालादिनिर्मितम् ।
साध्वादीनां परामक्तिः, शुध्धभावेन तन्यते ॥ २१ ॥
अनेकपुस्तकानां च, स्वकीयद्रव्यसद्व्ययात् ।
मुद्रापणे च साहाय्यं, कृतं विशुद्धप्रेमतः ॥ २२ ॥
उपाश्रयादिके स्थाने, गुरुकुलादिके तथा ।
साहाय्यं द्रव्यभावेन, विहितं बहुशः किल ॥ २३ ॥
उद्यापनादिकं कार्यं, कृतं तपोविधानतः ।
मुखान्निषेधशब्दो न, तन्मुखे कर्हिचिद् भवेत् ॥ २४ ॥
गुरुदेवचरित्रे चादर्श, विभूतिनामके ।
चतुः शतं च रुप्यानां, साहाय्यं हि कृतं तया ॥ २५ ॥
तत्पुत्रो धन्नुलालोऽपि, तत्कार्ये चानुमोदनम् ।
करोति स्वीयलाभाय, धर्ममार्गविधायकः ॥ २६ ॥

## श्रीमत् सोहनलालकर्णावटस्य मातृ भंवरबाई इत्याऽऽख्यस्यौदार्यप्रदर्शनम्

धर्मध्यानसमायुक्तः, छन्नुलालश्च सर्वदा ।
पितृभक्तः सदा ज्ञेयः, गुरुभक्तिपरायणः ॥ २७ ॥

तद्भार्या भवरीत्याख्या, सदाचारैर्विभूषिता ।
धर्मध्यानसमालीढा, बहुतपो विधायिका ॥ २८ ॥

तयोः सोहनलालाख्यः, पुत्रस्तु जनसंमतः ।
निजभुजबलेनैव, लक्ष्मीः समर्जिता पुनः ॥ २९ ॥

सत्कार्ये व्ययकर्ता वै, मातृभक्तिपरायणः ।
तेनैव शुभभावेन, साहाय्यं पुस्तके कृतम् ॥ ३० ॥

द्विशतं रुप्यकानां च, गुरुदेवोपदेशतः ।
तन्मातुरनुमोदश्च, तत्कार्येषु विशेषतः ॥ ३१ ॥

गुरुदेवचरित्रेषु, विशेषतश्च वर्णनम् ।
श्रेष्ठिनो विहितं तस्मा-दत्र संक्षेपतो मतम् ॥ ३२ ॥

## राजनगरवास्तव्य श्रेष्ठिवर्य रमणलाल डाह्याभाई इत्याख्यस्यौदार्यप्रदर्शनम्

राजनगरवास्तव्यैः, श्रीमालिकुलभूषणैः ।
डाह्यालालाऽऽत्मजैश्चैव, रमणलालनामकैः ॥ ३३ ॥

परमपूज्य

न्यायविशारद—न्यायतीर्थ



उपाध्याय

**श्री मंगलविजयजी महाराज**



धर्मप्रिय-दानवीर
स्वर्गीय सेठ लक्ष्मीचंदजी कर्णावट, कलकत्ता।

सार्धशतकं रूप्याणां, चौदार्यगुणयोगतः ।
विभूतिपुस्तक स्यैव, मुद्रणे च व्ययः कृतः ॥ ३४ ॥

स्वकीयद्रव्ययोगेन, गुरूणामुपदेशतः ।
अपूर्वलाभलब्धव्ये, संकोचो विद्यते कथम् ? ॥ ३५ ॥

## भावनगरवास्तव्य श्रेष्ठि वाडीलाल चतुरभुजस्यौदार्य-प्रदर्शनम्

भावपत्तनवास्तव्यैः, श्रीमालिकुलसज्जनैः ।
चतुरभुजजैनानां, वाडीलालाऽऽख्यपुत्रकैः ॥ ३६ ॥

पंचाशद्रूप्यकानां च, साहाय्यं विभूतौ कृतम् ।
स्वकीयद्रव्ययोगेन, लाभश्च स्वीकृतो महान् ॥ ३७ ॥

गुरुमुखाच्छ्रुतं यच्च, तदेवं वर्णितं मया ।
पंडितसोमचन्द्रेण, गुरुदेवप्रसादतः ॥ ३८ ॥

---

१ आदर्शविभूति ।

# प्रस्तावना

वन्द्यं निर्मलबोधदं मुनिपतिं, वीरं जगन्नाथकम् ।
द्वादशवर्षमितं च येन प्रभुणा, घोरं तपश्चादृतम् ॥
ऋज्वीवाल्[1]नदीतटे च सकलं, प्राप्तं च ज्ञानं महत्[2] ।
वन्दे तं त्रिशलासुतं जिनवरं, सर्वत्र शान्तिप्रदम् ॥१॥

धर्मो विज्ञवरेण सेवितक्रमो, धर्मं श्रयन्ते जनाः ।
धर्मेणैव कृतं च कामदमनं, धर्माय सौख्यं सदा ॥
धर्मात्स्वर्गशिवाप्तिता च भविनां, धर्मस्य कार्यं महत् ।
धर्मो यस्य जनस्य प्राणस्वरूपः तस्यैव शान्तिः सदा ॥ २ ॥

गुरुदेवचरित्रस्य, लिखनेच्छा गरीयसी ।
संयोगवशतः, कालविलम्बो जायते महान् ॥ ॥ ३ ।

पद्यबन्धं च भाषायां, धमजीवनदीपकम् ।
खण्डचतुष्करूपं तत्, रासरूपेण निर्मितम् ॥ ४ ॥

जीवनरूपपूजायां, संक्षेपतश्च जीवनम् ।
धर्मजीवनदीपेषु, विस्तृतवर्णनं मतम् ॥ ५ ॥

---

१ ऋजुवालुनदी । २ केवलज्ञानं ।

विविधरागरागिण्यां, गानार्थं सरलीकृतम् ।
तादृशं वर्णनं चैव, ह्यन्यत्र नैव विद्यते ॥ ६ ॥
संस्कृते नैव संपूर्णं, गुरुदेवस्य जीवनम् ।
अन्यभाषासु कस्यांचित्, संपूर्णं सूक्ष्मभावतः ॥ ७ ॥
आदर्शसाधु नामाख्यं, हिन्दीभाषासु निर्मितम् ।
शासनदीपकेनैव, विद्याविजयसाधुना ॥ ८ ॥
तत्पूर्वमपि महावीर–प्रसादद्विवेदिना ।
मासिके सरस्वत्याख्ये, प्रदत्तं शुभभावतः ॥ ९ ॥
न्यायविशारदेनाऽपि, न्यायविजयसाधुना ।
धर्मगीताञ्जलिरूपं, पद्यबन्धं विनिर्मितम् ॥ १० ॥
गाने सुमधुरं ज्ञेयं, हिन्दीभाषात्वबोधकम् ।
सच्चे साधुत्व नामाख्यं, चतुर्थं परिकीर्त्तितम् ॥ ११ ॥
वर्मणा कृष्णलालेन, निर्मितं धर्मरागतः ।
अन्यानि गुरुदेवानां, सन्ति विज्ञकृतानि च ॥ १२ ॥
गौर्जरीयगिरायां च, नैकानि जीवनानि वै ।
मंगलविजयेनैव, द्वये च निर्मिते शुभे ॥ १३ ॥
शासनदीपकस्यापि, तृतीयं परिज्ञापताम् ।
अतिसंक्षेपरूपं तत, अपूर्णं च मतं तथा ॥ १४ ॥

---

१ हर्षचन्द्र भुराभाई (जयन्तविजय)

चतुर्थं भिक्षुलालस्य, हर्षचन्द्रीयकं तथा ।
एवं द्वादशसंख्यानि, विद्यन्ते चरितानि च ॥ १५ ॥

सिंहल्यां चैव भाषायां, सिद्धार्थभिक्षुणा कृतम् ।
लंकाख्यनगरीमध्ये, गुरुजीवनबोधकम् ॥ १६ ॥

सिन्धिभाषासु चैकं स्यात्, विदुषी पार्वतीयकम् ।
विद्याविजयसद्बोधाद्, गुरूणां शुद्धप्रेमतः ॥ १७ ॥

इटल्याख्यगिरायां च, जीवने द्वे प्ररूपिते ।
बेलोनीफिलिपविज्ञेन, टेसिटोर्याख्यधीमता ॥ १८ ॥

आँग्लभाषासु नैकानि, गुरूणां जीवनानि च ।
विभिन्नविज्ञवर्येण, भक्तिपुष्पं धृतं महत् ॥ १९ ॥

सुनावालाख्यभक्तेन, निर्मितं भक्तिपुष्पकम् ।
सुमहत्तच्च विज्ञेयं, इंग्लीशे[1] तादृशं नहि ॥ २० ॥

वंगभाषासु विज्ञेन, अमूल्यचरणेन च ।
महाराष्ट्रीयभाषायां, जावडेकरधीमता ॥ २१ ॥

प्राकृतादि[2] कभाषायां, चैव विरहरूपकम् ।
न्यायसाहित्यतीर्थेन, हिमाँशुविजयेन च ॥ २२ ॥

संस्कृतपद्यरूपं च, गुरूणां भक्तिपुष्पकम् ।
स्वानुभवानुसारेण, यद् दृष्टं यच्छ्रुतं च तत् ॥ २३ ॥

---

१ इंग्लीश । २ प्राकृत ६ भाषामें ।

पञ्चसहस्रश्लोकाऽऽढ्यं, संक्षेपतो विनिर्मितम् ।
प्रासंगिकं च वृत्तान्तं, नैकचर्चास्वरूपकम् ॥ २४ ॥
वर्णितं शुद्धभावेन, भक्तिभरेण चेतसा ।
इतिहासस्य सामग्री, काचिदत्रापि विद्यते ॥ २५ ॥
जैनानां पठनार्थं च, परेषां बोधहेतवे ।
नैकाऽनुभवरूपं तत्, ज्ञायतां गुरुजीवनम् ॥ २६ ॥
अष्टादिशतसंख्याके, पत्रे यल्लिखितं मया ।
तत्सर्वंगुरुदेवेभ्यो, मन्तव्यं परकालिकम् ॥ २७ ॥
पूर्वदेशीयतीर्थानां, या च प्ररूपणा कृता ।
मद्यात्राऽनुरुपा सा, तीर्थोन्नतेश्च हेतवे ॥ २८ ॥
विना दोषानप्रदर्शैव, विशोधिर्नैव जायते ।
अतः सरलभावेन, दर्शनं गुणपोषकम् ॥ २९ ॥
मुनिप्रभाकरस्यैव, अन्वेषणं विशेषतः ।
कुर्वतो यच्च संप्राप्तं, तत्सर्वं तत्र ज्ञायताम् ॥ ३० ॥
अधुना कतिचिज्जैनाः, कतितीर्थेषु सन्ति वै ।
जैनेतर सदक्चैव, कार्यं करोति वे तथा ॥ ३१ ॥
श्रेष्ठिमहाशयानां च, केचित्संबन्धिनो जनाः ।
हाजी हाकारकान् कांश्चित्, रक्षन्ति तीर्थस्थानके ॥३२॥
सार्वजैनीपट्टे च, राजनगरस्थानके ।
विशेषतीर्थस्थाने वै, शारदाट्टे च विद्यते ॥ ३३ ॥

परावर्तिश्च कुत्रचित्, कृता ऋष्टिमहाशयैः
स्वार्थत्यागिजनैः कैश्चित्, ऋष्टित्वपदधारिभिः ॥ ३४ ॥

इसरीहट्टस्थानेषु, विशोधिर्बहुधा कृता ।
रुद्रप्रसादविज्ञेन, प्रवर्तितं विशेषतः ॥ ३५ ॥

लक्ष्मीचन्द्रेण पावायां, सुधारा नैकशः कृताः।
मंगलाद्युपदेशेन, कृताः तैस्तैर्महाशयैः ॥ ३६ ॥

सम्मेतशैलतीर्थस्य, जीर्णोद्धारो विशेषतः ।
न्यूनलक्षकरुप्यानां, व्ययो मंगलबोधतः ॥ ३७ ॥

चन्द्रमल्लाख्यश्राद्धेन, मुनिमनामधारिणा ।
सर्वं तत्स्वाहा कृत्वैव, गतस्तस्माद् विशेषतः ॥ ३८ ॥

अधिकारिप्रमादेन, न दृष्टं तत्कदाचन ।
शून्यगृहं च दृष्ट्वैव, लुंटाका लुण्टयन्ति वै ॥ ३९ ॥

जीर्णोधारीय कार्यं च, तत्र न पूर्णरूपकम् ।
सराक–जातीकार्यस्य, कर्त्तव्ये समयो बहु ॥ ४० ॥

जायते च ततस्तत्र, न दृष्टं साधुभिस्तथा ।
भवाभिनन्दिजीवेन, अतः स्वार्थश्च साधितः ॥ ४१ ॥

प्रासंगिकं च तत्सर्वं, विवेचनं विधीयते ।
अन्यथा तत्र भ्रान्तिः स्यात्, सर्वेषां हृदये खलु ॥ ४२ ॥

---

१. मंगलविजय–प्रभाकरविजयानां ।

दश भाषासु सूरीणां, जीवनं परिविद्यते ।
तामीलादिकभाषायां, मुद्रितं नैव जायते ॥ ४३ ॥

पूर्णभक्तिप्रभावेन, मदीया लेखिनी खलु ।
तल्लिखनप्रवृत्तौ सा, प्रवृत्ता शुद्धभावतः ॥ ४४ ॥

माद्दशैर्बुद्धिमान्द्यैश्च, यस्य कृपाकटाक्षतः ।
विशुद्धदर्शनं प्राप्य, प्राप्ता गुणाऽनुरागता ॥ ४५ ॥

यदीयनाममंत्रस्य, प्रभावः संसृतौ महान् ।
अनुभूतो मया पूर्णरूपेण नैकरूपतः ॥ ४६ ॥

त्वदीयचरणांभोजे, रथातुमीहे च सर्वदा ।
त्वदीयचरणानां च, सेवा जगति दुर्लभा ॥ ४७ ॥

अनन्तपुण्यसंपत्त्या, प्राप्तं च जैनशासनम् ।
प्राप्ता त्वदीयसेवा च, पूर्णभाग्योदये न वै ॥ ५८ ॥

त्वदुपकारबुद्धिश्च, महती मयि विद्यते ।
प्रतिकर्तुं न शक्तोऽस्मि, पुत्करोमि गुरो क्व च? ॥ ४९ ॥

स्वीक्रियतामिदं पुष्पं, मम भक्त्यनुरूपकम् ।
मदीया चेति याञ्चा वै, त्वत्पार्श्वे न वृथा भवेत् ॥ ५० ॥

यत्र यत्र परिच्छेदे, यत्किंचिद् वर्णितं मया ।
विषयप्रतिपाद्यं च, तदन्ते प्रतिपादितम् ॥ ५१ ॥

विवेचितमतो नैव, प्रस्तावनासु भो मया ।
तत एव च सर्वं तत्, ज्ञातव्यं बुद्धिशालिना ॥ ५२ ॥

या काचिदत्र त्रुटिः स्यात्, प्रेसदुरत्वदोषतः ।
शास्त्रविरुद्धरूपं च, यत्कृतं मन्दबुध्धितः ॥ ५३ ॥
तत्सर्वं साम्यभावेन, सूचनीयं विशेषतः ।
मिथ्या दुष्कृतता तत्र, दीयते शुद्धभावतः ॥ ५४ ॥

# आदर्श विभूति

( विजयधर्मसूरिचरित्रम् )

ॐ अर्हम्

नमो नमः श्रीप्रभुधर्मसूरये ।

## प्रथम प्रकरणम्

अनन्तज्ञानतायुक्तं, सम्पूर्णदोषवर्जितम् ।
अबाध्यशुद्धसिद्धान्तं, नरदेवेन्द्रपूजितम् ॥ १ ॥
अतिशयादिना युक्तं, प्रातिहार्येण भूषितम् ।
जगदीशं जगन्नाथं, सम्मेतशिखरे स्थितम् ॥ २ ॥
प्रणम्य पार्श्वनाथं तं, अन्यांस्तीर्थकरांस्तथा ।
गौतमादिमुनीन्द्रांश्च, हृदि निधाय सर्वदा ॥ ३ ॥
शान्तमूर्त्तिस्तपो मूर्तिः, तपोगच्छनभोमणिः ।
शासननायकश्चैव, युगप्रधानतायुतः ॥ ४ ॥
शुद्धोपदेशसंदेष्टा, वृद्धिचन्द्रमहामुनिः ।
तं नत्वा धर्मसूरीणां, चरित्रं कथ्यते मया ॥ ५ ॥

क्व चरित्रं गुरूणां तत्, निर्बुद्धिः क्व च मादृशः ?
तथापि त्वत्प्रसादेन, सर्वकार्यं च सेत्स्यति ॥ ६ ॥

विचारं तादृशं स्वान्ते, धृत्वा गुरुप्रसादतः ।
रचयामि समासेन, चरित्रं बोधहेतवे ॥ ७ ॥

तिर्यग्लोकस्य मध्यस्थे, जम्बूद्वीपे मनोहरे ।
भारते दक्षिणार्धे च, सर्वक्षेत्रविभूषणे ॥ ८ ॥

यत्र पवित्र सौराष्ट्रः, देशोऽस्ति सुप्रसिद्धिभाग् ।
भद्रजनसमाकीर्णः, सर्वदेशशिरोमणिः ॥ ९ ॥

शत्रुञ्जयं महातीर्थं, यत्र कुत्र न विद्यते ।
पञ्चदशसु क्षेत्रेषु, तादृक् तीर्थं न प्राप्यते ॥ १० ॥

अनन्तमुनिसंसिद्धाः, शत्रुञ्जये पदे पदे ।
रेणुका अपि तस्यैव, पूज्यास्तत्पादन्यासतः ॥ ११ ॥

तत्तीर्थनिकटे चैव, मधुमती महापुरी ।
महुवेत्यधुना ख्याता, समुद्रनिकटे स्थिता ॥ १२ ॥

अनेकाम्ररसालानां, आरामाश्च पदे पदे ।
नालिकेरादिवृक्षाणां, गणना नैव विद्यते ॥ १३ ॥

पुगीफलकदल्यादि, वृक्षेण परिशोभिता ।
लङ्काऽलकेऽपि तां दृष्ट्वा, एका च जलधौ गता ॥ १४ ॥

अपरा लज्जिता साऽपि, ऊर्ध्वगतिं समाश्रिता ।
श्रेष्ठपुरुषरत्नानां, निवासस्तत्र नो भवेत् ॥ १५ ॥

जावडभावडादीनां, जननी सा पुरी मता ।
शत्रुंजयादितीर्थस्य, उद्धारो विहितश्च यैः ॥ १६ ॥

चरमतीर्थनाथस्य, प्रसादोऽतिमनोहरः ।
यत्रैव विद्यते सा वै, कथं पूज्या न कथ्यते ? ॥ १७ ॥

जावडादिकभक्तेन, देशान्तरात्समानीता ।
जीवत्स्वामित्वनाम्नैव, ख्याता मूर्तिर्विराजते ॥ १८ ॥

भगवद्वृद्धभ्रात्रैव, नन्दिवर्द्धनकेन वै ।
निर्मापिता च तत्काले, सैवाऽद्यापि च राजते ॥ १९ ॥

प्रभावशालिनी मूर्त्तिः, वीतरागत्वदर्शिनी ।
दर्शनाद्दुरितध्वंसी, वन्दनादिच्छितप्रदा ॥ २० ॥

वसन्ति भिन्नमालाश्च[1], व्यवहारिशिरोभृताः ।
श्यामवत्सेति नाम्नैव, एकं ख्यातं कुटुम्बकम् ॥ २१ ॥

तत्कुले च सुताः पञ्चः, प्रेमचन्द्रात्मजाः खलु ।
प्रथमो हेमचन्द्रः स्याद्-द्वितीयो राजचन्द्रकः ॥२२॥

तृतीयो वेलचन्द्रश्च, लक्ष्मीचन्द्रश्चतुर्थकः ।
पञ्चमो रामचन्द्रः स्यात्-पञ्चैते गुणशालिनः ॥२३॥

रामचन्द्रस्तु सिद्धान्तः, ज्ञाता विज्ञशिरोमणिः ।
वयसा लघुभावेऽपि, ज्ञानेन सर्वतो महान् ॥ २४ ॥

१ श्रीमालाः

तद्भार्या कमलादेवी, शीलालङ्कारधारिणी ।
साच रामा शिरोरत्नं, कमलसमनेत्रभाग् ॥ २५ ॥
हृदये वीतरागस्य, धर्मो वसति सर्वदा ।
जिनेन्द्रदेवभक्तिश्च, जैनशासनरागता ॥ २६ ॥
नित्यं जिनगुणग्रामं, कुरुतो दम्पती खलु ।
संसारिसुखसम्बन्धात्, पुत्रः प्राक्परिजायते ॥ २७ ॥
नृसिंहेति कृतं नाम, स्वजनैर्मिलितैस्तदा ।
द्वितीयो मूलनक्षत्रे, पुत्रो जातश्च देवीतः ॥ २८ ॥
मूलचन्द्रेति तन्नाम स्वजनैः परिस्थापितम् ।
द्विजराजसमाऽऽस्यश्च, गजराजसमागतिः ॥ २९ ॥
रूपेण जितकामश्च, गुणेन सर्वतो गुणी ।
पञ्चवार्षिकसञ्जातः, जिनेन्द्रभक्तितत्परः ॥ ३० ॥
विद्याध्ययनकालं च, ज्ञात्वा पित्रैव बोधितः ।
किन्त्वज्ञानदोषेण, मनस्तत्र न जायते ॥ ३१ ॥
आवरणोदयेनैव, अज्ञानिजनसङ्गमात् ।
शालायां पाठलेशोऽपि, कदाचिन्न वितन्यते ॥३२॥
षोडशवार्षिको जातः, तथापि नैव शिक्षते ।
पित्र्यैवं शिक्ष्यमाणोऽपि, मनसि नैव धारयेत् ॥३३॥
इतश्चाध्ययने क्लेशः, द्युतकृतां समागमात् ।
सञ्जातो दैवयोगेन. द्यूतक्रीडा प्रवीणभाग् ॥ ३४ ॥

सर्वस्वं हारितं तत्र, ज्ञातं पित्रैव चान्यतः ।
गृहान्निष्कासितः पुत्रः, प्रियोऽपि सर्वथाऽप्रियः ॥ ३५ ॥
अन्यस्थानं समाश्रित्य, व्यापारः करणोद्यतः ।
तत्र स्वकीयकौशल्या—द्धनार्जनं करोति सः ॥ ३६ ॥
किञ्चिद्वित्तं च सम्प्राप्य, सन्तोष्य जनकादिकम् ।
अष्टादशवयस्कः सन्, स्वस्वान्ते परिचिन्तयेत् ॥ ३७ ॥
स्वार्थमूलो हि संसारः, वित्तं च स्वार्थकारणम् ।
वित्ताच्च मातरं हन्ति पितरं च धनात्तथा ॥ ३८ ॥
भगिनी भ्रातरश्चैव, सर्वे वित्तस्य पूजकाः ।
एवमालोचमानः, सन् नगरे परिभ्राम्यति ॥ ३९ ॥
साधवो दुःखहर्त्तारः, स्वार्थत्यागैकतत्पराः ।
दुःखदावाग्निमेघाभाः, विपद्वल्लिविनाशकाः ॥ ४० ॥
सर्वत्रशांतिदातारः, परमात्मैकध्यायकाः ।
तेषां दर्शनमात्रेण, साधुता हृदये विशेत् ॥ ४१ ॥
मूलचन्द्रस्य तत्काले हृदयं साधुतां भजेत् ।
वैराग्यवासनावृद्धि गता तस्य दिने दिने ॥ ४२ ॥
सर्वं च युग पतत्यक्त्वा, साधुतार्थं स गच्छति ।
भावनगरके ग्रामे, आगच्छति च शीघ्रतः ॥ ४३ ॥
शान्तमूर्त्तिस्तपोमूर्त्तिः, निर्लोभी साधुताजुषः ।
यमिवृन्देन पूज्यश्च, जगद्वन्द्यः सदासुखी ॥ ४४ ॥

धर्ममूर्त्तिर्गुणालीढः, त्यागिनां च शिरोमणिः ।
निरालस्योऽप्रमत्तश्च, कषायाच्च बहिर्मुखः ॥ ४५ ॥
दर्शनाद्दुरितं हन्ति, साम्यभावस्य पोषकः ।
वृद्धिचन्द्राभिधानश्च, सौभाग्यसेवधिः खलु ॥ ४६ ॥
स्वभाग्यपुण्यसम्भारं, तं दृष्ट्वा मूलचन्द्रकः ।
परितुष्यति स्वान्ते सः, पर्यालोचयते तदा ॥ ४७ ॥
यदि दीक्षां ददात्येषः, तदा मे सफलं जनु ।
अन्यथा भाग्यहीनानां, शिरोमणिरहं सदा ॥ ४८ ॥
एवं विचिन्त्य तत्रैव, गत्वा गुरुसमीपके ।
विधाय वन्दनाकार्यं, स्थित्वा गुरुं स पृच्छति ॥ ४९ ॥
यद्यहं धर्मयोग्योऽस्मि, दीक्षादानं ददातु मे ।
अनुकम्पां विधायेव, शिष्यस्त्वमिति कथ्यताम् ॥५०॥
गुरुणा कथितं तत्र, आज्ञा पित्रोश्च गृह्यताम् ।
विनाऽऽज्ञां विरतेर्दानं, नास्माभिः प्रविधीयते ॥५१॥
तद्वाक्यं श्रवणे श्रुत्वा, हृदि शोकः प्रजायते ।
मूलचन्द्रो निराशः, सन् एवं वदति तत्क्षणम् ॥५२॥
मात्रापित्रोश्च नेत्रेण, विहीनयोस्तयोः खलु ।
कथमाज्ञा प्रदानत्वं ? मद्विषये प्रजायते ॥ ५३ ॥
अतो व्याघ्रतटीन्यायः, ममाधुना समागतः ।
इतो मातापितॄणाञ्च, आज्ञादानप्रयोजनम् ॥ ५४ ॥

इतश्चक्षुर्विहीनत्वा-दाज्ञायाः सम्भवो न हि ।
कथं मे विरतेर्लाभः ? भविष्यतीति शोचति ॥ ५५ ॥

तत्काले मूलचन्द्रस्य, गवेषणा कृता बहु ।
तत्प्राप्तिर्दुर्लभा जाता, दुःखं च प्रचुरं तदा ॥ ५६ ॥

सम्पूर्णनगरे तत्र, विशोधनं कृतं किल ।
तथापि न मिलत्येष, चिन्ताऽतीव प्रवर्धते ॥ ५७ ॥

क्व गतः कं च पृच्छावः, आवाभ्यां किं वितन्यते ? ।
शोधनार्थाय ते सर्वे, मिलित्वा भावपत्तने ॥ ५८ ॥

तत्रैव नगरे श्रुत्वा, अत्रास्तीति विनिश्चितम् ।
गत्वा साधु समीपे च, दृष्टश्च मूलचन्द्रकः ॥ ५९ ॥

तं दृष्ट्वा मानसे तोषः, अतीव परिजायते ।
कथं समागतश्चात्र, इति पृच्छा कृता तदा ॥ ६० ॥

दीक्षाग्रहणभावेन, आगतः साधुसन्निधौ ।
न ददाति विनाज्ञां, तां आज्ञादानं प्रदीयताम् ॥ ६१ ॥

विज्ञप्ति मूलचन्द्रस्य, श्रुत्वा पित्रोश्च मानसे ।
दुःखाघातः समायातः, रुदन्ति बहवस्तदा ॥ ६२ ॥

येन केन प्रकारेण, सम्बोध्य मूलचन्द्रकम् ।
गृहं नीत्वा स्वकार्याय, ताभ्यां संयोजितस्तदा ॥६३॥

किन्तु तत्रापि तस्यैव, वैराग्यवासना परा ।
परिपुष्टा च सञ्जाता, वचनामृतसेकतः ॥ ६४ ॥

उपविश्य पितुः पार्श्वं, विज्ञप्तिं च करोति सः ।
अनुमतिस्तु तातस्य, मत्कार्ये हितकारिका ॥ ६५ ॥

मदीयं यदि कल्याणं, इच्छसि मानसे पितः ।
तदा शीघ्रं व्रताज्ञा च, दीयतां सुखहेतवे ॥ ६६ ॥

भवदुपकृतिं नैव, विस्मरामि कदाचन ।
पुत्रवचोऽमृतं पीत्वा, पितुश्च हृदये बहु ॥ ६७ ॥

आघातः परिजातोऽपि, धार्मिकज्ञान योगतः ।
कठीनं मानसं कृत्वा, पुत्रकल्याणहेतवे ॥ ६८ ॥

दीक्षाऽनुमोदनं कृत्वा, आशीर्वादं ददात्यसौ ।
विजित्य मोहसेनां च, जयध्वजं प्रघोषय ॥ ६९ ॥

भाषायामुक्तम्—

जीतनिशान चडावजो रे, मोहनी करी चकचूर ।
जेम संवत्सरदानथी रे, दारिद्र्य काढयुं दूर ॥
नमो नित्य नाथजी रे ॥ ७० ॥

लब्ध्वाऽऽशिषं पितुः, पार्श्वे हृदये परितुष्यति ।
हर्षाश्रूणि द्वयोर्नेत्रे, आगच्छति तदा खलु ॥ ७१ ॥

पित्राज्ञां च परिप्राप्य, गतः स भावपत्तने ।
गुरूणां निकटे गत्वा, दीक्षार्थं याचना कृता ॥७२॥

संघाऽऽज्ञाग्रहणायैव, व्याख्यानसमये तदा ।
एकत्रीभूतसङ्घस्य, अनुमतिस्तु प्रार्थिता ॥ ७३ ॥

योग्यजीवं परिप्राप्य, संघेनानुमतिः खलु ।
परीक्षाप्रविधायैव, दत्ता सहर्षप्रेमतः ॥ ७४ ॥
तत्काले विरतेर्दानमुहूर्त्तं च गवेषितम् ।
वैशाखशुक्लपञ्चम्याः, शुद्धं तदा समागतम् ॥ ७५ ॥
लग्नं निर्द्धारितं सर्वैः, अष्टाह्निकामहोत्सवः ।
प्रारब्धो वायणार्थं च, प्रजायते गृहे गृहे ॥ ७६ ॥
दीक्षादिने महोत्साहः, सर्वत्र पत्तने तदा ।
हस्तिरथादिकं सर्वं, सर्वाभरणभूषितम् ॥ ७७ ॥
वार्षिकदानदानार्थं, उपस्कृतं च तत्क्षणे ।
सामग्रीसकला तत्र, दीक्षार्थं सर्वसज्जिता ॥ ७८ ॥
वैरागिमूलचन्द्रेण, जिनेन्द्रदेवपूजिता ।
भक्तिभाववशेनैव, गुरूणां वन्दनं कृतम् ॥ ७९ ॥
सकलसंघसाक्ष्यं च, सर्वजीवक्षमापनम् ।
कृत्वा चादेशतां प्राप्य, दीक्षार्थं परिगच्छति ॥ ८० ॥
हस्त्यारोहणकं कृत्वा, वस्त्रालङ्कारभूषितः ।
अगणितनृनारीणां, समुदायेन वेष्टितः ॥ ८१ ॥
मञ्जुलवाद्यघोषेण, मञ्जुलगीतगानतः ।
वैराग्यपुष्पवर्षेण, गगनं गुञ्जितं तदा ॥ ८२ ॥
श्रावकश्राविकावृन्दैः, वन्द्यमानः पदे पदे ।
लब्ध्वा शुभाशिषं तेभ्यः, धन्यं स्वकं च मन्यते ॥ ८३ ॥

अनन्तपुण्ययोगेन, दीक्षाभागवती खलु ।
प्राप्यते नात्र संदेहः, सर्वैः तत्र प्रघोपितम् ॥ ८४ ॥

भवाब्धितरणे नौका, विपद्वल्लिविनाशिनी ।
कपायाग्निप्रदाहस्य, शान्तये नीरसन्निभा ॥ ८५ ॥

मोहरजो विनाशाय, वायुकार्यकरी मता ।
मायाक्षमाविभेदाय, हलसदृश--कार्यकृत् ॥ ८६ ॥

भवाटवीसमुल्लंघकरणे सार्थवाहिका ।
तादृग्भागवती दीक्षा, न कस्य परिमोददा? ॥ ८७ ॥

धन्यास्ते पुरुषा ज्ञेया, येषां स्वान्ते च सा खलु ।
त्रैलोक्यस्यैव साम्राज्यं, यत्प्रभावाच्च प्राप्यते ॥ ८८ ॥

जगद्वंद्या जगद्ध्येया, दीक्षा भागवती किल ।
तद्ग्रहणस्य वाञ्छाहि, येषां च हृदये न हि ॥ ८९ ॥

ते-नैव श्रावका ज्ञेया, ते तदाभासका मता ।
इत्येवं भावनां कृत्वा, प्रयान्ति सकला जनाः ॥ ९० ॥

पुरं धन्यं च मन्वाना, गुरूणामनुमोदकाः ।
मूलचन्द्रस्य जन्मत्वं, सफलं मन्वते जनाः ॥ ९१ ॥

हर्षाद्वार्षिकदानं च, ददाति पुष्कलं तदा ।
तद्धनं श्रावकाः सर्वे, पूरयन्ति सुनिश्चितम् ॥ ९२ ॥

प्रवर्धमानभावेन, दानं ददाति वार्षिकम् ।
गच्छतामानुपूर्वेण, दीक्षास्थानं समागतम् ॥ ९३ ॥

बहुमूल्यकवस्त्रेण, अलङ्कृतं च मण्डपम् ।
पताका वैजयन्त्यश्च, पञ्चरङ्गेण रञ्जिताः ॥ ९४ ॥

बद्धाश्च परितो जैनैः, सुवर्णतन्तुगुम्फिता ।
प्रेक्षकानां मनोभावं, सर्वत्र परिदर्शयेत् ॥ ९५ ॥

मध्ये सिंहासनं तत्र, शोभते सर्वथा खलु ।
सर्वसाधुत्ववृन्दानां, पूज्यत्वं परिसूचयेत् ॥ ९६ ॥

युगप्रधानता तत्र, सर्वथा परिराजते ।
शासननायकत्वं च, तिष्ठति तत्र किं ब्रूम ? ॥ ९७ ॥

तत्कालीन मुनीनाञ्च, आधिपत्यं गुरौ तथा ।
तेषामाज्ञा शिरोधार्या, सर्वसङ्घेन मन्यते ॥ ९८ ॥

तादृशः स गुरुः को यः, यस्मिन् सर्वं निगद्यते ।
वृद्धिचन्द्रो महात्माऽसौ तत्रैव परिराजते ॥ ९९ ॥

अनेक साधु वृन्देन, दीक्षादानाय चागतम् ।
तत्काले मूलचन्द्रोऽपि, समहोत्सवपूर्वकम् ॥ १०० ॥

आगतो मण्डपे तत्र, जय जयेति घोषतः ।
मण्डपं गुञ्जितं जातं, शब्दाद्वैतेन सर्वथा ॥ १०१ ॥

श्रीसङ्घेन समं तत्र, विनयानम्रगात्रतः ।
प्रविश्य मण्डपं सोऽथ, वंदनार्थं समागतः ॥ १०२ ॥

प्रदक्षिणां विधायैव, द्वादशावर्त्तवन्दनाम् ।
करोति शुभभावेन, निर्जरागुणपोषिकाम् ॥ १०३ ॥

माङ्गलिकप्रभोस्तुतेः, उच्चारणत्वमात्रतः ।
सर्वकोलाहलं शान्तं, जातं च तत्क्षणे खलु ॥ १०४ ॥

दीक्षाप्रदानकार्यं च, प्रारब्धं गुरुणा तदा ।
मोक्षदात्री क्रियायाश्च, श्रवणे ते समुत्सुकाः॥ १०५ ॥

समवसरणं तत्र, सुवर्णरजतादिजम् ।
मण्डपे तत्समानीय, स्थापितं गुरुसन्निधौ ॥ १०६ ॥

चत्वारः प्रतिमास्तत्र, स्थापिताः शुभभावतः ।
धूपदीपादिकं कृत्वा, छत्रचामरसंयुतम् ॥ १०७ ॥

जिनेन्द्रदेवपादानामग्रे, गत्वा च भावतः ।
चैत्यवन्दनकार्यादि, कृतं च स्थिरयोगतः ॥ १०८ ॥

विरतिसाधनं चैव, धर्मध्वजं क्रियाक्षणे ।
यदा दत्तं तदा तेन, विनम्रगात्रयोगतः ॥ १०९ ॥

अपूर्वदानदातारं, अपूर्ववस्तुलाभतः ।
प्रशंस्य शुभभावेन, नृत्यति शुद्धप्रेमतः ॥ ११० ॥

धन्योऽहं मम भाग्यानि, जाग्रति सर्वथा खलु ।
धर्मध्वजं कथं लेभे?, अन्यथा मोक्षकारणम् ॥ १११ ॥

चतुर्गतिषु कुत्रापि, मनुष्यस्य गतिं विना ।
तादृशी वस्तु नो लब्धा, अतो मे सफलं जनु ॥ ११२ ॥

हर्षाश्रूणि तदा तत्र, आगतानि स्वनेत्रतः ।
वैराग्यभावनां दृष्ट्वा, जातास्ते चानुमोदकाः ॥ ११३ ॥

धन्योऽयं यस्य चित्ते च, तादृग्वैराग्यवासना।
लघुवयसि सञ्जाता किं? ब्रूमस्तस्य जन्मनः ॥ ११४ ॥

अनुमोद्य तदाचारं, तत्क्षणे स्नानमण्डपे ।
नीत्वा स्नानादिकं सर्वं, कारितं सङ्घनायकैः ॥ ११५ ॥

गृहीत्वा साधुवेषं च, यदागतः स मण्डपे ।
जयेति शब्दपूर्वं च, साधुघोषः प्रजायते ॥ ११६ ॥

गुरुपार्श्वे समागत्य, सर्वसावद्यवस्तुनः ।
त्यागत्वद्योतिका शुद्धा, समभावप्रकाशिका ॥ ११७ ॥

सामायिकत्वरूपा सा, प्रतिज्ञा साधुवादिका ।
पाठोच्चारणमात्रेण, गुरुणा तत्र कारिता ॥ ११८ ॥

कृत्वा लोचादिकंकृत्यं, समस्तसङ्घसाक्षिकम् ।
विनिर्ममे शुभं नाम, सर्वेषां श्रुतिसौख्यदम् ॥ ११९ ॥

धर्मस्य विजयो यत्र, येन योगेन जायते ।
सान्वर्थं नाम तद्दत्तं, गुरुणा बहुप्रेमतः ॥ १२० ॥

धर्मविजयसञ्ज्ञातं, गुरुणामभिधानकम् ।
नामश्रवणमात्रेण, सर्वे जनाः प्रहर्षिताः ॥ १२१ ॥

वासक्षेपविधायैव, सर्वसङ्घजनैः समम् ।
दीक्षाक्रिया समाप्यैव, व्याख्यानं कृतवान् गुरुः ॥१२२॥

वैराग्यपोषकं सर्व–विषयव्रातनाशकम् ।
कषायवह्निदग्धानां, मायाऽटव्याश्च त्रासतः ॥ १२३ ॥

त्रसितसर्वजीवानां, अमृतसेकसदृशम् ।
श्रेष्टिचतुर्वधूनां च, दृष्टान्तेन दृढीकृतम् ॥ १२४ ॥

परिसमाप्तव्याख्याने, वन्दनं सर्वसाधूनाम् ।
कृत्वा स्थितो गुरोः पार्श्वे, सङ्घेन परिवन्दितः ॥१२५॥

पश्चादीशानकोणेऽसौ, स्थित्वा ध्यानं करोत्यलम् ।
भक्तिभावं च साधूनां, उपोसितः तनोत्यसौ ॥ १२६ ॥

सर्वेषां प्रेमभावत्वं, प्राप्नोति गुरुयोगतः ।
विनयं तादृशं दृष्ट्वा, हृदि प्रमोदमुद्वहेत् ॥ १२७ ॥

रात्रिं निर्गम्य तत्रैव, आवश्यकविधानतः ।
स्वाध्यायपौरुषीं कृत्वा, संस्तारकत्य पौरुषीम् ॥ १२८ ॥

भणित्वा योग्यकालेऽसौ, गुरुणा सह चोत्थितः ।
आवश्यं प्रतिलेख्यादि, अप्रमत्तात्करोत्यसौ ॥ १२९ ॥

यादृशं गुरुणा दत्तं, अभिधानं सुयोगतः ।
सान्वर्थं तादृशं कार्यं, करोति सुविवेकतः ॥ १३० ॥

प्रोढोत्सवविधानेन, सङ्घैःपुरे प्रवेशितः ।
उपाश्रयं च सम्प्राप्य, प्रवेशाज्ञा च याचिता ॥ १३१ ॥

तत्र प्रविश्य व्याख्यानं, धर्मभावस्य पोषकम् ।
कृत्वा तपस्वि साधूनां, पारणं कारितं खलु ॥ १३२ ॥

ततः साधुक्रियाऽऽख्यानं, दापयति गुरुस्तदा ।
साध्वाचारस्य शिक्षायै, शैक्षसाधुनियोजितः ॥ १३३ ॥

श्रीसंघनायकगुरूणां चरित्रम् ।
वितन्यते भावप्रवृद्धियोगतः ॥
वैराग्यवासस्य प्रबोधकारणम् ।
दीक्षाप्रदानादिकं च कीर्त्तितम् ॥ १३४ ॥

गौर्जराभिधदेशेषु, वटप्रद्रीयराज्यके ।
लींचग्रामे समुत्पन्नै-र्मंगलविजयैः कृतः ॥ १३५ ॥

धर्मे प्रपूर्ण भगवान्, दृढतत्त्ववित्त्व,
मायादि दोष रहिता, व्रतरागरक्ता ।
अम्बेति मातृगुणभृद्, अभिधा यदीया,
तत्पुत्र चित्त सुखदैर्रचितः स ग्रन्थः ॥ १३६ ॥

॥ इति शास्त्रविशारद–जैनाचार्यश्रीविजयधर्म-
सूरीणां जीवनरेखान्तर्गत नगरी तदुत्पत्ति
कुल जातिमातापित्रादिवर्णन दीक्षा-
प्रदानानुज्ञाप्रदानकथनपूर्वक भाव-
पत्तनस्य शान्तमूर्त्ति श्रीवृद्धिचन्द्र-
गुरुपार्श्वे दीक्षाग्रहणकार्यादि-
वर्णननाम प्रथमः परिच्छेदः
समाप्तः

# द्वितीय प्रकरणम्

ग्रहणासेवना शिक्षा, ग्रहणार्थं च प्रेरितः ।
परन्तु बुद्धिमान्द्येन, मुखे नायाति किञ्चन ॥ १ ॥

प्रतिक्रमणपाठस्य, कण्ठस्थकरणे किल ।
वर्षद्वये च सञ्जाते, पूर्णमावश्यकं तथा ॥ २ ॥

नैपुण्यं विनये यादृक्, तादृगध्ययने नहि ।
सर्वसाधुमहाभागा, हास्यं कुर्वन्ति सर्वदा ॥ ३ ॥

चछ शपसकाराणां, उच्चारणं न तादृशम् ।
भेदभावस्य लेशोऽपि, गुरुषु नैव विद्यते ॥ ४ ॥

स्तुतिजल्पनकाले च, हास्यरसः प्रजायते ।
अन्येषां हास्यमोहः स्याद्गुरुणां कर्मदोषता ॥ ५ ॥

स्वदृष्टौ सा समायाति, खेदलेशो न किञ्चन ।
यादृशं कर्मबद्धं तत्तादृक् फलं तु भुज्यते ॥ ६ ॥

निन्हवादिकरणेनैव, ज्ञानावारं च वध्यते ।
उदये च यदाऽऽयाति, तदा शोकः कथं भवेत् ? ॥ ७ ॥

यादृग् मया कृतं कर्म, फलं तादृक्तु भुज्यते ।
पूर्वभवोत्तमर्णस्य, प्रदाने ग्लानिता कथम् ? ॥ ८ ॥
इत्येवं शमभावेन, आत्मानं भावयन् सदा ।
कस्यचिन्नतु हास्याद्युपरिध्यानं करोत्यसौ ॥ ९ ॥
बुद्धिमान्द्यस्वभावेऽपि, पठनेच्छा प्रवर्धते ।
व्याकरणादिशास्त्रस्य, पठने गुरुसन्निधौ ॥ १० ॥
दर्शिता स्वीय जिज्ञासा, हर्षाद्गुरुश्च भाषते ।
पठ शब्दादिशास्त्राणि, स्वीयेच्छा सफलीकुरु ॥ ११ ॥
सारस्वतीय–शाब्दीय–शास्त्राध्ययनकार्यकम् ।
यदा करोति तत्काले, जल्पन्ति साधवः खलुः ॥ १२ ॥
मूसलारोपणं धर्म–विजयेन वितन्यते ।
जैनशासनधराऽनेनो–ह्यते नव्यसाधुना ॥ १३ ॥
तादृग्हास्यवचः श्रुत्वा, गुरुः साधूंश्च प्रोचिवान् ।
भवदीयं वचः सर्वं, सफलं प्रजनिष्यति ॥ १४ ॥
तत्पादपद्मचिह्नानि, हस्तस्य लक्षणानि च ।
सामुद्रिकाऽनुसारेण, सूचन्ते धर्मधूरिताम् ॥ १५ ॥
शासनस्तम्भरूपोऽयं, भविष्यति च योगतः ।
एवं गुरोर्वचः श्रुत्वा, साधवो विस्मिताः समे ॥ १६ ॥
धर्मविजयभाग्यानि, जाग्रति सर्वथा खलु ।
अन्यथा च कदाऽप्येवं, निश्चितं नो वदेद्गुरुः ॥ १७ ॥

गुरुमुखात्पतद्वाक्यं, सर्वं नूतनसाधुना ।
हृदये धार्यते स्वस्य, मत्वा हितकरंदृढम् ॥ १८ ॥

प्रतिज्ञा गुरुसेवायाः, सर्वदा शुभभावतः ।
प्राणैःकण्ठगतैस्तेन, न त्यक्तव्या कृतेति वै ॥ १९ ॥

वैयावृत्यं च साधूनां, आहारभैषजादिकम् ।
ग्रामाच्छुद्धं समानीय, कार्यते शुभभावतः ॥ २० ॥

ग्लानावस्थासु सर्वत्र, सर्वथा भक्तिभावना ।
स्वकीयकर्मनाशाय, वितनोति स साधुराट् ॥ २१ ॥

घण्टात्रयी गुरूणां च, भक्ती रात्रौ विधीयते ।
अन्यापि वृद्धसाधूनां, देहस्य शुश्रूषा सदा ॥ २२ ॥

तादृशं सर्वकर्त्तव्यं, अप्रमत्तेन तन्यते ।
पठनादिस्वकार्यं च, ध्यानपूर्वं विधीयते ॥ २३ ॥

रात्रौ स्वाध्यायतां कुर्वन्, गुरुभक्तिक्षणे खलु ।
यदा मीलति पाठस्य, कालस्तदा करोत्यसौ ॥ २४ ॥

गुरुसेवाव्रतं तेन, धारितं दृढप्रेमतः ।
पाठाध्ययनकार्यं च, प्रत्यहं प्रविधीयते ॥ २५ ॥

इत्थेवं क्रियमाणेन, ज्ञानावरणकर्मणाम् ।
क्षयोपशमसद्भावे, बुद्धिश्च परिवर्धते ॥ २६ ॥

पूर्वकाले यदा चैक—श्लोकस्य पठनं महत् ।
कष्टदं मानसे चाभूदधुना प्रेमभावतः ॥ २७ ॥

पञ्चत्रिंशच्च श्लोकानां, पठनं सुलभं मतम् ।
प्रवर्धमानबुद्धीनां, वशेनैव प्रजायते ॥ २८ ॥
श्लोकानां शतपर्यन्तं, पठनं तेन तन्यते ।
तादृशबुद्धिचातुर्यं, दृष्ट्वा च शान्तमूर्तिना ॥ २९ ॥
हृदये शोचितं सर्वं, सर्वसाधुशिरोमणिः ।
भविष्यतीति निश्चित्य, मस्तके हस्तदापनम् ॥ ३० ॥
विधाय प्रोच्यते तत्र, तव भाग्यानि जाग्रति ।
सर्वसाधुशिरोरत्नं, शासनोन्नतिकारकः ॥ ३१ ॥
भविष्यति न सन्देहः, पूर्वनिर्णीतलक्षणात् ।
अधुना बुद्धियोगेन, सर्वं तन्निश्चितं मया ॥ ३२ ॥
गुणज्ञाः साधवो ये वै, कुर्वन्ति च गुणस्तुतिम् ।
अन्ये माध्यस्थभावं च, धारयन्ति हि सर्वदा ॥ ३३ ॥
गुणद्वेषि मनुष्याणां, नागच्छन्ति गुणा ननु ।
दोषभावं विधायैव, प्रचारयन्ति दोषताम् ॥ ३४ ॥
आशीर्वादं गुरोर्लब्ध्वा, मनसि परितुष्यति ।
साधुवादस्य सम्प्राप्तिः, धन्यानामेव जायते ॥ ३५ ॥
अनुत्सेकस्वभावेन, स्वकार्ये न प्रमादता ।
अप्रमत्तस्वभावेन, स्वाध्यायादिरतोत्यना ॥ ३६ ॥
इत्येवं क्रियमाणेन, कालस्तु गतवान् खलु ।
शरीरे रोगबाहुल्यं, गुरूणां परिजायते ॥ ३७ ॥

लघुबन्धुर्मुनीन्द्रोऽसौ, आत्मारामः समागतः ।
चातुर्मासं विधायैव, नगरे पादलिप्तके ॥ ३८ ॥
तत्रैवयात्रिकैर्लोकैः, आचार्यत्वे नियोजितः ।
तादृशं च पदं प्राप्य, आगतो भावपत्तने ॥ ३९ ॥
आत्मारामसुनिर्नाम, ढुंढकैः परियोजितम् ।
तपोगच्छे समायाते, आनन्दविजयान्तकम् ॥ ४० ॥
विजयानन्दसूरित्वं, जातमाचार्यस्थानके ।
ततो विहृत्य चात्रैव, भावपूर्यां समागताः ॥ ४१ ॥
बृहद्बन्धुत्वभावेन, पूज्याः श्रीवृद्धिचन्द्रकाः ।
तेषां वन्दनकार्याय, आगता सूरयस्तदा ॥ ४२ ॥
आगतिर्लघुबन्धूनां, व्याख्याने परिज्ञापिता ।
श्रुत्वा सङ्घैर्महोत्साहः, दर्शितस्तत्र प्रेमतः ॥ ४३ ॥
प्रवेशोत्सवता चैव, गुरूपदेशयोगतः ।
कारितः शुभभावेन, अन्येषां बोधिहेतवे ॥ ४४ ॥
विजयानन्दसूरीशाः, आगत्य वृद्धिचन्द्रकम् ।
प्रदक्षिणां विधायैव, द्वादशावर्तवन्दनाम् ॥ ४५ ॥
यदा करोति तत्काले, वृद्धिचन्द्रमहात्मना ।
प्रोक्तमाचार्यवर्योऽसि, कथं करोषि वन्दनाम् ? ॥ ४६ ॥
प्रोक्तं विजयपूर्वेण, आनन्देन च तत्क्षणे ।
आचार्यो यात्रिकेनैव, श्रावकानां कृतः खलु ॥ ४७ ॥

सदैव भवतां शिष्यः, ज्ञातव्यः शुद्धभावतः ।
वन्दनाया न कार्योऽपि, अन्तरायः कदाचन ॥ ४८ ॥
भवादृक् पूज्य साधूनां, वन्दना दुर्लभा किल ।
पुण्ययोगेन सम्प्राप्ता, मादृशैर्मुच्यते कथम् ? ॥ ४९ ॥
अतोऽनुज्ञा प्रदातव्या, वन्दनादि विधानके ।
तादृशं वचनं श्रुत्वा, जाता पूज्याः प्रमोदिनः ॥ ५० ॥
ततोऽतीव सहर्षेण, सूरिणा वन्दना कृता ।
परस्परं च बन्धूनां, धर्मस्नेहः प्रवर्धते ॥ ५१ ॥
वृद्धिचन्द्रसदृक्पूज्या, तादृशाः क्व च सूरयः ।
क्वाधुना मुनयस्तेषां, निन्दकाः पापपोषकाः ॥ ५२ ॥
सम्यक्त्वशल्यकोद्धार, नामकं पुस्तकं कृतम् ।
तत्र कटुकशब्दाश्च, वृद्धिचन्द्रेण शोधिताः ॥ ५३ ॥
प्रथमादर्शग्रन्थेषु, संशोधनोपकारता ।
लिखिता प्राक् च तन्नाम, निष्कासितं ततः परम् ॥५४॥
पाश्चालेषु च प्राधान्यं, विजयानन्दसूरीणाम् ।
काठियावाडदेशेषु, वृद्धिचन्द्रमहात्मनाम् ॥ ५५ ॥
मूलचन्द्रस्य मुख्यत्वं, राजनगरकादिषु ।
नीतिविजयसाधूनां, सुरतादिप्रदेशके ॥ ५६ ॥
धर्मप्रचारकार्याय, प्राधान्यं परिशोभते ।
मिथ्यात्वशल्यवस्तूनां, प्रवेशो यत्र नो भवेत् ॥ ५७

साधूनां नैव संक्लेशः, कुत्रापि परिदृश्यते ।
विशुद्धप्रेमभावश्च, सर्वत्र दृश्यते खलु ॥ ५८ ॥
अधुना प्रेमभावस्तु, सर्वथा प्रपलायितः ।
शासनादिकपक्षेण साधुसम्पो विनाशितः ॥ ५९ ॥
मामकीया इमे चैव, वन्दनीया अतो मताः ।
परकीया इमे ज्ञेया, तेषां च नैव वन्दना ॥ ६० ॥
कदाचिद्दैवयोगेन, प्रसङ्गः परिजायते ।
फेटावन्दनकार्यं च, गृहस्थेन विधीयताम् ॥ ६१ ॥
साधुभिस्तादृशी नैव, वन्दना क्रियते खलु ।
अन्येषां वन्दना कार्ये, पापं च परिजायते ॥ ६२ ॥
तादृशी मान्यता यत्र, धर्मभावः कुतो भवेत् ? ।
यत्र विशुद्धचारित्रं, तत्रैव वन्दना खलु ॥ ६३ ॥
स्वकीय–परकीयत्वं, दृश्यते च पदे पदे ।
सुसम्पशान्तिभावस्य, यत्र दत्ता तिलाञ्जलिः ॥ ६४ ॥
पक्षव्यामोहता यत्र, यत्र सोसायटीयता ।
शुद्धाशुद्धत्वभावस्य, विचारे न प्रयोजनम् ॥ ६५ ॥
भ्रष्टाभ्रष्टविचारो न, मद्वाक्ये शुद्धसत्यता ।
गुणानुरागता नैव, यत्र काचिच्च विद्यते ॥ ६६ ॥
किन्तु दुराग्रहो यत्र, तत्र धर्मस्तु दुर्लभः ।
शुद्धचारित्रता यत्र, यत्र गुणानुरागता ॥ ६७ ॥

तत्रैव शुद्ध धर्मः स्यादन्यत्र नैव विद्यते ।
प्रभोराज्ञानुसारेण, प्रवृत्तिर्यत्र जायते ॥ ६८ ॥
तत्रैव संवरूपत्वं, अन्येषु चास्थिसञ्चयः ।
दम्भत्वं यत्र सर्वत्र, पदे पदे च दृश्यते ॥ ६९ ॥
तत्र कथं सुसाधुत्वं, कथ्यते जैनधर्मतः ।
अतो व्याजं परित्यज्य, शुद्धसरलभावतः ॥ ७० ॥
सुसंघकरणे स्वीया, शक्तिः सदा नियुज्यताम् ।
विशुद्धशक्तिलाभोऽपि, अपूर्वपुण्ययोगतः ॥ ७१ ॥
कार्यं कर्त्तरि कृत्यं नो, शुचिकार्यं विधीयताम् ।
तत्रैव धर्मलाभः स्यादन्यस्मिन्दुर्लभो भवेत् ॥ ७२ ॥
धन्या ये वृद्धिचन्द्राद्याः, विजयानन्दसूरयः ।
महात्म मूलचन्द्राद्याः, सर्वे ते धर्मपोषकाः ॥ ७३ ॥
आधुनिकास्तु संघस्य,सर्वथोच्छित्ति कारकाः ।
साध्वाभासाश्च ते ज्ञेया, धर्महेलनहेतुतः ॥ ७४ ॥
प्रासङ्गिकं च तत्प्रोक्तं, प्रकृतमनुकथ्यते ।
वृद्धिचन्द्रगुरूणां च, देहोऽपि जीर्णप्रायकः ॥ ७५ ॥
रोगाक्रान्तिसमायोगात्सर्वे शिष्याः समागताः ।
दृष्ट्वा च तादृशं भावं, हृदि दुःखं प्रजायते ॥ ७६ ॥
गुरुस्तु साम्यसद्भाव–पोषकं शरणादिकम् ।
समाश्रित्य च भैषज्यं, कारयति न किञ्चन ॥ ७७ ॥

साधुसंघेन चोक्तेऽपि, मानसे नैव रक्षितम् ।
धर्मौषधसहापानं, पीबति शुद्धभावतः ॥ ७८ ॥

नैकभिषग्वरास्तत्र, सेवाकार्ये समागताः ।
राजाऽनुज्ञानुभावेन, अन्ये केचित्समागताः ॥ ७९ ॥

उपचाराय विज्ञप्तिः, कृतास्तैः सर्वसज्जनैः ।
मानिता नैव केषांचित्, विशुद्धधर्मभावतः ॥ ८० ॥

धर्मरसायनं पीत्वा, सर्वैः सह क्षमापनम् ।
कृत्वा च सर्वसाधूनां, हितशिक्षा विधीयते ॥ ८१ ॥

परस्परं च संक्लेशः न कार्यो भो कदाचन ।
प्रेमभावस्तु सर्वत्र, सर्वैः सह वितन्यताम् ॥ ८२ ॥

मिलित्वा सर्वशिष्यैश्च, गुरूणां वन्दनं कृतम् ।
स्वापराधदुरीकारे, मिथ्यादुष्कृच्च याचितम् ॥ ८३ ॥

साश्रुनेत्रेण सर्वेते, सुशिष्याः प्रेमभावतः ।
शुश्रुषां गुरुदेवस्य, कुर्वन्ति चाप्रमादतः ॥ ८४ ॥

पूर्वमुनिवराणां च, भावना हृदि जायते ।
धन्यास्ते स्कन्दकाद्याश्च, सर्वमुनिमनोहराः ॥ ८५ ॥

निजचर्मसमुच्छेदे, ग्लानिः काचिन्न नो भवेत् ।
प्रत्युत चोपकारं च, मन्यते हृदि सर्वथा ॥ ८६ ॥

मोक्षसहायरूपाणां, दोषः कथं निगद्यते ।
अहो ते बान्धवा ज्ञेयाः, संसारोदधितारणे ॥ ८७ ॥

अवन्तिसुकुमालाद्याः, धन्यास्ते मुनयः खलु ।
जम्बुकैः खाद्यमानेऽपि, दुःखं कुर्वन्ति नो कदा ॥८८॥
तत्कुले परिजातानां, मादृशानां कथं भवेत् ? ।
रोगेणाक्रम्यमाणानां, दुःखानामवकाशता ॥ ८९ ॥

जन्मदुःखं जरादुःखं, मृत्युदुःखं पुनः पुनः ।
संसारे भ्रम्यमाणैश्च, जीवैः प्राप्तमनन्तशः ॥ ९० ॥
नारकदुःखताऽग्रे वै, इदं दुःखं न किञ्चन ।
तदपि बहुशः प्राप्तं, अतो दुःखं न गण्यते ॥ ९१ ॥
सर्वजन्तून्परिक्षाम्य, परिक्षाम्य मुनींस्तथा ।
अनशनं विधायैव, गुरवोऽपि दिवं गताः ॥ ९२ ॥

पण्डितमृत्युसद्भावे, विना वैमानिकी गतिम् ।
भविष्यति च नान्यापि, इत्येवं मन्यते दृढम् ॥ ९३ ॥
गुरूणां स्वर्गवासश्च, शिष्याणां दुःखदो मतः ।
तत्रस्य सर्वसंवस्य, अतीवदुःखदायकः ॥ ९४ ॥
येन सेवा व्रतं चैव, गृहीतं बहुप्रेमतः ।
गुरुविरहता तस्य, अतीव दुःखदा मता ॥ ९५ ॥
अहो ! मे मन्दभाग्यानि, मुक्त्वा मां क्व गता प्रभो ? ।
उपदेशामृतस्यैव, पानं मीलति मे कदा ? ॥ ९६ ॥
धर्मविजय ! त्वागच्छ, अत्रेदं कुरु कार्यकम् ।
इति वक्षति को मां तत्र , शिक्षां दास्यति कः खलु ? ॥९७॥

आवश्यकक्रियाकांडे, प्रमादो यदि मे भवेत् ।
वारयिष्यति को देव ! ततोऽपि मम सर्वथा ॥ ९८ ॥

प्रेरयति शुभे योगे, को मेऽथ हितचिन्तकः ।
मम कल्याणमार्गस्य, द्रष्टा न कोऽपि विद्यते ॥ ९९ ॥

अतोऽहं क्व च गच्छामि, किं वदामि करोमि किम् ?
अद्यैव मेऽपि सर्वस्वं, गतं च गुरुणा सह ॥ १०० ॥

भगवन् ! चैकवारं त्वं, आगत्य हितदं वद ।
चिन्ता न कापि कर्त्तव्या, धर्मयोगे स्थिरी भव ॥१०१॥

वदत्येवं च वाक्यं चेत्तदा तोपस्तु जायते ।
अन्यथा सर्वथाऽशान्तिः, नागच्छति पदे पदे ॥१०२॥

स्वर्गे गन्तु यदीच्छा चेत्तदा कथं च दीक्षितः ?
शिक्षादापनकाले च, स्वर्गे प्रस्थानकं कथम् ?॥१०३॥

उपालम्भ्यैव स्वान्तेन, पश्चाद् विचारितं तदा ।
केऽपि कस्यापि नो सन्ति, आगता ये च गामिनः ॥१०४॥

मृत्युनिरोधसामर्थ्यं, कस्यापि नैव दृश्यते ।
तीर्थङ्करा गणाधीशाः देवाश्चचक्रवर्त्तिनः ॥ १०५ ॥

कालेन कवलीभूता, दृश्यन्ते ते गता न हि ।
अहो मोहस्य साम्राज्यं, स्वार्थभावेन चिन्तितम् ॥१०६॥

गुरुणा यादृशं दत्तं, कोऽपि तादृग्न दास्यति ।
मोक्षकारणभूतानां, रत्नानां शुभदानतः ॥ १०७ ॥

किं किं दत्तं न तेनाऽपि, उपालब्धः कथं मया।
तेषां चोपकृतिर्नैव, विसर्त्तव्या कदाचन ॥ १०८ ॥
यदि विस्मियते भ्रान्त्या, तदा कृतघ्नता मम।
अनन्तकालिकी भ्रान्तेः, वारकास्तारका इमे ॥१०९॥
भवादृग्गुरवश्चैव, न भूता भाविनो न च।
मादृशजडरूपाणां, हस्तदानेन तारकाः ॥ ११० ॥
मातरः पितरस्तेऽपि, सर्वे स्व-स्वार्थचिन्तकाः।
परमार्थत्वभावेन, चिन्तका गुरवो मताः ॥ १११ ॥
भवतां सुखसाम्राज्यं, शीघ्रं मीलतु सर्वथा।
एवं शासनदेवाग्रे, मदीया प्रार्थना खलु ॥ ११२ ॥
वैराग्यवासना योगाद्गुरुणा मानसं निजम्।
चालितं खेद भावाच्च, संयमे परियोजितम्॥ ११३ ॥
पश्चात्क्रिया गुरूणां च, क्रियते साधुभिस्तदा।
हृदि शोकस्य सद्भावः, सर्वेषां परिजायते ॥ ११४ ॥
संघेन जलमादाय, विलेपनपुरःसरम्।
स्नानादिकं विधायैव, वस्त्रादि परिधापितम् ॥११५॥
श्रीसंघहृदयेनैव, तदा शोको न माति वै।
श्रीसंघनायकाश्चैव, अस्मान्मुक्त्वा गताः खलु॥११६॥
साश्रुनेत्रेण संघेन, स्नानादिकसमाक्रियाम्।
कृत्वा विमानसामग्रीं, तत्क्षणे तत्पराः समे ॥ ११७॥

बहुमूल्यविमाने च, स्थापिता गुरवस्तदा ।
अनेक वाद्यघोषेण, वैराग्यपोषकेन च ॥ ११८ ॥

उपाश्रयाच्च निष्कासः, गुरूणां श्रावकैः कृतः ।
मञ्जुलैर्जयताद्घोषैः, जय भद्रेति घोषतः ॥११९॥

अश्रुपूरितनेत्रैश्च औदासीन्यं च सर्वथा ।
सूचयद्भिर्जनैः सर्वैः विमानं धारितं तदा ॥ १२० ॥

सुवर्णरूप्यकाद्यं च, धान्यानां शकटानि च ।
धूपदीपादिकं सर्वं, तत्रानीतं च भावतः ॥ १२१ ॥

चन्दनघृतकुम्भादि—कर्पूरतगरादिकम् ।
सर्वानीतं विवेकेन, अपूर्वशकटं तदा ॥ १२२ ॥

दर्शनार्थं च सर्वे ते, भावपत्तनवासिनः ।
राजनगरमुख्याश्च, भावुकाश्च समागताः ॥ १२३ ॥

तख्तसिंहमहाराजै—रागत्य भावपूर्वकम् ।
गुरूणां दर्शनं कृत्वा, मुखाच्च कथितं तदा ॥ १२४ ॥

अस्मन्नगरमद्यैव, जातं पुण्यविहीनकम् ।
अहो मदीयभाग्यानि, गतानि चाद्य सर्वथा। १२५॥

एवं विचिन्त्य शोकेन, हृदयं परिपूरितम् ।
नत्वा पश्चाद्गताः स्थाने, एवमनेकदर्शकाः ॥१२६॥

आगत्य वन्दनां कृत्वा, स्व—स्व—स्थाने गताः समे ।
विमानं नगरे तस्मिन्, सर्वत्र भ्रामितं तदा ॥ १२७ ॥

भ्रमित्वा दाह भूम्यां च, स्थापितं सङ्घसज्जनैः ।
चितां विधाय दाहार्थं, चन्दनं प्रगुणी कृतम् ॥१२८॥
अग्निसंस्कारकार्यं च, स शोकेन विनिर्मितम् ।
घृतकर्पूरसामग्री, सर्वा तत्रैव क्षेपिता ॥ १२९ ॥
पूर्णसंस्कारसञ्जाते, कुर्वन्ति स्नानसत्क्रियाम् ।
उपाश्रये समायान्ति, कृत्वा संस्कारकार्यकम् ॥१३०॥
देववन्दनकार्याय, सङ्घस्तत्र समागतः ।
तेन सहैव तत्कार्यं, सर्वैश्च मुनिपुंगवैः ॥ १३१ ॥
कृत्वा च देशनादानं, संसारासारसूचकम् ।
गम्भीरमंजुलैर्घोषैः, कारितं वृद्धसाधुना ॥ १३२ ॥
अहो असारसंसारे, न कोऽपि शरणं प्रभो ! ।
विना देवगुरुं चैव, विद्यते न जगत्रये ॥ १३३ ॥
यादृशं गुरुदेवेन, शासनं परिरक्षितम् ।
सुसंपशान्तिसद्भाव, यादृशो येन वर्धितः ॥ १३४ ॥
तादृशकार्यकर्त्तव्ये, समर्थः कोऽपि नो भवेत् ।
हस्तिभिर्हस्तिभारत्वं, ऊह्यते नैव गर्दभैः ॥ १३५ ॥
अस्मादृशां जनानां च, उपरि सङ्घभारता ।
क्षिमाऽपि नोह्यतेऽस्माभिः, तादृक्शक्तिवियोगतः ॥१३६॥
मासेन आगताः सर्वे, उपदेशक्षणे खलु ।
सम्मील्य सर्वे कार्यं च, कुर्वन्ति प्रेमभावनः ॥१३७॥

पठनं पाठनं चैव, स्वाध्याय ध्यानसत्क्रियाम् ।
साधूनां दिनचर्यां च, कुर्वन्ति सोपयोगतः ॥१३८॥
मण्डलिसप्तकं चैव, सप्तैव चैत्यवन्दनाम् ।
चतुः कृत्वस्च स्वाध्यायं, कुर्वन्ति साधुभिः सह ॥१३९॥
नियमरूपतः सर्वं, कुर्वन्ति स्वीयकार्यकम् ।
सुसंपप्रेमवृद्धिश्च, सञ्जाता धर्मयोगतः ॥ १४० ॥
मुख्यैकादशशिष्याः स्युः, प्रशिष्या वहुला मता ।
साधु संदोह वाहुल्यं, आज्ञानुकूलवर्तकम् ॥ १४१ ॥
अधुना साधुसंदोहः, एकशताधिकं तथा ।
पञ्चाशदुपरिष्टाच्च, विद्यन्ते भारतेखलु ॥ १४२ ॥
गुरूणां विरहं ज्ञात्वा, विचारः क्रियते तदा ।
एकदिनं न स्थातव्यं, जाता चैवं हि भावना ॥१४३॥
षड्वर्षगुरुसेवायां, स्थिताश्च वहुप्रेमतः ।
ज्ञानध्यान सुभक्तीनां, प्राप्तलाभः सुयोगतः ॥ १४४॥
इन्दुनिधिश्च चत्वारि, शरणानि च वाटिकाः ।
ब्रह्मचर्यस्य ज्ञातव्याः, गुरूणां स्वर्गवासता ॥१४५॥
सिद्धाचलस्य यात्रार्थं, विहारः प्रथमः कृतः ।
तत्र गत्वा महातीर्थे, यात्रा कृता च भावतः ॥१४६॥
कर्मणां निर्जरार्थं च, भावना भाविता वहु ।
अहो. मे भाग्यवाहुल्यं अतो यात्रा कृता मया ॥१४७

हिमविजय वन्धूनां योगे निम्बपुरे गताः ।
कञ्चुकी च यथा सर्पैः, त्यज्यते शीघ्रमेव हि ॥ १४८ ॥

त्यक्त्वा भावपुरं तेन, गम्यते गुरुणा ततः ।
लीम्बडी नगरस्यैव, भाग्यानि खलु जाग्रति ॥ १४९ ॥

आगमनं गुरोर्ज्ञात्वा, सङ्घोत्साहः प्रवर्धते ।
वाद्यादि सर्वसामग्रीं, गृहीत्वा सङ्घसत्तमैः ॥ १५० ॥

गुरोः पुरप्रवेशाय, सम्मील्य ते समागताः ।
सम्पूर्णनगरे भ्रान्त्वा, उपाश्रये हि चागताः ॥ १५१ ॥

सङ्घाज्ञां च परिप्राप्य, प्रवेशस्तैर्वितन्यते ।
मङ्गलाचरणं श्रुत्वा, प्रोत्साहिताश्च श्रावकाः ॥ १५२ ॥

गुरूणां पादन्यासेन, धन्यं मन्यामहे सर्मे ।
चातुर्मासस्य विज्ञप्तिः, सङ्घेनैव कृता खलु ॥ १५३ ॥

अतीवभावनां ज्ञात्वा, गुरुणा स्वीकृता तदा ।
प्रत्यहं देशनां तत्र, दत्वा साम्यत्ववर्धिनीं ॥ १५४ ॥

संवेगपोषिका सा वै, देशना धर्मज्ञापिका ।
तस्याश्चैव प्रभावेन, धर्मकार्येषु तत्पराः ॥ १५५ ॥

सञ्जाताः श्रावकाः सर्वे, श्राविका अपि तत्क्षणे ।
धर्मध्यानं च कुर्वाणा, दृष्टव्या धर्मभावतः ॥ १५६ ॥

सर्वे व्यसनतां त्यक्त्वा, ज्ञानध्यानसमाश्रिताः ।
कुर्वन्ति च तपश्चर्यां, गृहस्था धर्मयोगतः ॥ १५७ ॥

समवसरणस्यैव, रचना सुन्दरा कृता ।
अष्टाह्निकोत्सवश्चैव, प्रारब्धो भक्तिभावतः ॥ १५८ ॥

साधर्मिकस्य वात्सल्यं, सङ्घेन क्रियते खलु ।
मण्डपश्च मनोहारी, पूजार्थं परियोजितः ॥ १५९ ॥

रथयात्रा महोत्साह, पूर्वं निष्कासिता तथा ।
राज्यवाद्यादि सामग्री, गृहीता धर्मवर्धिका ॥ १६० ॥

शासनोद्योतता तत्र, सञ्जाता गुरुयोगतः ।
अनेके लुम्पकाः श्राद्धाः, तेऽपि चात्र समागताः ॥१६१॥

लुम्पकत्वं परित्यज्य, शुद्धधर्मानुयायिनः ।
सञ्जाता श्रावकाः केचिद् गुरूपदेशदानतः ॥ १६२ ॥

चातुर्मासेषु चाद्येषु, जाता धर्मप्रभावना ।
सर्वलोकमुखाच्चैव, स्तुतिर्गुरोश्च निःसृता ॥ १६३ ॥

अपूर्वा च गुरोः शक्तिः, पूर्वं च यादृशी श्रुता ।
ततो ह्यधिकरूपा सा, सङ्घेन परिनिर्णीता ॥ १६४ ॥

देशक्षेत्रस्य कालस्य, अनुसारेण देशना ।
गुरूणां परिज्ञातव्या, प्रभोराज्ञानुसारतः ॥ १६५ ॥

चातुर्मासिकपूर्णान्ते, गुरोर्विहारभावनाम् ।
श्रुत्वा श्रीसङ्घस्वान्ते च, शोकस्तु प्रकटीयते ॥ १६६ ॥

मासकल्पस्य विज्ञप्तिः, कृता सङ्घेन भावतः ।
शुद्धचारित्रसत्प्राप्त्यै, ढुंढकसाधुना तदा ॥ १६७ ॥

विज्ञप्तिश्च गुरोः पार्श्वे, तदा तेन कृता खलु ।
पापोदयस्य योगेन, प्राप्ता लुम्पकता मया ॥ १६८ ॥

अधुना ज्ञानसद्भावो–हृदये परिजायते ।
जिनेन्द्रमूर्त्तिपाठस्तु, दृष्टोमया पदे पदे ॥ १६९ ॥

गुरूपदेशतस्त्यक्तं, मिथ्यात्वं दुःखपोषकम् ।
तद्विज्ञप्तिश्च सङ्घेन, स्वीकृता सुखहेतवे ॥ १७० ॥

स्वीकृता गुरुणा तत्र, सङ्घाग्रहनियोगतः ।
दीक्षा भागवती तस्मै, दत्ता च शुभयोगके ॥ १७१ ॥

साधुचर्या तदा तेन, शिक्षिता गुरुपार्श्वतः ।
क्रियाकाण्डे च कौशल्यं, सम्प्राप्तं पुण्ययोगतः ॥ १७२ ॥

बृहद्दीक्षाप्रदानं च, गुरुणा कारितं खलु ।
प्राक् प्रदत्ता च दीक्षा वै, गुरुणा भावपत्तने ॥ १७३ ॥

द्वितीयां लीम्बडीग्रामे, दत्त्वा विहृतवान् तदा ।
सङ्घसज्जनसार्थेन, वर्धमाने समागताः ॥ १७४ ॥

ग्रामानुग्रामवैहारो गुरूणां शेषकालिके ।
मासकल्पादि मर्यादा, संपादिता च भावतः ॥ १७५ ॥

जनप्रबोधकार्येषु, कष्टं नैव विगण्यते ।
प्रतिपुरं प्रतिग्रामं, गुरूणां विहृतिः सदा ॥ १७६ ॥

अज्ञानवह्नि नाशाय, श्रद्धानधनलब्धये ।
आगता वीरमग्रामे, जनकल्याणहेतवे ॥ १७७ ॥

आगमनं गुरोः श्रुत्वा, हर्षिताः सङ्घसज्जनाः ।
अलङ्कृत्य स्वग्रामं च, सम्मुखे चागताः समे ॥ १७८ ॥

गुरुमङ्गलगीतेन, सर्वेषां तोषता बहु ।
माङ्गलिकं च संश्राव्य, धर्ममार्गेषु प्रेरिताः ॥ १७९ ॥

चातुर्मासिकविज्ञप्तिः, तत्रत्य सङ्घसज्जनैः ।
कृता विशुद्धभावेन, स्वीकृता गुरुणा तदा ॥ १८० ॥

त्रैस्तुतिकमुनीनां च, आगतैः केऽपि श्रावकाः ।
श्रद्धाभ्रष्टाश्च सञ्जाताः, श्रद्धाविहीनयोगतः ॥ १८१ ॥

तेषां शङ्कासमाधानं, गुरुणा युक्तिपूर्वकम् ।
कृत्वा विशुद्धमार्गेषु, आनीताः शुद्धबोधतः ॥ १८२ ॥

तेरापंथिकभक्तानां, दयादानविहीनता ।
तान्निरस्य च सद्युक्त्या, दयादानं प्रवेशितम् ॥ १८३ ॥

शुद्धश्रद्धा समायाता, गुरूणामुपदेशतः ।
दया–दान–तपश्चर्यां, कुर्वन्ति तेऽपि सज्जनाः ॥ १८४ ॥

चातुर्मासे च संपूर्णे, विहारो गुरुणा कृतः ।
कपडवणजे ग्रामे, आगता गुरवस्तथा ॥ १८५ ॥

नैयायिकशिरोभूताः, अम्बादत्ताश्च शास्त्रिणः ।
तत्पार्श्वे न्यायशास्त्रस्य, पठनेच्छा च दर्शिता ॥ १८६ ॥

शास्त्रिणस्तत्र रक्षित्वा, न्यायाऽभ्यासो वितन्यते ।
दर्शनग्रन्थरत्नानामभ्यासोऽपि प्रसंगतः ॥ १८७ ॥

नवीनन्यायशास्त्रस्य, संस्कारो हृदि जायते ।
चातुर्मासे च सम्पूर्णे, गोडवाडप्रदेशके ॥ १८८ ॥

विहरन् सादडीग्रामे, शिष्येण सह चागताः ।
जडतायाः प्रवेशस्तु, अत्र बहुलोमतः ॥ १८९ ॥

शुद्धोपदेशदानेन, जडताया निकन्दनम् ।
कृतं च गुरुणा तत्र, व्याख्यानमण्डपे खलु ॥ १९० ॥

त्रैलोक्यदीपकाख्यं च, मन्दिरं तत्प्रदेशके ।
तद्दर्शनाय सङ्घेन, ग्रामे राणकनामके ॥ १९१ ॥

गुरवश्च गतास्तत्र, दृष्ट्वा त्रैलोक्य नायकम् ।
आदिदेवं जगन्नाथं, पापं प्रक्षालितं समम् ॥ १९२ ॥

भावना भावितास्तत्र, ध्यानं तदेकतानतः ।
कृतश्च गुरुदेवेन, सफलं स्वकीयं जनु ॥ १९३ ॥

तादृशं मन्दिरं चैव कुत्रापि नैव विद्यते ।
यादृशं च श्रुतं नाम, तादृशं दृश्यते खलु ॥ १९४ ॥

रङ्गमण्डपबाहुल्यं, भूमिगृहाण्यनेकशः ।
पञ्चदश च कोटीनां, रूप्याणां च व्ययी कृतः ॥ १९५ ॥

प्राग्वाटजातियोग्येन, धनेन पुण्यशालिना ।
त्रैलोक्यदीपकाख्यं च, निर्मापितं च मन्दिरम् ॥ १९६ ॥

तत्राशातनबाहुल्यमधुनारण्यके स्थितम् ।
गत्वा सादडीग्रामे, श्रावकाः प्रतिबोधिताः ॥ १९७ ॥

तद्द्वारा तादृशं पापं, दूरीकृतं च तत्क्षणे ।
उपदेशप्रभावेन, कार्यं किं किं न जायते ? ॥ १९८ ॥

आशातनां परित्यज्य, जाताः शुद्धाश्च श्रावकाः ।
देवद्रव्यस्य शुद्ध्यर्थं, ज्ञापिताः श्रावकाः पुनः ॥ १९९ ॥

तदपि बहुयत्नेन, कृतं कार्यं विशुद्धिजम् ।
राजनगरवास्तव्याः, श्रीसङ्घकार्यवाहकाः ॥ २०० ॥

आहूता सादडीग्रामे, व्यवस्था करणाय च ।
संज्ञाप्य तीर्थकार्यञ्च, सर्वं समर्पितं तदा ॥ २०१ ॥

जीर्णोद्धारता तत्र, गुरूणामुपदेशतः ।
कारिता श्राद्धवर्येण, सत्पुण्यं च समर्जितम् ॥ २०२ ॥

तीर्थजीर्णोध्धृतेश्चैव, लाभो जातश्च तत्क्षणे ।
आशातनाविनाशश्च, गुरुणा विहितः खलु ॥ २०३ ॥

तत्पश्चात्पञ्चतीर्थस्य, यात्रा कृता च भावतः ।
लघूनां पञ्चतीर्थानां, बृहतां च तथैव च ॥ २०४ ॥

अर्बुदगिरितीर्थस्य, यात्राऽपि सुमनोहरा ।
कृता सद्भावपूर्वेण, बह्वी च निर्जरा ततः ॥ २०५ ॥

अर्बुदाचलयात्रा च, देवपाटकमध्यके ।
विमलवसही चाद्यास्याद्, द्वितीयं वस्तुपालजम् ॥ २०६ ॥

चतुर्मुखं तृतीयं च, चतुर्थं वीरस्वामिनः ।
मन्दिरं सुन्दरं ज्ञेयं, तत्रैव परिराजितम् ॥ २०७ ॥
अष्टादश च कोटीनां, रूप्यकानां सुयोगतः ।
संजातं सुन्दरं तत्र, विमलमंत्रिभाग्यतः ॥ २०८ ॥
भारते नैव तत्सदृक्, मन्दिरं परिराजते ।
वस्तुपालस्य मन्दिरं, अपूर्वशिल्पिना कृतम् ॥ २०९ ॥
भारतशिल्पशास्त्रं तु, जैनैश्च परिरक्षितम् ।
द्रव्यस्य गणना तत्र, न कृता धनसद्व्यये ॥ २१० ॥
अर्बुदाचलतीर्थस्य, यात्रा येनैव नो कृता ।
तेन च भारतं नैव, दृष्टमिति च कथ्यते ॥ २११ ॥
अचलदुर्गतीर्थस्य, यात्रा पापविनाशिका ।
सुवर्णमयबिम्बानि, जिनानां सन्ति तत्रव ॥ २१२ ॥
अपूर्वमन्दिरं तद्धि, अपूर्वं जैनबिम्बकम् ।
अत्रागत्य च भावेन, यात्रा सर्वैर्विधीयताम् ॥ २१३ ॥
शिरोहिनगरे तस्मादागताः शुद्धभावतः ।
व्याख्यानादिकसत्कार्यं, प्रारब्धं धर्महेतवे ॥ २१४ ॥
तत्स्थ मन्दिरपङ्क्तीनां, दर्शनं च मनोहरम् ।
सिद्धाचलस्य खण्डोऽयं, कुतोऽकस्मात्समागतः ॥ २१५ ॥
तादृशी कल्पना चैव, तद्दृष्ट्वा परिजायते ।
तत्रत्य मन्दिराण्येव, सूचयन्ति च स्वर्गताम् ॥ २१६ ॥

पञ्चतीर्थ्याश्च सद्यात्रा, कृत्वा विहरणं कृतम् ।
पाटडीनगरे तस्मादागमनं गुरोर्मतम् ॥ २१७ ॥
सङ्घसाग्रहयोगेन, उपरितालतीर्थके ।
गत्वा विशुद्धयात्रां च, कृत्वा स्वान्ते विचारितम् ॥ २१८ ॥
जीर्णोद्धारोऽपि चास्यैव, तीर्थस्य यदि कार्यते ।
तदा तीर्थं चिरं कालं, तिष्ठति नात्र संशयः ॥ २१९ ॥
एवं विचिन्त्य तत्काले, विशुद्धा देशना कृता ।
पाटडी मांडलग्रामे, वीरमग्रामश्रावकाः ॥ २२० ॥
तत्रैकत्रैव सञ्जाताः, तेषाञ्च प्रतिबोधनम् ।
अनेकरूपतः कृत्वा, सद्भावश्च प्रदर्शितः ॥ २२१ ॥
स्वीकृतं सर्वथा तैश्च, जीर्णोद्धारश्च कारितः ।
तत्तीर्थरक्षणार्थं च, सङ्घमेलनसम्मतम् ॥ २२२ ॥
प्रतिवर्षं च मेलाप, कृते च प्रतिज्ञा कृता ।
फाल्गुनशुक्लपक्षे च, अष्टम्यां नियतं भवेत् ॥ २२३ ॥
अद्यावधि च तद्दिने, जायते सङ्घमेलनम् ।
तीर्थोन्नतिश्च सञ्जाता, गुरूणामुपदेशतः ॥ २२४ ॥
धर्मशालाऽपि तत्रैव, सङ्घेन कारिता शुभा ।
धर्मध्यानं च तत्स्थाने, यात्रिकैः प्रविधीयते ॥ २२५ ॥
यात्रिकजनसौख्यार्थं, सर्वं तत्र नियोजितम् ।
देवद्रव्यस्य संवृद्धिः, कृता च देशनादितः ॥ २२६

साधारणस्य संपुष्टिः, कारिता सङ्घसज्जनैः ।
अनुक्रमविहारेण, गुरवश्च समागताः ॥ २२७ ॥
सङ्घेश्वरस्य यात्रार्थं, गुरूणामागतिर्मता ।
अतिप्राचीनतीर्थस्य, यात्रा च ध्यानपूर्वकम् ॥ २२८ ॥
कृत्वा चाशातनां सर्वां, निष्कासितोपदेशतः ।
ततो विहरणं कृत्वा, माणसानगरं गताः ॥ २२९ ॥
म्हेसाणाग्रामवास्तव्य–सङ्घेन ज्ञापितं तदा ।
रविसागरसाधूनां, महात्मनां शरीरके ॥ २३० ॥
रोगोत्पत्तेश्च बाहुल्यं, सञ्जातं कर्मयोगतः ।
परिचर्याविधानाय, न केऽपि सोपयोगिनः ॥ २३१ ॥
मिलन्ति साधवश्चात्र, क्रियाकाण्डे विचक्षणाः ।
भवदागमनं श्रुत्वा, सङ्घश्चात्र समागतः ॥ २३२ ॥
उत्सर्गस्यैव मार्गस्य, पोषकास्तत्र साधवः ।
अपवादविधानं च, जानन्ति नैव ते तथा ॥ २३३ ॥
शास्त्रनिपुणता नाना, कथं द्विमार्गज्ञानता ।
अतः पण्डितसाधूनां अपेक्षा चात्र वर्तते ॥ २३४ ॥
तथापि तादृशा नैव, स्थाने च साधवो मताः ।
गुरोर्नि कटे त्वन्नाम, श्रुत्वा चैवागताः समं ॥ २३५ ॥
साधुसेवा महत्कार्यं, कथं निषिध्यते मया ।
महात्मनां च सेवाऽपि, पुण्ययोगेन प्राप्यते ॥ २३६॥

आगत्य साधुसेवायाः, कार्यं धृतं च मस्तके ।
शरीरशुद्धि कार्यं च, स्थण्डिलं तत्र सम्मतम् ॥ २३७ ॥

औषधपानसामग्री–दापनं वैद्यपार्श्वतः ।
स्थण्डिललघुशङ्कादि, परिष्ठापनकार्यकम् ॥ २३८ ॥

अशुद्धवस्त्रशुद्धिश्च, सोपयोगस्य पूर्विका ।
प्रतिक्रमणलेख्यादि, क्रियाऽपि बहुप्रेमतः ॥ २३९ ॥

क्रियते आत्मकल्याण-हेतवे नान्यदृष्टितः ।
महात्मनां च–शान्त्यर्थं, उपायानैक्ययोजिताः ॥ २४० ॥

तथापि नाभवच्छांतिः केनाऽप्युपाययोगतः ।
वैद्येन कथितं तेषां, रोगस्याऽसाध्यता खलु ॥ २४१ ॥

महात्मना च तां श्रुत्वा, प्रोक्तं गुरुसमीपके ।
अशातावेद्ययोगेन, न शान्तिर्जायते मम ॥ २४२ ॥

मदर्थं नैव चिन्ताऽपि, कार्या त्वया कदाचन ।
प्रत्यहं धर्मध्यानादि, श्राव्यं च सावधानतः ॥ २४३ ॥

उपयोगस्तु दातव्यो, ममकार्ये च सर्वदा ।
प्रतिलेखनकं दृष्ट्वा, भूम्यादि परिमार्जनम् ॥ २४४ ॥

इत्येवं खलु शिक्षाऽपि, गृहीता प्रेमभावतः ।
महात्मवृद्धिचन्द्रेण, शिक्षा प्रागपि दापिता ॥ २४५ ॥

गृहीता हृदये साऽपि, अद्यावधि च तिष्ठति ।
रविसागरपूज्यानां, वचनममृतोपमम् ॥ २४६ ॥

मत्वा तदपि स्वान्तेषु, धारितं चैव सादरात् ।
तेषां सेवा विशुद्धेन, मानसेन कृता तदा ॥ २४७ ॥
सम्पूर्णसङ्घसार्धेन, तत्रस्थेन गरीयसा ।
तां दृष्ट्वा शुद्धभावेन, अनुमोदनता कृता ॥ २४८ ॥
वक्ति सङ्घोऽपि धन्योऽयं, सर्वसाधुशिरोमणिः ।
महात्मभक्तिभावश्च, विना पुण्ये–न प्राप्यते ॥ २४९ ॥
शास्त्रज्ञविनयानम्र–गात्रश्च सर्वदा खलु ।
अपूर्वशान्तिदाता वै, महात्मा स भविष्यति ॥ २५० ॥
सर्वप्रकारतः सेवा, गुरोश्च परितन्यते ।
साधुसाध्व्यश्च तेषां वै, तां दृष्ट्वा परिचारिकां ॥ २५१ ॥
प्रमोदभावनांचैव, कुर्वन्ति तेऽपि साधवः ।
धर्मविजयसाधूनां, भाग्यं च कीदृशं मतम् ? ॥ २५२ ॥
सर्वे वै भावनां भाव्य, सेवासु तत्परा समे ।
सहायका गुरूणां च, भवन्ति नात्र संशयः ॥ २५३ ॥
सोपयोगत्वरूपेण, समाधिपूर्वकं तथा ।
शरणं च समाश्रित्य, स्वीकृत्याऽनशनं तदा ॥ २५४ ॥
नमस्कारमहामन्त्र–गुणनं शुद्धिपूर्वकम् ।
कृत्वा नश्वरदेहं च, त्यक्त्वा स्वर्गं स गच्छति ॥ २५५ ॥
येन शुद्धस्वान्तेन, भक्तिः शुद्धा प्रदर्शिता ।
अनेकग्रामवास्तव्याः, श्राद्धास्तत्र समागताः ॥ २५६ ॥

महोत्सवं विधायैव, संस्कारो विहितस्तदा ।
सच्चारित्रक्रियापात्र, समतासेवधिः सदा ॥ २५७ ॥

स्वर्गगामी च तत्राऽभूत्म्हेसानाख्येपुरेवरे ।
देववन्दनकार्यादि, कृतं च गुरुणा सह ॥ २५८ ॥

संसारासाररूपत्व,सूचिका देशना गुरोः ।
सकलसङ्घसामीप्ये, दत्ता प्रभावशालिनी ॥ २५९ ॥

साधूनां पठनायैव, शालायाः स्थापनं वरम् ।
उपदेशं विना तद्धि, कार्यं नैवात्र सिध्यति ॥ २६० ॥

तदर्थमुपदेशोऽपि, सर्वेषां सुखहेतवे ।
प्रदत्तो गुरुणा चैव, स्वीकृतः श्रावकैस्तदा ॥ २६१ ॥

श्रावकशावपाठाय, भोजनादि समन्विता ।
धार्मिकाऽध्यापकानां च, न्यूनता दृश्यते खलु ॥ २६२ ॥

तत्पूर्त्यैव विशुद्धा सा, शाला च स्थापिता शुभा ।
भोजनादिकसामग्री, तेषामत्रैव दीयते ॥ २६३ ॥

साधुसाध्व्यश्च तत्रैव, स्वाध्यायध्यानभावनां ।
कुर्वन्ति वर्तमानेऽपि, सा शाला पुण्यपोषिका ॥ २६४ ॥

गुरूणामुपदेशेन, किं किं कार्यं न जायते ? ।
अज्ञानजनबोधाय, कारिता ज्ञानवापिका ॥ २६५ ॥

वेणीचन्द्रमहाभागैः, श्राद्धैः परिश्रमः कृतः ।
द्रव्यं भूरिश्च तैरेव, सञ्चितं बहुभावतः ॥ २६६ ॥

तच्चातुर्मासिके सर्वं, कार्यं च गुरुणा कृतम् ।
सङ्घेनोपकृतिश्चैव, सर्वथा मानिता सदा ॥ २६७ ॥
चातुर्मासिकपूर्णान्ते, सर्वधर्मोपदेशकम् ।
दत्त्वा विहारकार्याय, उद्यमशीलतां भजेत् ॥ २६८ ॥
पश्चाच्छालादि सत्कार्यं, सङ्घेन प्रेमभावतः ।
कृतं श्रीसङ्घज्ञानाय, धर्मप्रचारहेतवे ॥ २६९ ॥
लींचग्रामेषु चागत्य, उपदेशं प्रदत्तवान् ।
भवगत्तनुजस्वान्ते, स लग्नः शुद्धभावतः ॥ २७० ॥
सम्यक्त्वं स्वीकृतंतस्माद्, ब्रह्मचर्यव्रतं तथा ।
गृहीतं भावपूर्णेन, देशनामृतपानतः ॥ २७१ ॥
रविसागरसाधूनां, पार्श्वे तत्पितृभिस्तथा ।
गृहीतं यद्व्रतं भावात्तत्सर्वं प्रणिगद्यते ॥ २७२॥
पितृणां भगवन्नाम, अम्बादेवी च मातृणाम् ।
मनःसुखं सुतस्यैव, कथितं चाभिधानकम् ॥ २७३ ॥
ब्रह्मचर्यव्रतं चैव, द्वादशव्रतसार्थकम् ।
आचाम्लं च तपश्चर्यं, सिद्धचक्रनिमित्तकम् ॥ २७४ ॥
पौषधः पञ्चपर्व्यां च, उपवासेन संयुतः ।
पञ्चम्याराधना चैव, विधिपूर्वा सहर्षदा ॥ २७५ ॥
गंठसीव्रतसद्भावोः, जिनपूजा त्रिकालिका ।
उपानहच्च पादे न, धृता तेन कदाचन ॥ २७६ ॥

जावज्जीवं च तत्सर्वं, स्वीकृतं च तथाविधम् ।
आवश्यकादिकं तेषां, प्रत्यहं पौरुषी तथा ॥ २७७ ॥

अन्तिमाराधनां कृत्वा, समाधिपूर्वकं खलु ।
विशुद्धपरिणामेन, सङ्घेन सह क्षामणा ॥ २७८ ॥

चतुः शरणमाश्रित्य, धर्मध्यानप्रभावतः ।
वीतरागप्रभुं चैव, आराध्य स्वर्गतां गतः ॥ २७९ ॥

माताऽपि धर्मयोगेन, स्वर्गं चैवागमत्तथा ।
तयोश्च संस्कृतिश्चैव, और्ध्वदेहिकज्ञापिका ॥ २८० ॥

कृता पुत्रैस्तयोरेव, सर्वं तच्छान्तिपूर्वकम् ।
विना शोकेन सर्वं तत्, विहितं धर्मयोगतः ॥ २८१ ॥

लघुवयःसु तूर्यं तत्, गृहीतं भावतो व्रतम् ।
तदनुमोदनं चैव, तत्सङ्घेन कृतं तदा ॥ २८२ ॥

दीक्षाऽभिग्रहकश्चैव, गृहीतस्तेन तत्क्षणे ।
षट् पञ्चाशत्तमे वर्षे, शुद्धवैशाखमासके ॥ २८३ ॥

यदि दीक्षा च मे नो स्यात्तदा षड्विकृतिं खलु ।
न भोक्ष्यामीति मन्तव्यं, प्रतिज्ञेति दृढीकृता ॥ २८४ ॥

मासकल्पं विधायैव, विहारः कृतवान् गुरुः ।
सखीग्रामे समागत्य, धर्मध्यानोपदेशकम् ॥ २८५ ॥

व्याख्यानं च गुरोः पार्श्वे, श्रुत्वा तत्रत्य श्रावकैः ।
चातुर्मासाय विज्ञप्तिः, कृता भावुकसज्जनैः ॥ २८६ ॥

दृढाग्रहं गृहस्थानां, मत्त्वा लाभप्रयोगतः ।
स्वीकृता गुरुणा तेषा–मानन्दोऽजनि सर्वथा ॥ २८७ ॥
मोहनलाल भव्यस्य, वस्ताचन्द्रात्मजस्य वै ।
हृदये शुभसञ्जाता, वासना धर्मपोषिका ॥ २८८ ॥
शौभाग्यस्यैव तद्भ्रातुः, हृदयेऽपि तदाऽजनि ।
वैराग्य भावपुष्टिश्च, तत्र गुरुप्रबोधतः ॥ २८९ ॥
चातुर्मासिक पूर्णान्ते, तीर्थे शङ्खेश्वरस्य च ।
यात्रार्थं सङ्घसार्थेन, तेन सह समागता. ॥ २९० ॥
प्राचीनातीवमूर्त्तिः सा, दर्शनेऽपि मनोहरा ।
दामोदरप्रभोः पार्श्वे, आषाढ भूतिना तदा ॥ २९१ ॥
स्वीय कल्याणकं श्रुत्वा, काले पार्श्वप्रभोस्तथा ।
तेनैव श्रावकेनाऽपि, तन्मूर्त्तिः कारिता खलु ॥२९२॥
प्रत्यहं पूजनं तस्याः, भक्तिभरेण चेतसा ।
विशुद्ध परिणामेन, तेन सदा वितन्यते ॥ २९३ ॥
पार्श्वनाथस्य सा मूर्तिः, तेनाऽपि श्रावकेन च ।
स्वपूजार्थं विनिर्माय, प्रत्यहं तेन पूज्यते ॥ २९४ ॥
अद्यावधि प्रभोर्मूर्त्तिः, उत्सर्पिण्याश्च तत्क्षणे ।
नैक स्थानेषु पश्चाच्च, पूज्यबुध्या च पूजिता ॥ २९५ ॥
जरारोग विनाशाय, यादवानां तदा खलु ।
नेमिनाथं च संपृच्छ्य, धरणेन्द्रैश्च तत्क्षणे ॥ २९६ ॥

आराधितश्च कृष्णेन, आगत्य समये तदा ।
उपायः कथितस्तत्र, रोगनाशाय सर्वथा ॥ २९७ ॥

पातालाच्च प्रभोमूर्त्तिः, आनीता बहुप्रेमतः ।
तस्याः स्नात्र जलेनैव, रोगो नश्यति तत्क्षणे ॥ २९८ ॥

तस्या दर्शनमात्रेण गलन्ति पापव्रातकाः ।
अतः कुर्वन्ति भावेन, दर्शनं च पुनः पुनः ॥ २९९ ॥

सिद्धाचलस्य यात्रार्थं, विहारो गुरुणाकृतः ।
गम्भीरविजयाद्यैश्च, सार्धं स्थिताश्च ते तदा ॥ ३०० ॥

सर्वैः साकं च यात्राऽपि, कृता च गुरुभिः किल ।
अनेकविध चर्चाऽपि, शासनार्थैव चिन्तिता ॥ ३०१ ॥

महुवाग्रामवास्तव्याः, श्राद्धास्तत्र समागताः ।
मधुमती निवेशाय, कुर्वन्ति प्रार्थनां तदा ॥ ३०२ ॥

भवदागमनेनैव, पवित्रा जायते पुरी ।
देशनाऽपूर्वलाभश्च, प्राप्यते मादृशैर्जनैः ॥ ३०३ ॥

स्वीकार्य प्रार्थना तेषां, तत्रगच्छन्ति ते तथा ।
श्रुत्वाऽऽगमनकं तेषां, सम्मुखे चागताः समे ॥ ३०४ ॥

महुवाग्रामनिवेशाय, कृतो महोत्सवो महान् ।
अनेकवाद्य सामग्री, योजिता शुभयोगतः ॥ ३०५ ॥

प्रविश्य श्रावकार्यैव, व्याख्यानं गुरुणा कृतम् ।
अपूर्वविज्ञतां दृष्ट्वा, सर्वे ते हर्षिताः खलु ॥ ३०६ ॥

पितॄणां स्वर्गवासोऽभून्मातॄणां दुःखदायकः ।
वैराग्यमय वाक्येन, सान्त्वनं च कृतं तदा ॥ ३०७ ॥

सन्तोष्य स्वीयवर्ग च, उपदेशाद्दिानतः ।
स्वाध्यायधर्मकार्यादि, कुर्वन्ति गुरवः खलु ॥ ३०८॥

लींचनगरवास्तव्यः, भगवत्तनुजस्तदा ।
भावनगरवोहिरथे, उपविश्य समागतः ॥ ३०९ ॥

दीक्षाऽऽदानत्वकार्याय, विज्ञप्तिः संघसम्मुखे ।
कृता सङ्घेन सद्भावं, प्रेक्ष्यानुमोदनं कृतम् ॥ ३१० ॥

तालध्वजीयतीर्थस्य, यात्रार्थं गुरुणा सह ।
तत्रत्याः सर्वश्राद्धाश्च, गता विशुद्धभावतः ॥ ३११ ॥

दृष्टव्याऽनेकदृश्यानां, वापीकूपादिवस्तूनाम् ।
भूमिगृहादिकानाञ्च, संग्रहस्तत्र सर्वदा ॥ ३१२ ॥

अपूर्वं तादृशं स्थानं, नान्यत्र परिदृश्यते ।
स्वर्गस्य शुद्धखण्डोऽयं, अकस्मात्पतितो भुवि ॥ ३१३ ॥

आरोहः लघुरूपः स्या–च्छीघ्रं ततो हि गम्यते ।
काठिन्यस्य न लेशोऽपि, आरोहे परिजायते ॥ ३१४ ॥

गत्वा विशुद्धभावेन, यात्रा च गुरुभिः कृता ।
श्राद्धेन भक्तिभावश्च, पूजादौ परिदर्शितः ॥ ३१५ ॥

पङ्क्तिपालनतापूर्व—मागत्य भावना कृता ।
सप्ताहं स्थिरतां कृत्वा, दाठाग्रामे समागताः ॥ ३१६ ॥

तालध्वजीय वास्तव्याः, श्रावकाश्चागताः समे ।
दीक्षार्थं प्रार्थना तत्र, आगत्य च कृता बहु ॥ ३१७ ॥

दाठानगरसङ्घेन, प्रारब्धं वायणादिकम् ।
सलोतगोत्रश्राद्धेन, प्रथमं परिकारितम् ॥ ३१८ ॥

द्वितीयं रायचन्द्रेण, एवं परस्परं मतम् ।
शुद्धभक्तिविधानेन, भावना परिदर्शिता ॥ ३१९ ॥

महुवासङ्घश्राद्धाश्च, कुर्वन्ति प्रार्थना तदा ।
स्वीकृता गुरुणा तेषां, सर्वे स्वीयगृहे गताः ॥ ३२० ॥

तत्र गत्वा महोत्साहः, तत्सङ्घेन प्रदर्शितः ।
अष्टाह्निकोत्सवश्चैव, सद्भावेन विनिर्मितः ॥ ३२१ ॥

वाद्यादिसर्वसामग्री, भावपुरात्प्रपूरिता ।
अपूर्वमण्डपश्चैव, रचितः श्रावकैः खलु ॥ ३२२ ॥

प्रेक्षकानां विलोकाय, सामग्री तत्र योजिता ।
प्रत्यहं देवपूजादि, कृत्यं कुर्वन्ति भावुकाः ॥ ३२३ ॥

रथयात्रादि सामग्री, कारिता पूर्णभावतः ।
वार्षिकदानदानाय, शिबिका कारिता शुभा ॥ ३२४ ॥

प्रभुभक्तिविधानेन, भावुकैस्तदलंकृता ।
वैशाखकृष्णषष्ठ्याश्च, तृतीये पौरुषी क्षणे ॥ ३२५ ॥

जम्बीरवाटिका स्थाने, दीक्षायै तेऽपि चागताः ।
सर्वसङ्केन सार्धं च, त्रिकरणत्रियोगतः ॥ ३२६ ॥

क्षमापना कृता तैश्च, व्रताय गुरुसन्निधौ ।
आसनमुपविश्यैत्र, प्रारब्धा गुरुणा क्रिया ॥ ३२७ ॥

वाद्यादिघोपनैषेधः, कृतः शीघ्रं च तत्क्षणे ।
शुद्धक्रिया विशुद्धेन, भावेन परितन्यते ॥ ३२८ ॥

मुहूर्त्ते च समायाते, दत्ता दीक्षा सुयोगके ।
मङ्गलविजयाद्यश्च, अभिधानं कृतं शुभम् ॥ ३२९ ॥

वल्लभविजयाख्यं च, द्वितीयमभिधानकम् ।
शिक्षोपदेशकं कार्यं, हिताय गुरुणा कृतम् ॥ ३३० ॥

द्वितीयदिवसे ग्रामे, आनीता संघ सज्जनैः ।
चातुर्मासिकविज्ञप्तिः, मानिता गुरुणा तदा ॥ ३३१ ॥

पाठशाला गृहस्थानां, धार्मिकशिक्षणाय च ।
स्थापिता शुद्धभावेन, देशनायाः प्रभावतः ॥ ३३२ ॥

सार्वजनीनिकाबोध—पद्धतिर्गुरुणा कृता ।
सर्वदा सूर्यवारेषु, व्याख्यानं दीयते मुदा ॥ ३३३ ॥

महाजनस्य वाट्यां च, भिन्नविषयदर्शकम् ।
व्याख्यानं सार्वधर्मस्य, जायते हितदायकम् ॥ ३३४ ॥

व्याख्यानं तत्र कृत्वैव, धर्मस्वरूपदर्शितम् ।
पुस्तकालयकार्यं च, कृतं गुरूपदेशतः ॥ ३३५ ॥

चतुर्मासस्य पर्यन्ते, साधुभिर्विहृतिः कृता ।
बृहद्दीक्षाविधानाय, चाणस्मानगरं खलु ॥ ३३६ ॥

उमेदविजयानाञ्च, समीपे प्रेषिताः समे ।
सिद्धाचलस्य यात्राञ्च, कृत्वा गूर्जरभूमिषु ॥ ३३७ ॥

हेमविजयसाधूनां, गताः सङ्घेन सत्वरम् ।
प्रतिग्रामं च सम्बोधं, कृत्वा तत्र समागताः ॥ ३३८ ॥

पंन्यासैश्च महाभागैः, तान्दृष्ट्वा जल्पितं च तैः ।
बृहद्दीक्षा–स्व–कार्याय, साधवोऽत्र समागताः ॥ ३३९ ॥

योगप्रवेशने कार्ये, प्रोत्साहिताश्च भक्तकाः ।
सर्वविशुद्धभावेन, क्रिया च कारिता शुभा ॥ ३४० ॥

मृत्युभोजं निषिध्यैव, यात्रार्थं देशना कृता ।
महुवाग्रामवास्तव्यैः, स्वीकृता बहुप्रेमतः ॥ ३४१ ॥

सिद्धाचलस्य यात्रार्थं, सङ्घेन गुरवो गताः ।
यात्रा पुनश्च भावेन सर्वैः सह कृता तदा ॥ ३४२ ॥

चाणस्माग्राममध्ये च आगता गुरवोऽपि वै ।
इन्द्रादिसर्वसाधूनां, योगक्रियाऽपि निष्ठिता ॥ ३४३ ॥

पौषशुक्लतिथौ चैव, एकादश्यां सुमुहूर्त्तके ।
शुभलग्नेषु सङ्घेन, सर्वकार्यं समापितम् ॥ ३४४ ॥

तदर्थं चोत्सवः सङ्घैः, निर्धारितश्च तत्क्षणे ।
रथयात्रामहोत्साहा–न्निष्कासिता सुयोगतः ॥ ३४५ ॥

कान्तिविजयसत्साधु–कमलविजयादयः ।
पट्टणतः समागत्य, उत्सवे मिलिताश्चते ॥ ३४६ ॥

समीग्रामस्य वास्तव्याः, श्रावकाः मोहनादिकाः ।
दीक्षाग्रहणकार्याय, कुर्वन्ति प्रार्थनां तदा ॥ ३४७ ॥

गत्वा तत्रैव दीक्षायाः, निष्कासितं मुहूर्त्तकम् ।
माघशुक्लदशम्याञ्च, शुभलग्नं समागतम् ॥ ३४८ ॥

अष्टाह्निकोत्सवश्चैव, कृतस्तत्रत्य भावुकैः ।
दीक्षाप्रदानकार्यं च, तद्दिने शुभयोगतः ॥ ३४९ ॥

भक्तिविजयसन्नाम, दत्तं च गुरुणा शुभम् ।
कृत्वा तादृश सत्कार्यं, ततो विहरणं कृतम् ॥ ३५० ॥

गुरुविहारक्षेत्रेषु सर्वत्राऽज्ञानता बहु ।
जैनशासनवर्गेषु, चतुर्विधे च सङ्घके ॥ ३५१ ॥

न्यायव्याकृतिशास्त्राणां, प्रौढानां दर्शका न हि ।
सारस्वतादिशास्त्रस्य, दृष्टारश्च पदे पदे ॥ ३५२ ॥

सिद्धहेमबृहद्वृत्तेः, बृहन्न्यासस्य पाठनम् ।
पातञ्जलमहाभाष्य–ज्ञाता जैनेषु नो भवेत् ॥ ३५३ ॥

लिङ्गानुशासनस्यैव, काव्यानुशासनादीनाम् ।
नव्यप्राचीनतर्काणां, ग्रन्थानामवलोकनम् ॥ ३५४ ॥

नाट्यदर्पणग्रन्थानां, शिक्षणं नैव विद्यते ।
नलविलासकादीनां, नाटकानां तथैव च ॥ ३५५ ॥

द्विशतं च समानां हि, अज्ञानं प्रसृतं महत् ।
पूर्वाचार्यश्रमानां च, नैष्फल्यं बहुधा कृतम् ॥ ३५६ ॥
अध्येतारश्च जैनेषु, अधुना विद्यते न हि ।
तेषां च सर्वशास्त्राणामुद्धारस्तु कथं भवेत् ? ॥ ३५७ ॥
कथावार्तां च कृत्वा वै, व्याख्यानं प्रविधीयते ।
श्रोतारस्तादृशाश्चैव, अतः श्रमो न तन्यते ॥ ३५८ ॥
षडदर्शनीयमन्तव्य-ग्रन्थानां पठनं न हि ।
प्रश्नोत्तरं च तैः सार्धं, मुनिना क्रियते कथम्? ॥ ३५९ ॥
सर्वगूर्जरदेशेषु, जैनजैनेतरेषु च ।
अज्ञानस्यैव साम्राज्यं, सर्वत्र प्रसृतं खलु ॥ ३६० ॥
गुरूणां मानसे तच्च, शल्यरूपं प्रजायते ।
तद्विनाशाय शिष्याणां, पाठनेच्छा गरीयसी ॥ ३६१ ॥
जैनसाहित्यतोद्धार-कर्त्तव्ये भावना बहु ।
तच्चिन्ता मानसे लग्ना, उपायं शोधयन्तिते ॥ ३६२ ॥
विहारं कुर्वता चैव, वीरमग्रामसत्स्थले ।
आगता गुरवोऽप्यत्र, दृष्ट्वा तुष्टाश्च भावुकाः ॥ ३६३ ॥
चतुर्मासाय विज्ञप्तिः, कृता सङ्घेन तत्क्षणे ।
लाभालाभं विचार्यैव, स्वीकृता गुरुसत्तमैः ॥ ३६४ ॥
मङ्गलविजयादीनां, साधूनां पठनाय च ।
वाराणसीयविज्ञानामाह्वानं पत्रतः कृतम् ॥ ३६५ ॥

रामप्रसादसच्छास्त्री, आगतो दैवयोगतः ।
पाणिनीयबृहद्वृत्ति–कौमुदीनां च पाठनम् ॥ ३६६ ॥

प्रारब्धं शुभलग्नेषु, पूर्वार्द्धं पठितं खलु ।
चातुर्मासस्य पूर्णान्ते, विहारः प्रविधीयते ॥ ३६७ ॥

मौनेनैकादशीं कृत्वा विहारो गुरुणा कृतः ।
उपरिआलतीर्थेषु, सङ्घैः सह समागतम् ॥ ३६८ ॥

तीर्थयात्राविधानार्थं, जीर्णोद्धारकृते किल ।
पञ्चदिनस्थितिश्चैव, कृता च सङ्घसत्तमैः ॥ ३६९ ॥

पण्डितस्यापि सङ्गेन, कलहः परितोऽजनि ।
धर्मनिन्दा कृता तेन, ग्लानिश्च श्राद्धमानसे ॥ ३७० ॥

गुरूणां निकटे तेन, आगत्याऽऽराटिका कृता ।
पण्डितं च समाहूय निष्कासितश्च तत्क्षणे ॥ ३७१ ॥

धर्मापमानता काचि–त्स्वल्पापि नैव सह्यते ।
ततो निष्कासनं श्रेष्ठं, गुरुणा कथितं तदा ॥ ३७२ ॥

अन्यदर्शनिसामीप्ये, पाठनं नैव कार्यते ।
काश्यां गत्वा च साधूंश्च, पाठयिष्यामि सर्वथा ॥ ३७३ ॥

सम्मतिर्मंगलादीनामध्येतृणाञ्च मार्गिता ।
विनयानम्रगात्रैश्च, शिष्यैश्च परिदर्शिता ॥ ३७४ ॥

गुरोराज्ञा शिरोधार्या, सर्वथा मन्यते खलु ।
स्वल्पकालेन शास्त्राणां, पठनं तत्र जायते ॥ ३७५ ॥

मङ्गलादिकसाधूनां, पाठे, विचारणा बहु ।
गुरूणां मानसे जाता, सङ्घेनाऽपि समं तथा ॥ ३७६ ॥
विचारश्च दृढीकृत्य, साधूनां प्रेषणं वरम् ।
कतिचिच्छात्रकानां च, तैः सहाध्यापनं शुभम् ॥ ३७७ ॥
केवलं मुनिराजैश्च, गम्यते नैव तत्र वै ।
विना गृहस्थसाहाय्यं, गत्वा च किं विधीयते? ॥ ३७८ ॥
तत्र स्थित्वैव छात्राणां, पाठनं सुन्दरं मतम् ।
तदर्थं द्रव्यसामग्री, व्याख्याने च भविष्यति ॥ ३७९ ॥
इति सर्वं विचार्यैव, भोयणीतीर्थदर्शने ।
गताश्च गुरवस्तत्र, आगताः साधवः परे ॥ ३८० ॥
काशिगमनकार्याय, विचारो ज्ञापितस्तदा ।
कमलविजयादीनां, यात्रायै गमनं मतम् ॥ ३८१ ॥
तैरनुमोदनं दत्त-मिदं कार्यं मनोहरम् ।
महापुण्यप्रयोगेन, तव हृदि समागतम् ॥ ३८२ ॥
भगवतां समीपे च, गत्वा पत्रं विमुच्यताम् ।
यदि काश्यां विहाराय, आगच्छेत्पत्रिका शुभा ॥ ३८३ ॥
तदा काश्यां च गन्तव्य-मन्यथा नैव गम्यते ।
शासनदेवसाहाय्यादागता पत्रिका खलु ॥ ३८४ ॥
तदा तत्रैव निर्णीय मानसे दृढता कृता ।
चातुर्मासस्य पश्चाच्च, वाराणस्यां तु गम्यते ॥ ३८५ ॥

१ पन्न्यासजी महाराज कमलविजयजी ।

अस्मिन्वर्षे तु चात्रैव, देशना प्रविधीयते ।
योगोद्वहनकार्याणि, स्थित्वाऽप्यत्र समाप्यते ॥ ३८६ ॥
कमलविजयादीनां, साधूनां सङ्घसत्तमैः ।
वीरमग्रामगन्तव्ये, विज्ञप्तिश्च कृता बहु ॥ ३८७ ॥
गुरुणा सह ते सर्वे, साधवोऽपि समागताः ।
पञ्चत्रिंशच्च साधूनां, साध्वीनां च ततोऽधिकम् ॥३८८॥
संख्या–योगेषु विद्यन्ते, शुभक्रिया प्रसाधिका ।
सर्वेषां योगकार्याणि, भवन्ति विधिपूर्वकम् ॥ ३८९ ॥
महानिशीथसूत्रादि योगश्च गुरुणा कृतः ।
उत्तराध्ययनानां च, मङ्गलविजयेन वै ॥ ३९० ॥
आचाराङ्गादिसूत्राणां, योगश्चान्यैर्विधीयते ।
तदा ढुंढकसाधुश्च, कच्छदेशात्समागतः ॥ ३९१ ॥
गुरूणां विज्ञतां ज्ञात्वा, दीक्षार्थं तत्र चागतः ।
अष्टादशसमं तेन, ढुंढकत्वं प्रपालितम् ॥ ३९२ ॥
पश्चात्सूत्रविलोकेन, संस्कृतपठने सति ।
अशुद्धाचरणां ज्ञात्वा, पृष्टं गुरुसमीपके ॥ ३९३ ॥
वेषाच्च साधुवेषादि–विरुद्धं सूत्रतो मतम् ।
पिशाचरूपवेषोऽयं कल्पितः पापयोगतः ॥ ३९४ ॥
सात्राज्ञायाश्च बाह्यत्वं, सर्वथा परिदृश्यते ।
त्यक्तव्यं सर्वतः श्रेष्ठं, इति मत्वा च त्याजितम् ॥ ३९५॥

भोयणीग्रामतीर्थेषु, गत्वा सर्वैः विचिन्तितम् ।
दीक्षां संवेगपक्षीया गृहीता शुद्धभावतः ॥ ३९६ ॥
रत्नविजयसन्नाम, धारितं गुरुणा तदा ।
सोऽपि चात्रसमागत्य, प्रविष्टो योगकार्यके ॥ ३९७ ॥
सर्वेषां कारयित्वा च, योगादि सर्वसत्क्रियाम् ।
पूज्यपंन्याससाधूनां, भक्तिश्च प्रेमतः कृता ॥ ३९८ ॥
सरलः शुद्धचारित्री, गुणरागी च सर्वदा ।
तेषां शिष्याश्च सेवायां, अहमिन्द्रसमामताः ॥ ३९९ ॥
गुरूणां सेवनाकार्ये, उद्युक्तास्ते भवन्ति नो ।
अतीव प्रेमपूर्वेण, पंन्यासैर्विहारः कृतः ॥ ४०० ॥
चातुर्मासिककार्याय, माण्डलग्रामवासिभिः ।
श्रावकैः प्रार्थना तत्र, आगत्य च कृता खलु ॥ ४०१ ॥
काशिशालाविधानाय, ततो गुरुः समागतः ।
विद्यादानं महत्पुण्यं, मत्वा तैः देशना कृता ॥ ४०२ ॥
श्रावकैः शुभभावेन, स्वीकृता सर्वथा तदा ।
द्रव्याणां व्यवस्थाद्यं च, कार्यं तच्छ्रावकैः कृतम् ॥ ४०३ ॥
तत्राध्ययनकार्याय, विद्यार्थिनः समागताः ।
पाठशालाऽपि तत्रैव, पाठाय परियोजिता ॥ ४०४ ॥
अनेकश्राद्धशावाश्च, कुर्वन्ति पठनं शुभम् ।
परीक्ष्य श्रावकांश्चैव, काश्यर्थं रक्ष्यते पृथक् ॥ ४०५ ॥

वीरमग्रामवास्तव्याः, नियुक्ता गुरुभिस्तदा ।
सर्वे सम्मील्य शालायाः, कार्यं कुर्वन्ति सादरम् ॥ ४०६ ॥

पंचदशैव छात्राश्च, साधवः सप्तसम्मताः ।
काशिदेशविहाराय, प्रस्थानं भावतः कृतम् ॥ ४०७ ॥

साणन्दमाण्डलग्राम—वासिनः श्रावकास्तथा ।
अन्येऽपि श्रावकाः सर्वे, गुरुभक्त्यै समागताः ॥ ४०८ ॥

चातुर्मासिककार्याय, स्थिता वीरमग्रामके ।
कीर्त्तीन्द्रमङ्गलाद्याश्च, हर्षिता तेऽपि तत्क्षणे ॥ ४०९ ॥

वाराणसी विहाराय, ततो गच्छन्ति साधवः ।
रामपुरादिग्रामेषु, गत्वा श्रीमल्लितीर्थके ॥ ४१० ॥

भोयणीनामग्रामे च, तीर्थयात्रा कृता तदा ।
सूर्यजुट्टानके ग्रामे, गत्वा लींचे समागताः ॥ ४११ ॥

अनेकग्रामवास्तव्या, सम्बन्धिमङ्गलस्य च ।
वन्दनार्थं च तत्रापि, आगता गुरुसन्निधौ ॥ ४१२ ॥

वृहद्भ्राता दलीचन्द्रः, श्रुत्वा गुर्वागमं तदा ।
साधर्मिकस्य वात्सल्यं, पूजादिकं तथैव च ॥ ४१३ ॥

सर्वसाधर्मिकं कार्यं, करोति बहुभावतः ।
ज्ञातिकुटुम्बभक्तिश्च, कृता सर्वादरेण वै ॥ ४१४ ॥

मौनीयैकादशी तत्र, सङ्घस्यात्याग्रहेण च ।
वत्रत्य सर्वजीवानां, बोधाय देशना कृता ॥ ४१५ ॥

पञ्चदिनं च स्थित्वैव काशिविहारभावतः ।
डांगरवादिके ग्रामे, गत्वा जैनाश्च बोधिताः ॥ ४१६ ॥

देहग्रामे समागत्य, व्याख्यानादि कृतं बहु ।
गुरूणां देशनां श्रुत्वा, प्रतिबुद्धाश्च श्रावकाः ॥ ४१७ ॥

तत्रत्य श्रावकेनैव, विशुद्धविधिपूर्वकम् ।
तूर्यं द्वादशरूपं च, व्रतं प्राप्तं च भावतः ॥ ४१८ ॥

भावुकद्विचरेणैव, श्रुत्वा च देशनां गुरोः ।
काशिपठनकार्याय, उद्युक्तः सर्वथा किल ॥ ४१९ ॥

हृदि निर्धारितं तेन, येन केन प्रकारतः ।
गत्वा काश्यां च विद्यायाः, पठनं क्रियते वरम् ॥ ४२० ॥

ततः कपडवञ्जाख्यः, नगरे गुरवो गताः ।
द्विदैनिकस्थितिं चैव, कृत्वा विहरणं कृतम् ॥ ४२१ ॥

अंघाडिगोधराग्रासे, मार्गस्याज्ञानभावतः ।
अन्यत्र गमनं साधोः गुरुणाऽन्यत्र गम्यते ॥ ४२२ ॥

दैवयोगेन तस्यैव मीलनं कष्टदं मतम् ।
शासनदेव सानिध्यात्तच्चिन्ता दूरतो गता ॥ ४२३ ॥

ततो विहृत्य चान्यत्र मालवे दोहदे गताः ।
राजदुर्गादिग्रामे च, विहारो लाभदः खलु ॥ ४२४ ॥

त्रैस्तुतिकगृहस्थानां, वासोऽत्रापि विद्यते ।
प्रतिग्रामं च क्रोधाग्निः, राजेन्द्रेणैव कारितः ॥ ४२५ ॥

स्वनामख्यातिकार्याय, प्राचीनप्रतिमोपरि ।
पूर्वलेखान्प्रमार्ज्यैव, नूतना परिकारिता ॥ ४२६ ॥
मन्दिरे विद्यमानेऽपि, स्वनामख्यातिलोभतः ।
नूतनं कारयित्वैव, नामोल्लेखो वितन्यते ॥ ४२७ ॥
इदृग्बुद्ध्या च लेखादि, सर्वं कार्यं विधापितम् ।
कोरंटकीयदृश्यं च, श्रुतं हृदयभेदकम् ॥ ४२८ ॥
उपकेशीयगच्छेषु, रत्नप्रभेण सूरिणा ।
वैक्रियलब्धियोगेन, प्रतिष्ठा चैककालिके ॥ ४२९ ॥
ओशिया नगरे चैव, कोरण्टकीयमन्दिरे ।
वीरविभोः प्रतिष्ठाऽपि, एकलग्ने च कारिता ॥ ४३० ॥
तां मूर्तिं च समुत्थाप्य, स्वकीयनामख्यातितः ।
बालकैस्तत्र तन्मूर्त्या अनुत्थाने च तत्क्षणे ॥ ४३१ ॥
कृता चाशातना बह्वी, दुर्गतिगर्तपातिका ।
तां श्रुत्वा दुःखभावत्वं, जायते मानसे किल ॥ ४३२ ॥
सत्या च यदि सा वार्त्ता, तदा दुःखं महन्मतम् ।
सज्जनपुरुषेणैव, तादृशं न वितन्यते ॥ ४३३ ॥
कथं साधुजनेनापि, तादृक्कार्यं च कारितम् ।
प्रतिष्ठिता च योगेन, शुभेन च महात्मना ॥ ४३४ ॥
तदुत्थापनकार्यं च, पामरस्य न युज्यते ।
तादृक् शक्तेरभावे च, तादृशं च कथं कृतम् ॥ ४३५ ॥

भावदया च तस्यैव, उपरि जायते मम ।
अतः केनाऽपि जीवेन; कर्त्तव्यं न कदाचन ॥ ४३६ ॥

तत उज्जयिनी ग्रामे, गच्छन्ति गुरवः किल ।
श्राद्धेन शुभभावेन, स्वागतं भावतः कृतम् ॥ ४३७ ॥

अवन्तिपार्श्वनाथस्य, महाप्रभावकारिणी ।
विद्यते च शुभामूर्त्तिः दर्शनेन मनोहरा ॥ ४३८ ॥

अवन्तिसुकुमारेण द्वात्रिंशद्गृहिणीः खलु ।
संत्यज्य शुभभावेन–दीक्षा च स्वीकृता तदा ॥ ४३९ ॥

विपुलभोगसामग्री, त्यक्त्वा विशुद्धभावतः ।
गुरूणां सम्मुखे गत्वा, शीघ्रकल्याणहेतवे ॥ ४४० ॥

यदि च भवतामिच्छा, तदाऽनशनं मुदा ।
गृह्णामि कथ्यतां देव, गुरुणा कथितं तदा ॥ ४४१ ॥

प्रतिवन्धोऽपि नो कश्चि-न्मयाऽत्र प्रविधीयते ।
सुखेन क्रियतां कार्यं, क्षाम्यन्तु सर्वप्राणिनः ॥ ४४२ ॥

चतुः शरणमाश्रित्य, दृढीकृत्य च मानसम् ।
शुभयोगेन तत्स्थाने, गत्वा कार्यं विधीयताम् ॥ ४४३ ॥

जम्बूकी तत्र चागत्य, करोति देहभक्षणम् ।
चतुःप्रहरमध्ये च शरीरं कवली कृतम् ॥ ४४४ ॥

तत्स्थाने तत्सुतेनैव, कारितं जैनमन्दिरम् ।
महाकालेन भावेन, पश्चाच्छैवेन स्थापितम् ॥ ४४५ ॥

तत्स्थाने शिवलिंगं तन्महामिथ्यात्वपोषकम् ।
प्रभुणा सिद्धसेनेन, स्वकीय शुभयोगतः ॥ ४४६ ॥

पार्श्वनाथप्रभूणां च, मूर्त्तिश्च प्रकटीकृता ।
साऽपि कालबलेनैव, दुष्टशैवेन तत्र वै ॥ ४४७ ॥

शिवलिंगं नियुक्तं त-ज्जैनेश्चान्यत्र स्थानके ।
सिप्रानदीतटे चैव, कारितं नव्यमन्दिरम् ॥ ४४८ ॥

तत्रापि दुष्टशैवेन, शिवलिङ्गं च स्थापितम् ।
भूमिगृहेषु तत्रैव, कारितं मन्दिरं पुनः ॥ ४४९ ॥

अद्यापि तच्च विद्येत, कृतं तस्यैव दर्शनम् ।
मूर्त्तिः सैव विज्ञातव्या, पुण्ययोगेन तत्र वै ॥ ४५० ॥

कृता यात्रा विशुद्धेन, भावेन गुरुणा तदा ।
व्याख्यानं भावतो दत्वा, अन्यमन्दिरदर्शनम् ॥ ४५१ ॥

जिनप्रासादनव्यानि, विद्यन्ते हि चतुर्दश ।
प्राचीनान्यानि स्थानानि, तत्र विलोकितानि च ॥४५२॥

मदनासुन्दरी तत्र, प्रजापालस्य पुत्रिका ।
विशुद्धशीलसम्पन्ना, विख्याता जगतितले ॥ ४५३ ॥

विशालजैनधर्मस्य, प्रभावनाऽकरोत्तदा ।
सिद्धचक्रं समाराध्य, शास्त्रोक्तविधिना तया ॥ ४५४ ॥

श्रीश्रीपालमहाराजा-द्यनेकप्राणिनां हितम् ।
साधितं परया भक्त्या, शुद्धमार्गोऽपि दर्शितः ॥ ४५५ ॥

स्थापनारूपतत्स्थानं, गुरुणा प्रविलोकितम् ।
विशालं नगरं तच्च, प्राचीनताप्रदर्शनम् ॥ ४५६ ॥

सिप्रासिद्धवटाद्याश्च, योगिनीवीरभूमिका ।
भर्त्तृहरिमुनीनां च, लौकिकानां हि भूमिका ॥ ४५७ ॥

सिद्धसेनमहाभागैः, शासनं परिवर्द्धितम् ।
विक्रमादित्यराजानां, प्रतिबोधश्च कारितः ॥ ४५८ ॥

परं श्राद्धं विधायैव, शत्रुञ्जयादितीर्थके ।
सङ्घनिष्कासनं चैव, महद्रूपेण योजितम् ॥ ४५९ ॥

जगत्पूज्यैर्विशुद्धं च, चारित्रं परिपालितम् ।
तेषां ध्यानविधानेन, पापपङ्को गलिष्यति ॥ ॥ ४६० ॥

कथमत्र स्मृतिस्तेषां, प्रसंगेन न तन्यते ।
महात्मनां च तेषां वै, ध्यानं कथं न दध्महे ॥ ४६१ ॥

काशीगमन कार्याय, गन्तव्यं च ततः परम् ।
मिथ्यात्वि ढुंढकाद्यैश्च, शुद्धाचारः प्रलोपितः ॥ ४६२ ॥

तदुपदेशतः श्राद्धाः, केचिन्मिथ्यात्ववासिनः ।
सञ्जातामालवे देशे, मन्दिराशातना कृता ॥ ४६२ ॥

मक्षितीर्थस्य यात्रायै, ततः परं च गम्यते ।
तस्यैवाशातना तत्र, प्रचुरा प्रविलोकिता ॥ ४६४ ॥

नग्नाटैः सज्जनैः कैश्चि–त्पापोदयप्रभावतः ।
आशातना कृता बह्वी, निकाचितप्रसाधनी ॥ ४६५ ॥

अग्नि प्रज्वाल्य तन्मूर्त्याः, चक्षुषी बहिरुद्धृते ।
तादृशपापकर्तृणां, दुर्गतिर्नो भवेत्कथम् ? ॥ ४६६ ॥

ईदृक् पापं च नो कोऽपि, जैनः करोति कर्हिचिद् ।
जैनाभासेन तेनैव, कृतं भवाभिनन्दिना ॥ ४६७ ॥

येन केन प्रकारेण, श्वेताम्बरीयतीर्थके ।
स्वस्वत्वस्थापनार्थं च, पापं करोति तादृशम् ॥ ४६८ ॥

सुवर्णकारसङ्ग्राममन्दिरं कारितं शुभम् ।
यथा रैवततीर्थेषु, तथाऽत्रापि च कारितम् ॥ ४६९ ॥

यत्र श्वेताम्बरं तीर्थं, तत्र गत्वा च प्रेमतः ।
कार्यकर्तृमनुष्याणां, ददाति प्रविलोभनम् ॥ ४७० ॥

आवयोश्च द्वयोर्भ्रात्रोः, विभेदो नैव विद्यते ।
भगवद्दर्शनेच्छाऽपि, प्रबला परिजायते ॥ ४७१ ॥

ममापि दर्शने लाभः, भवतो द्रव्यलाभता ।
देवद्रव्यप्रवृद्धिश्च, जायते सुमनोहरा ॥ ४७२ ॥

एवं मिष्टवचः प्रोच्य, प्रत्यहं तत्र गम्यते ।
द्रव्यादिलाभप्राप्त्या च, लुब्धाः पश्यन्ति नो विषम् ॥४७३॥

ततः पश्चाद्विभागं च, मार्गयन्ति च ते खलु ।
अदानेऽन्यायमार्गेषु, न्यायार्थं च प्रयान्ति वै ॥४७४॥

अपरिमितमुद्राश्च, दत्त्वा चाधिकृतां तथा ।
वशं कुर्वन्ति ते सर्वे, गृध्रपक्षि सहोदरा ॥ ४७५ ॥

कूटलेखादि निर्माय, कूटसाक्षिप्रदापनम् ।
इत्यादि पापकर्माणि, तन्वन्ति पापयोगतः ॥ ४७६ ॥

अद्यापि कलहं चैव, प्रत्येकतीर्थमन्दिरे ।
तरणसाधने रूपे, अतरणं प्रपोपितम् ॥ ४७७ ॥

असद्व्ययं विनिर्माय, मांसाशिपोषणं किल ।
कारितं तैश्च नग्नाटैः, विचित्रा कर्मणां गतिः ॥ ४७८ ॥

हुकमीसखिचन्द्रादि, नग्नाटेनैव कारितम् ।
कोटिशो रूप्यकानां च, व्ययः श्वेताम्बरे भवेत् ॥४७९॥

तदुपरि दयाभावं, कृत्वा यात्रां कृता तदा ।
मक्षिपार्श्वस्य सद्ध्यानं, कृतं विशुद्धयोगतः ॥ ४८० ॥

साकं सङ्घेन तत्सर्वं, विहितं धर्मध्यानकम् ।
पूजाविधानकार्यं च, विहितं विधिपूर्वकम् ॥ ४८१ ॥

अग्रे गुरुविहाराय भक्त्यर्थं श्रावकास्तदा ।
जडावचन्द्रकाश्चान्ये, चलन्ति भाग्यशालिनः ॥ ४८२ ॥

धर्मध्यान कथा वार्त्ता, प्रतिग्रामं च तत्क्षणे ।
व्याख्यानदानकार्यं च, कुर्वन्ति गुरवस्तदा ॥ ४८३ ॥

जैनेतरीयजीवाश्च, शृण्वन्ति देशनां गुरोः ।
श्रुत्वा व्यसनसर्वस्वं, त्यजन्ति चैकहेलया ॥ ४८४ ॥

सुज्ञमल्लादिजैनाश्च, देशनालाभहेतवे ।
आगताश्च कियद्दूरं, प्रतियान्ति ततः परम् ॥ ४८५ ॥

शङ्करलालवैद्यश्च, भक्तिं करोति भावतः ।
तत्सत्कारश्च सुश्राद्धैः, कृतो विशुद्धभावतः ॥ ४८६ ॥

साहजासारङ्गे ग्रामे, आगताश्चयथाक्रमम् ।
साधोर्विहारशून्येन, सञ्जाता धर्मवैमुखाः ॥ ४८७ ॥

कंचित्कालं च तत्रैव, स्थित्वा ते प्रतिबोधिताः ।
ततोऽपि ब्यावरे ग्रामे, पेंची बीना[१] पुरे खलु ॥ ४८८ ॥

कोलारसादिग्रामेषु, गत्वा शिवपुरीं गताः ।
भीखमजीतमल्लाद्याः, कुर्वन्ति प्रार्थनां तदा ॥ ४८९ ॥

अष्टाह्निकादिकर्त्तव्ये, इच्छा तेषां गरीयसी ।
व्रतादिकरणे शुद्धा, भावना परिजायते ॥ ४९० ॥

प्रार्थना स्वीकृतिश्चैव, गुरुणा प्रकटीकृता ।
सर्वेषां मानसे तोषः, पूर्णतया विनिर्मितः ॥ ४९१ ॥

ततो झांसीपुरे शुभ्रे, कनकमल्लश्रावकैः ।
प्रवेशोत्सवतां कृत्वा, व्याख्यानं कारितं मुदा ॥ ४९२ ॥

मन्दिरं तत्र सर्वत्र, विद्यते पुण्यरूपकम् ।
जिनेन्द्र दर्शनं पुण्यं, विना च प्राप्यते न हि ॥ ४९३ ॥

१ विनागंजाख्यग्रामे ।

ततः कर्णपुरे ग्रामे, तत्रत्य संघ भावतः ।
पुरप्रवेशकं कार्यं, महाभक्त्या कृतं च तैः ॥ ४९४ ॥

आचाम्लपर्वकर्त्तव्ये, साधूनां भावना शुभा ।
सञ्जाता श्राद्धवर्गाणां, सर्वैश्च प्रार्थना कृता ॥ ४९५ ॥

स्वीकृता गुरुवर्येण, श्रीपालस्य कथानकम् ।
वाचितं बहुहर्षेण, बोधिताः श्रावकाः समे ॥ ४९६ ॥

सार्वजनीनताऽऽख्यानं, अनन्तरायवाटिके ।
नरकर्त्तव्यरूपं तद्दत्तं विशुद्धभावतः ॥ ४९७ ॥

तत्रत्याः पण्डिताः सर्वे, आगता गुरुसन्निधौ ।
प्रश्नोत्तरं विधायैव, गतास्ते स्वीयस्थानके ॥ ४९८ ॥

काशिशालाविधानाय, देशना विहिता शुभा ।
श्रावकशात्रपाठार्थं, सर्वं तैश्च विनिर्मितम् ॥ ४९९ ॥

ततः प्रयागराजे च, पुरिमतालपाटके ।
शकटमुखतोद्याने, आदिदेवस्य सम्भूतम् ॥ ५०० ॥

विशुद्धं केवलं ज्ञानं, तस्यैव स्थापना शुभा ।
दृष्ट्वा तां शुद्धभावेन, वन्दना भावतः कृता ॥ ५०१ ॥

शैवलोकस्य पार्श्वे हि, तत्स्थानं च समागतम् ।
पञ्चमूर्त्तिजिनेन्द्रस्य, अद्यापि परिविद्यते ॥ ५०२ ॥

१ कानपुरे ।

ततो विहरणं कृत्वा, वाराणस्यां गतास्ततः ।
तत्र यदनुभूतं तत्सर्वं हि प्रणिगद्यते ॥ ५०३ ॥

गौर्जराभिधदेशेषु, वटपद्रीयराज्यके ।
लींचग्रामे समुत्पन्नै-र्मंगलविजयैः कृतः ॥ ५०४ ॥

धर्मे निपुण भगवान्, दृढतत्त्ववित्च,
मायादिदोषरहिता, व्रतरागरक्ता ।
अम्बेति मातृगुणभृद् अभिधा यदीया,
तत्पुत्रचित्तसुखदैरचितः स ग्रन्थः ॥ ५०५ ॥

॥ इतिश्री शास्त्रविशारद–जैनाचार्य–जगत्पूज्य–जङ्गमयुगप्रधान,
सूरिसम्राट् श्रीविजयधर्मसूरिचरित्रे काशि-
गमनभावत आरम्य वाराणस्यामागमनपर्यंतं
सर्वं न्यायविशारद–न्यायतीर्थोपाध्याय
मङ्गलविजयेन यदनुभूतं तद्यथा
मत्या संयोजितम् ॥

# तृतीयः परिच्छेदः प्रारभ्यते

प्रवेशसमये तत्र, वदन्ति ब्राह्मणास्तदा ।
के यूयं क्व च गन्तारः, आगतिर्भवतां कुतः ? ॥ १ ॥

एवं प्रश्नाश्च कुर्वन्ति, उत्तरं शान्तभावतः ।
जैना वयं च काश्यां हि, अध्ययनाय चागताः ॥ २ ॥

अन्यस्थानेषु गन्तव्ये, जिगमिषा न वर्तते ।
जैनशब्दस्तु तेषां वै, श्रुतिपुटौ यदागतः ॥ ३ ॥

तदैवं ते वदन्तीति, यूयं सर्वथा नास्तिकाः ।
ये वेदं नैव मन्यन्ते, ते नास्तिका दृढा मताः ॥ ४ ॥

यूयं च वेदबाह्याः स्युः, अतो हि नास्तिकाः खलु ।
वेदबाह्यनिमित्तेन, यदि नास्तिक्यमुच्यते ॥ ५ ॥

तर्हि त्वय्यपि नास्तिक्यं, मन्यते सर्वथा मया ।
वेदविहितहिंसां च, मन्यन्ते कापिला न हि ॥ ६ ॥

वेदान्तिका न मन्यन्ते, सामाजिनस्तथैव च ।
अतस्ते नास्तिकाः सर्वे, मीमांसकाश्च केवलाः ॥ ७ ॥

आस्तिकाश्चैव ज्ञातव्या, अन्ये सर्वे च नास्तिकाः ।
यूयमपि च तद्रूपाः, सर्वथा नास्तिकाः सदा ॥ ८ ॥

नास्तिकशब्दयोनिश्चं, यदि त्वया विचार्यते ।
तदा त्वय्येव नास्तिक्य–मन्येषु नैव विद्यते ॥ ९ ॥

यजनयाजनाद्यं च, हिंसायाः पोपिका क्रिया ।
मीमांसकाश्च कुर्वन्ति, अतस्ते नास्तिका मताः ॥ १० ॥

यूयं नास्तिकमुख्याःस्युरत्रत्या ब्राह्मणा समे ।
आश्रवपुष्टिकर्त्तारो, दुर्गतिगर्त्तपातकाः ॥ ११ ॥

ये च हिंसा बहिर्भूताः, आस्तिकास्ते च सर्वथा ।
त एव खलु मन्तव्या, जैना नान्ये कदाचन ॥ १२ ॥

अन्ये च नास्तिकाः सर्वे, जैनशासनवाह्यकाः ।
इति जल्पकथां कृत्वा, वालुजीस्पर्शनामके ॥ १३ ॥

स्थाने गत्वा च भूम्यर्थं, याचना गुरुणा कृता ।
तत्रत्याः श्रावकाः सर्वे, यतिवर्गाऽनुयायिनः ॥ १४ ॥

यतीनां देशना तेषां, त्यागमार्गविरोधिनी ।
यदि त्यागी प्रवेशश्चे–त्तदास्मद्वानिता भवेत् ॥ १५ ॥

अतस्तेनाऽपि सम्प्रोक्तं, इमे च कीदृशाः मताः ।
ज्ञायंते न मया किञ्चि–त्किमर्थमागतास्तु ते ॥ १६ ॥

शङ्काशीलं च तेनैव, प्रोक्तं तेषां समीपके ।
तपोगच्छीयता तेषां, खरतर विरोधिनः ॥ १७ ॥

१ व्युत्पत्तिः ।

अतः स्थानं न दातव्यं, स्थैर्यार्थमत्र कुत्रचित् ।
श्रावकेनापि प्रोक्तं तदत्र स्थानं न विद्यते ॥ १८ ॥

इदमेव च सत्स्थानं, न योग्यं भवतां खलु ।
इति व्याजं च निष्कास्य, कुर्वन्ति मौनतां समे ॥ १९ ॥

गुरुणामिष्ट वाक्येन, प्रोक्तं तदपि बुध्यताम् ।
स्वल्पीयस्थिरतार्थं च, स्थानमिदं ददातु भोः ! ॥ २० ॥

पश्चाद्धर्मप्रसादेन, सर्वं भद्रं भविष्यति ।
तदैकविंशतिश्चैव, भूतानां स्थानकंमहद् ॥ २१ ॥

उध्वसं जनराहित्यं, यत्र न कोऽपि तिष्ठति ।
तत्स्थानं दर्शितं श्राद्धैः, गुरुणा स्वीकृतं तदा ॥ २२ ॥

अत्र विद्यार्थिनां स्थानं, साधूनां भूतभूमिका ।
तद्वीथ्यां प्लेगबाहुल्यं, श्रावकैः कथितं पुनः ॥ २३ ॥

येन केनापि योगेन, न तिष्ठन्ति ततस्तथा ।
इत्येवं मानसे मत्वा, व्याजं कुर्वन्ति तत्क्षणे ॥ २४

दृढभावं गुरोर्ज्ञात्वा, ते सर्वे मौनमाश्रिताः ।
मौनरूपेण गच्छन्ति, स्वगृहे श्रावकास्तदा ॥ २५ ॥

धर्मप्रसादतः सर्वा नक्ष्यति रोगता किल ।
आचाम्लं च प्रतिव्यक्ति, प्रत्यहं सर्वछात्रकैः ॥ २६ ॥

साधुभिश्च विधातव्यं, प्रतिज्ञेति दृढीकृता ।
प्राग्दिने मृत्युता यादृक्, तद्दिने नैव तादृशी ॥ २७ ॥

तृतीयदिवसे ज्ञेया, व्याधीनां नामशेषता ।
गुरुचारित्रप्राबल्यात्कियत्तिष्ठति विघ्नकम् ? ॥ २८ ॥

साक्षाद्गुरुमाहात्म्यं च, दृष्ट्वा ते विस्मिताः समे ।
भीलुपुरे च कल्याण-भूमिं स्पृष्ट्वा प्रमोदिताः ॥ २९ ॥

विशुद्धभावेन सुश्राद्धैः, पूजापञ्चप्रकारिका ।
कल्याणकीय भूमीनां, स्थाने च विहिता तदा ॥ ३० ॥

त्रिलोकीनाथनाथस्य, वाराणसीय स्वामिनः ।
पार्श्वनाथस्य चत्वारि, अत्र कल्याणकानि च ॥ ३१ ॥

तद्दर्शनं महापुण्यैः, प्राप्यते नात्र संशयः ।
अस्मादृशां च कथं भावी, चिन्तितं मानसे निजे ॥ ३२ ॥

आशातना च तीर्थस्य, अतीव परिजायते ।
भगवत्प्रतिमायाश्च, विपर्यासोऽपि दृश्यते ॥ ३३ ॥

पार्श्वनाथस्य स्थानेषु, नेमिनाथस्य स्थापनम् ।
शोभते पार्श्वनाथस्य, प्रतिमाऽत्र मन्दिरे ॥ ३४ ॥

अतीव जीर्णरूपं तन्मन्दिरं दृश्यते तथा ।
तत्सर्वं प्रविधानाय, गुरुणा मानसे धृतम् ॥ ३५ ॥

ज्ञाताध्ययनपूर्वं च, समिति निधि मानके ।
काले च शुक्लपञ्चम्यां, शालायाः परिस्थापनम् ॥ ३६ ॥

व्याकरणस्य न्यायस्य-साहित्यस्य च तीर्थकाः ।
प्रखरपण्डिताः सर्वे, पाठार्थं च नियोजिताः ॥ ३७ ॥

प्रत्यहं पाठकार्याय, छात्राश्च तत्पराः सदा ।
साधवोऽपि च पाठेषु, दत्तचित्ता भवन्तिते ॥ ३८ ॥

कौमुदीवृत्तिरारब्धा, मङ्गलविजयेन च ।
तर्कसङ्ग्रहटीका च, प्रारब्धाश्चान्यसाधुभिः ॥ ३९ ॥

अन्ये च काशिवास्तव्या आगच्छन्ति च छात्रकाः ।
दिगम्बरीय माणिक्य–चन्द्रगणेशिलालकाः ॥ ४० ॥

सर्वे तेऽत्र समागत्य, पठन्ति प्रेमपूर्वकम् ।
उदारचरितानां तु, वसुधैव कुटुम्बकम् ॥ ४१ ॥

वैशाखकृष्ण पञ्चम्यामकस्मादागताश्च ते ।
आगत्य छात्रसार्धंश्च, वदन्ति गुरवः खलु ॥ ४२ ॥

निष्क्रमन्तु च स्थानाद्धि, अधुनैव पतिष्यति ।
अर्धसंख्याकछात्राश्च, मुनयस्तत्र सन्ति वै ॥ ४३ ॥

अर्धास्ततोऽपि निष्क्रान्ताः, अकस्मात्पतितं गृहम् ।
सर्वचित्ते च शङ्कास्या–न्मृता एते न संशयः ॥ ४४ ॥

फुत्कारशब्दसंजाते, शिलाश्च प्रस्तरात्मिकाः ।
महत्यः पतिता मध्ये, गमनं कस्य न जायते ? ॥ ४५ ॥

किं कर्त्तव्य–विमूढाश्च, भवेयुः छात्रका समे ।
श्रावकाश्चागताः सर्वे, जाता विचारशून्यकाः ॥ ४६ ॥

गुरुणा तत्र विज्ञातं, बहिर्मार्गेण गम्यताम् ।
गत्वाविलोकीतास्तेऽपि, पठन्ति सुखपूर्वकम् ॥ ४७ ॥

साक्षाद्गुरुप्रभावं च, ज्ञात्वा चमत्कृताः समे ।
देवस्वरूपता तेषां, गुरुणा लोकिता तदा ॥ ४८ ॥

पण्डितैश्च समागत्य, स्तुतिः कृता च तत्क्षणे ।
भवादृशां च पुण्येन, विघ्नं सर्वं पलायितम् ॥ ४९ ॥

अस्माभिः स्थानपातादि, किञ्चिदपि न लोकितम् ।
किन्तु पाठस्य कार्यत्वं, सर्वदा परितन्यते ॥ ५० ॥

धर्मप्रसादता एषा, ममापि नैव किञ्चन ।
जैनधर्मप्रभावश्च, प्रसृतो नगरे तदा ॥ ५१ ॥

गुरुणा चिन्तितं तत्र, पाठस्थानं न विद्यते ।
छात्राध्ययनकार्यं च, कया रीत्या भविष्यति ? ॥ ५२ ॥

शालाधिकारिवर्गेण, आगत्य प्रार्थना कृता ।
श्वो भावी च कथं पाठः, तदर्थं किं विधीयते ? ॥ ५३ ॥

वीरचन्द्रमहाभागं, प्रत्युक्तं पत्रद्वारतः ।
स्थानाऽभावे च छात्राणां, पाठनं च कथं भवेत् ? ॥ ५४ ॥

ज्ञानध्यानादि सादृश्यं, कार्यं परं न विद्यते ।
अतस्तद्विघ्ननाशाय, अत्रत्यैः किमु कार्यते ॥ ५५ ॥

लहेरुचन्द्रसौभाग्यौ, द्वौ श्राद्धौ प्रेषितौ मुदा ।
शालास्थानविलोकाय, आगतौ श्रावकौ तदा ॥ ५६ ॥

नैकस्थान-विलोकेऽपि, योग्यस्थानं न विद्यते ।
एकमंग्रेजिकोठाख्यं, स्थानं च सानुकूलकम् ॥ ५७ ॥

तत्स्थानदर्शनात्प्राक् च, यज्ञातं तद्धि कथ्यते ।
एकदा साधवस्तत्र, पाठार्थं च समागताः ॥ ५८ ॥
तद्दृष्ट्वा भास्करानन्दैः, स्वामिभिः कूजितं तदा ।
जैनैर्नात्र प्रवेष्टव्य-माज्ञेदृशी च कारिता ॥ ५९ ॥
तच्छ्रुत्वा साधुभिस्तस्य, निष्कासे नियमः कृतः ।
गुरूणां ज्ञापितं सर्वं, शान्त्या च प्रतिबोधिताः ॥ ६० ॥
नास्तिकानां च नो पाठः, श्रावणीयोऽत्र विज्ञकैः ।
इत्याज्ञा कारिता तैश्च, इत्यपमानकारिका ॥ ६१ ॥
तद्विषयकथां श्रुत्वा, श्राद्धाभ्यां तत्र ज्ञापितम् ।
तत्स्थानं च गृहीष्यावः, सन्यासि दूरकासनम् ॥ ६२ ॥
गुरूणां निकटे गत्वा, पुनरुपायपृच्छनम् ।
केनोपायेन तत्स्थानं, मीलिष्यतीति कथ्यताम् ॥ ६३ ॥
तत्रत्य श्राद्धद्वारैव, तदुपायो गवेषितः ।
ज्ञात्वा च ज्ञापितं तैश्च, ग्रहणाय दृढीकृतम् ॥ ६४ ॥
गुरुसङ्केततस्ताभ्यां, नन्दनशास्त्रमन्दिरे ।
गत्वा गिरधरस्यैव, बधूनां सम्मुखे तदा ॥ ६५ ॥
स्थानार्थं मार्गणं चैव, कृतं च कथितं तया ।
भास्करानन्दसाधूनां, पाठशालीयकारणे ॥ ६६ ॥
प्रदत्तं च मयाऽप्यत्र, षड्विंशतिः सहस्रकैः ।
रूप्यकैस्तेन पूर्णानि, न दत्तानि ततः परम् ॥ ६७ ॥

यदि च युगपत्कोऽपि, ददातु तानि सर्वथा।
तदाऽहमपि दास्यामि, तत्स्थानं नात्र संशयः ॥ ६८ ॥

श्रुत्वा वार्त्ता च ताभ्यां हि, तत्स्थानं प्रापितं मुदा।
दत्त्वा रूप्यकमुद्राणि, लेखादि विहितं तदा ॥ ६९ ॥

गृहीत्वा पाठशालार्थं, समर्पितं च तत्क्षणे।
निष्कासनं च तत्साधोः, तत्कालं कारितं तथा ॥ ७० ॥

महाडम्बर पूर्वं च, प्रवेशोत्सवता कृता।
वाराणसीय–वास्तव्यैः जनैस्तद्दृश्यलोकितम् ॥ ७१ ॥

वदन्ति यादृशं जैनाः, कुर्वन्ति तादृशं तथा।
अतो जैनसमीपे च, न वक्तव्यं कदाचन ॥ ७२ ॥

सर्वत्र जैन विख्यातिः सञ्जाता नगरे तदा।
तत्रैव ज्ञानताऽभ्यासः, सर्वकार्यं प्रजायते ॥ ७३ ॥

वीरचन्द्रगृहस्थाश्च, गुरूणां दर्शने तथा।
वेणीचन्द्रं गृहीत्वा च, आगता बहुमावतः ॥ ७४ ॥

शालास्थानं च दृष्ट्वैव, प्रमोदो मानसे धृतः।
पञ्चतलीयता युक्तं, त्रिचत्वरैर्विराजितम् ॥ ७५ ॥

सप्तकूपा विज्ञातव्या, गुप्तस्थानमनेकशः।
नैकभूमिगृहाण्येव, नगरमध्यके स्थितम् ॥ ७६ ॥

वाताऽनुकूलकं स्थानं, सूर्यप्रकाशताजुषम्।
जैनसरस्वतीतुष्ट्यै, सुरम्यं स्थानकं महद् ॥ ७७ ॥

इति स्थान प्रशंसां च, कृत्वा श्रेष्ठिवरेण वै ।
दीर्घदृष्ट्या विलोक्यैव, क्षतिश्च दर्शिता तदा ॥ ७८ ॥

विद्यार्थिनां च सर्वेषां, सुधाकरेण शास्त्रिणा ।
परीक्षा मध्यतामावैः, गृहीता सर्वसन्निधौ ॥ ७९ ॥

सुन्दरपरिणामेन, सन्तुष्टाः सर्वपण्डिताः ।
पारितोषिकदानं च, सर्वेषां हि समर्पितम् ॥ ८० ॥

शालामन्दिरराहित्ये, ग्रामस्य जिनमन्दिरे ।
पूजार्थं सर्वछात्राश्च, गच्छन्ति सर्वदा खलु ॥ ८१ ॥

अत्रत्यमन्दिराणां च, स्वामिनो ब्राह्मणाः समे ।
श्रावकैर्मन्दिरं कृत्वा, पूजारीणां समर्पितम् ॥ ८२ ॥

अनीतीनां धनेनैव, अनीतिः परिजायते ।
पूजारी पापपिण्डश्च, षष्ठीसमासविग्रहः ॥ ८३ ॥

तेन साकं च छात्राणां, कलहः परिजायते ।
प्रभोराशातनां चैव, सहन्ते नैव छात्रकाः ॥ ८४ ॥

अत्यहं कलहस्तेषां, जायते यजने क्षणे ।
अतस्तत्परिहाराय, मन्दिरं नूतनं वरम् ॥ ८५ ॥

इति सञ्चिन्त्य तत्कार्ये, प्रारब्धा देशना खलु ।
गूर्जरसङ्घवास्तव्यैः, दत्तं पञ्चसहस्रकम् ॥ ८६ ॥

उपरि जिनचैत्यं च, सुन्दरं तद्धि कारितम् ।
खम्भातग्रामचैत्येषु, आनीतं त्रिकबिम्बकम् ॥ ८७ ॥

वाराणस्यां च तासां वै, प्रवेशोत्सवता शुभा ।
महामहेन कर्त्तव्या, भावना तादृशी मता ॥ ८८ ॥
काशिनरेशपार्श्वे च, शालामन्त्री च प्रेषितः ।
गत्वा च दलदानेन, वार्तया तोषिता नृपाः ॥ ८९ ॥
राज्ञा च सर्वसामग्री, हस्त्यश्वादिरूपिका ।
दत्ता मध्यस्थभावेन, भीलुपुरे समागता ॥ ९० ॥
अन्या शालीयसामग्री, आगता तत्र मन्दिरे ।
रामघाटीय-सामग्री, न दत्ता यतिना तदा ॥ ९१ ॥
प्रभुमूर्त्तेश्च पुष्पादि, अङ्गरचनकार्यकम् ।
बहुमूल्यसुवर्णेन, कारितं शुभभावतः ॥ ९२ ॥
हस्त्युपरि सुवर्णस्य, परिकरोऽपि विद्यते ।
सिंहासनं च तत्रैव, न्यस्तं पार्श्वप्रभोस्तदा ॥ ९३ ॥
चामरश्रेणिनां द्वन्द्वं, छत्रादि परिराजितम् ।
शुभे मुहूर्त्तके चैव, रथयात्रा कृता शुभा ॥ ९४ ॥
यात्रिकसङ्घसार्थश्च, काशीय-श्रावकाः समे ।
गुरवो मुनिराजाश्च, छात्राणां सामुदायकम् ॥ ९५ ॥
वाद्यादि सर्वसामग्री, अनेकधाऽत्र योजिता ।
वाराणसी प्रजाः सर्वा, दर्शने च समागता ॥ ९६ ॥
ततो निष्कास्य यात्रा च, विजयनगरीयके ।
कोठियार्खे समायाता, लक्ष्मी जनमंदनी ॥ ९७ ॥

दर्शनार्थं समायाता, दृष्ट्वा पार्श्वप्रभुं तदा ।
पुष्पादिभिः समभ्यर्च्य, जयघोषं च कुर्वती ॥ ९८ ॥
दिगम्बरीय यात्रासु, प्रभोर्मूर्त्तेश्च वेष्टनम् ।
वस्त्रेण परितो ज्ञेयं, सर्वसंशयकारणम् ॥ ९९ ॥
ततोऽपि रथयात्रायाः, भ्रमणमापणे खलु ।
ग्राममुख्याश्च सर्वे ते, कुर्वन्ति चोपहारकम् ॥ १०० ॥
ईदृग् रूपं न कुत्रापि, दृष्टं सर्वैः कदाचन ।
जैना नग्नाश्च म्लेच्छाश्च, नास्तिका सर्वतो मता ॥१०१॥
इति पण्डितवाक्यं तदसत्यं गुरुणा कृतम् ।
जैनमूर्त्या न नग्नत्वं, एकान्तेनैव सम्मतम् ॥१०२॥
एकान्तेनैव नग्नत्वं, दिगम्बरेषु जायते ।
श्वेताम्बरे न तादृक्षं, इति सर्वं विचारितम् ॥१०३॥
म्लेच्छत्वं ढुंढकानां च, साधुभ्यश्च समागतम् ।
रात्रौ जलस्य शून्यत्वे, अशौचं नैव मन्यते ॥ १०४ ॥
उच्छिष्ट भाजनानां च, क्षालने यज्जलं भवेत् ।
गृह्यते तेन तत्सर्वं, म्लेच्छत्वपरिसूचकम् ॥ १०५ ॥
आर्याणामृतुकालेऽपि, आगते नैव पाल्यते ।
अशुद्धाचारसेवायां, म्लेच्छत्वं नैव गच्छति ॥ १०६ ॥
दैत्यसदृशवेषे च, धारिते नैव साधुता ।
भिल्लवद्ग्रन्थिबन्धेन, वस्त्रं च परिधार्यते ॥ १०७ ॥

मरुदेशीयशैवानां, वैष्णवानां समागमात् ।
अन्यदर्शनलोकानां, तत्साधुसहवासतः ॥ १०८ ॥

विज्ञातं सर्वजीवेन, म्लेच्छत्वं परिघोपितम् ।
श्वेताम्बरीयवुध्या च, सर्वत्र परिजल्पितम् ॥ १०९ ॥

दिगम्बराच नग्नत्वं, कलङ्कं चागतं ध्रुवम् ।
एकान्तनाग्न्यस्वीकारः, युज्यते न कदाचन ॥११०॥

जैनत्ववुद्धिसद्भावे, नाग्न्यं सर्वत्र घोपितम् ।
श्वेताम्बरे न नाग्न्यं च, एकान्तेनप्रमन्यते ॥ १११ ॥

वोद्धदर्शनज्ञानस्य, मूर्खाणां परिशून्यता ।
शब्दसादृशवोधेन, नास्तिकत्वं प्ररूपितम् ॥ ११२ ॥

क्षणिकवादि वोद्धाश्च, सौगता शून्यवादिनः ।
जैनेपु शून्यवादत्वं, क्षणिकवादता तथा ॥ ११३ ॥

कुत्रापि सर्वथा न स्याद्, मिथ्या प्रलापता खलु ।
समस्तवस्तुभावेपु, नित्यानित्यत्वमुच्यते ॥ ११४ ॥

सदसद्रूपताऽस्माकं, सापेक्षयत्र सम्मता ।
स्याद्वादमुद्रया चैव, मुद्रितं वस्तु यद्भवेत् ॥ ११५ ॥

तदवस्तूनि च वस्तुत्वं, नान्यत्र परिकथ्यते ।
इदं विशुद्धसिद्धान्त–ज्ञानस्याभावतः किल ॥ ११६ ॥

कतिचिच्छब्दसाम्येन, ख्यापिता तत्र चैकता ।
तयोरेकत्वबुद्ध्याऽपि, जैनाश्च नास्तिका समे ॥ ११७ ॥

इति प्रघोषता चैषा, मूर्खाणां परिशोभते ।
जैनेषु नवतत्त्वत्व–मथवा सप्ततत्त्वकम् ॥ ११८ ॥

नयाश्च सप्त ज्ञातव्याः, सप्तभङ्गी च वस्तुषु ।
निक्षेपाश्चैव चत्वारः, प्रमाणद्वयता खलु ॥ ११९ ॥

प्रत्यक्षं च परोक्षं च, इति प्रमाणभावता ।
अनुमानादि सर्वाणि, आगतानि च तत्र वै ॥ १२० ॥

क्षीणकर्मा च या व्यक्तिः, तस्यां चैवेशता मता ।
उत्पादव्ययध्रौव्यत्वं, यत्र वस्तुनि दृश्यते ॥ १२१ ॥

तत्रैव वस्तुता ज्ञेया, नान्यत्र प्रणिगद्यते ।
इति विशुद्धतत्त्वस्य, ख्यापनं जैनदर्शने ॥ १२२ ॥

व्यवस्था नारकादीनां, मोक्षस्वरूपस्य खलु ।
यादृशी जैनसाहित्ये, नान्यत्र परिदृश्यते ॥ १२३ ॥

सर्वज्ञवीतरागस्य, ईशत्वं च विशुद्धकम् ।
रागी द्वेषी च मोही च, यश्च जगति दृश्यते ॥ १२४ ॥

तत्रैशकल्पना येषां, ते महानास्तिका मता ।
हिंसात्मयज्ञकार्येषु, यस्यैव धर्मभावता ॥ १२५ ॥

मातृपार्श्वे पशूनां च, येषां मते हि घातनम् ।
त एव नास्तिका ज्ञेयाः, असत्यप्रविभाषतः ॥ १२६ ॥

तेषां नामाऽपि पापाय, धार्मिकैर्गृह्यते कथम् ?
विशुद्धयमकर्त्तारः, येषां मते न साधवः ॥ १२७ ॥
त एव नास्तिका ज्ञेयाः, अन्ये चैवास्तिका मताः ।
समितिगुप्तिता नैव, नैव विशुद्धभावना ॥ १२८ ॥
सर्वथा नास्तिकास्ते च, न जैना नास्तिकाः खलु ।
शुद्धास्तिक्यरूपत्वं, जैनेषु सर्वथा मतम् ॥ १२९ ॥
इत्येवं धर्मचर्चा वै, अन्तरे परिजायते ।
शङ्कासमाधिकर्त्तव्ये, तोषः स्वान्ते भवेत्सदा ॥ १३० ॥
चत्वरे रथयात्रा च, पार्श्वप्रभोर्यदाऽऽगता ।
तदा सर्वैः समागत्य, वन्दना कारिता शुभा ॥ १३१ ॥
अनुमोदनकार्यत्वं, सर्वमुखे प्रजायते ।
अहो चेदृशरूपाऽपि, जैनमूर्त्तिर्न वीक्षिता ॥ १३२ ॥
प्रशमरसनैमग्न्यं, यस्या नेत्रेषु दृश्यते ।
मुखकमलसङ्काशं, सर्वदा यत्र वीक्ष्यते ॥ १३३ ॥
शस्त्रसम्बन्धराहित्यं, यस्य हस्ते विलोक्यते ।
स्त्रीसङ्गपरिशून्यत्वं, यस्य चाङ्के सदा मतम् ॥ १३४ ॥
अक्षसूत्रेण शून्यत्वं, यत्र नैव कमण्डलुः ।
सत्रैव वीतरागत्वं, नान्यत्र प्रणिगद्यताम् ॥ १३५ ॥
इति भावनया केचित्कुर्वन्ति वन्दनां शुभाम् ।
केचिज्जनानुरोधेन, केचित्कौतुकदर्शनात् ॥ १३६ ॥

एवं रीत्या च सम्पूर्ण, नगरवासिनो जनाः ।
येन केन प्रकारेण, रथयात्रासु चागताः ॥ १३७ ॥
लक्षशो जनसन्दोहे, रथयात्रा च गच्छति ।
तादृशरथयात्राऽपि, कुत्र कस्यापि नो भवेत् ॥ १३८ ॥
यादृक् पार्श्वप्रभूणां च, सञ्जाता काशिमध्यके ।
अनेक मुखतश्चैव, भक्तिस्तुतिर्मनोहरा ॥ १३९ ॥
सर्वत्र भ्रमयित्वैव, गोपालालयरूपकम् ।
यदा गच्छति तत्स्थानं, गुरुणा ज्ञापितं तदा ॥ १४० ॥
तत्पार्श्वे नैव केषांचित्, रथयात्रा तु गच्छति ।
जैनीयरथयात्रायाः, निष्कासनं कथं भवेत् ? ॥ १४१ ॥
तदा च गुरुदेवेन, पृष्टं कथं न गच्छति ।
राजमार्गेषु गन्तव्ये, केनचिन्न निषिध्यते ॥ १४२ ॥
यदि निषेध सद्भावः, कलहपूर्वको भवेत् ।
तदा तत्प्रतिकारं च, करिष्यामि सुयुक्तितः ॥ १४३ ॥
इति सम्बोध्य जैनानां, रथयात्रा ततोऽग्रतः ।
गोपालमन्दिरस्यैव, सम्मुखा सा च गच्छति ॥ १४४ ॥
ब्राह्मणाश्च समायाताः, जैनरथं विलोक्य च ।
दृष्ट्वा त्रिलोकनाथं च, चित्रमूर्त्तिरिव स्थिताः ॥ १४५ ॥
गुरुप्रभावसद्भावं, न सहन्ते च तादृशाः ।
उपद्रवं च विस्मृत्य, कुर्वन्ति वन्दनां शुभाम् ॥ १४६ ॥

क्रमाच्च नगरे भ्रान्त्वा, पाठशालासु चागता ।
पञ्चहस्ति युता यात्रा, प्रथमा परिभाव्यताम् ॥ १४७ ॥

शाला चत्वरमध्येषु, सम्भृता जनमेदिनी ।
पुंक्षणाऽऽरात्रिकं कार्यं, मङ्गलदीपसंयुतम् ॥ १४८ ॥

सर्वं च शुभमुहूर्त्तेन, विहितं सङ्घयात्रिकैः ।
शालाप्रासादमध्ये च, मूर्त्तयः स्थापिता मुदा ॥ १४९ ॥

द्वादशघटिकाकालं, रथश्च भ्रमितः खलु ।
अतीव भक्तिभावेन, कार्यं पूर्णीकृतं तदा ॥ १५० ॥

वाराणसी जना एवं, वदन्ति च परस्परम् ।
जैनानां रथयात्रा च, सुन्दरा प्रतिभाति वै ॥ १५१ ॥

रथयात्राप्रभावेन, गुरूणामुपदेशतः ।
साध्वाचारविचारेण, जैनसाहित्यदानतः ॥ १५२ ॥

ख्यातिः सर्वत्र सञ्जाताः मीलनार्थं च पण्डिताः।
समागच्छन्ति तत्रत्याः, महापदवीविभूषिताः ॥ १५३ ॥

सीतारामो महाशास्त्री, नैयायिकशिरोमणिः ।
भारतेषु च विज्ञेयः, नान्यस्तत्सदृशो मतः ॥ १५४ ॥

कालेजे मुख्यशास्त्री च, तार्तीया परिज्ञायताम् ।
व्याकरणेषु ज्ञातव्यः, महोपाध्यायताजुषः ॥ १५५ ॥

जीवननाथमिश्राश्च, मधुसूदनशास्त्रिणः ।
महोपाध्यायपदव्या च, भूषिताः जयदेवकाः ॥ १५६ ॥

राखालदासविज्ञाश्च, विभिन्नविषये खलु ।
अम्बादत्ताश्च न्यायस्य, अध्यापकाश्च मुख्यतः ॥ १५७ ॥
हरनारायणाश्चैव, व्याकरणस्य पाठकाः ।
काश्यां तत्सदृशा नैव, सन्ति व्याकरणे तथा ॥ १५८ ॥
द्विसहस्रसुशिष्याश्च, वर्त्तन्तेऽद्यापि भारते ।
स्वभावसरलाश्चैते, शुद्धस्वान्तेनपाठकाः ॥ १५९ ॥
भेदभावस्य लेशोऽपि, तेषां स्वान्ते कदापि न ।
साहित्यपाठकाश्चैव, चन्द्रिकादत्तशास्त्रिणः ॥ १६० ॥
देवदत्तादयो ज्ञेयाः, अन्येऽपि शास्त्रिणस्तथा ।
अध्यापयन्ति चात्रापि, शालायां हितचिन्तकाः ॥१६१॥
गुरूणां पादपद्मानि, ते नमन्ति च प्रेमतः ।
धर्मचर्चाऽपि चान्यस्मि-न्विषये परिजायते ॥ १६२ ॥
सर्वे पण्डितमूर्द्धन्या, आगताः प्रेमभावतः ।
वार्त्तालापं च कृत्वैव, गतास्ते स्वीयस्थानके ॥ १६३ ॥
योजनं ग्रन्थमालायाः, न्यायग्रन्था न मुद्रिताः ।
अतस्तस्यैव चाप्त्यर्थं, ग्रन्थमुद्रापनंवरम् ॥ १६४ ॥
व्याकरणादिग्रन्थानां, मुद्रणं नैव विद्यते ।
तेषां पाठः कथं कार्यः,? मुद्रापनं ततो वरम् ॥ १६५ ॥
किञ्च ग्रन्थप्रचाराय, जैनसाहित्यवृद्धये ।
अन्येषां विदुषां स्वान्ते, धर्मभ्रान्तिनिवृत्तये ॥ १६६ ॥

न्यायव्याकृतिग्रन्थाश्च, नो सन्ति जैनशासने ।
अन्यथा कथमस्माकम्, ग्रन्थाःपठन्ति वे सदा ॥ १६७ ॥
इति भ्रान्तिनिरासाय, द्वेषभावनिवृत्तये ।
मुद्रापनं च ग्रन्थानां, कर्त्तव्यं सर्वथा खलु ॥ १६८ ॥
इति बुद्ध्या विचार्यैव, मुद्रापनं च कार्यते ।
ग्रन्थमुद्रणकार्यं च, श्रुत्वा गुर्जरदेशतः ॥ १६९ ॥
साधूनां श्रावकानां च, आगतानि दलानि वै ।
मुद्रणं जैनशास्त्राणां, न कर्त्तव्यं कदाचन ॥ १७० ॥
अन्यधर्मीयविज्ञानां, हस्ते ग्रन्थश्च जायते ।
आगतश्च यदा हस्ते, कर्त्ता च खंडनं तदा ॥ १७१ ॥
दास्यन्ति चोतरं तेषा-मदाने स्युश्च निन्दकाः ।
अतो मुद्रापनं कार्यं, न कर्त्तव्यं कदाचन ॥ १७२ ॥
वेणीचन्द्रस्य पत्रेषु, साधुभिर्लिखितं बहु ।
तद्दलं वाचयित्वैव, गुरुणां हास्यमागतम् ॥ १७३ ॥
बालिशास्ते च विज्ञेयाः, बुद्धिशून्याश्च ते मताः ।
पूर्वाचार्यमुनीन्द्रैश्च, तन्निर्माणं कृतं कथम् ? ॥ १७४ ॥
युक्तिविकलनिर्माणं, तैः कदा न वितन्यते ।
इत्येवं दृढविश्वासः, मानसे मम निश्चलः ॥ १७५ ॥
आपणे चौर्यवस्तूनां, विक्रयो नैव विद्यते ।
रथ्याश्च विक्रयस्तेषां, तद्दृष्टान्तेन ज्ञापितम् ॥ १७६ ॥

इति ज्ञानं च तत्स्वान्ते, किं तदा नैव विद्यते ?
अन्यथा ग्रन्थनिर्माणं, नाकुर्वन् ते कदाचन ॥ १७७ ॥
परन्तु प्रौढयुक्तीनामा--कररूपपुस्तकम् ।
यदि न स्यात्तदा तेषामग्रे—वक्तुं न शक्यते ॥ १७८ ॥
भाविप्रजा हितार्थैव, ग्रन्थनिर्मापनं मतम् ।
कपोलकल्पितानां च, नावकाशः कदाचन ॥ १७९ ॥
तादृग्युक्तिमजा—नानाः, वदन्ति बालसादृशम् ।
जैनाचार्यामहाभागाः, भवन्ति तर्कशालिनः ॥ १८० ॥
षड्दर्शनप्रवेत्तारः, युक्तियुक्तप्ररूपकाः ।
अतस्तेषां भयस्यैव, अवकाशो न सर्वथा ॥ १८१ ॥
तदा कथं च मादृक्षैः, हृदि भयं विधीयते ।
यदि च खण्डनं तेन, क्रियते च तदा मया ॥ १८२ ॥
तस्यापि खण्डनं चैव, युक्त्या बहु वितन्यते ।
मणिविजयसाधूनां, तादृशं कथ्यतां त्वया ॥ १८३ ॥
भयलेशो न कर्त्तव्यः, स्वप्नेऽपि च भवादृशैः ।
एवं शान्तस्वभावेन, युक्त्या च ज्ञापितं तदा ॥ १८४ ॥
लिखितं गुरुणा तेन, तद्दलं तत्र प्रेषितम् ।
तत्पत्रं वाचयित्वैव, सर्वेषां मानसे किल ॥ १८५ ॥
आगतं पुरुषार्थत्वं, प्रमोदः प्रकटीकृतः ।
जैनन्यायादिशास्त्राणा—माद्यं तन्मुद्रणं मतम् ॥ १८६

सार्वज्याख्यानशैली च, गुरुणा प्रकटायिता ।
काश्यां च जैनशालायां, जैनग्रन्थप्रपाठनम् ॥ १८७ ॥
तदपि प्रथमं ज्ञेयं, विद्वेपि जनसम्मुखे ।
न्यायशास्त्रादिनिर्माणे, ग्रथावलिश्च योजिता ॥ १८८ ॥
रथयात्राऽपि काश्यां वै, आद्या निष्कासिता तदा ।
आद्याऽऽविष्कृति कार्यं, सर्वं तद्गुरुणा कृतम् ॥ १८९ ॥
तादृशकार्यकर्तृणां, वद शक्तिश्च कीदृशी? ।
गुरुवर्यमहाभाग–महात्म्यं किमु कथ्यते ॥ १९० ॥
तत्क्षणे काशिराजस्य, भृत्यश्चैकोऽपि चागतः ।
पत्र हस्ते गृहीत्वैव, अपृच्छद् गुरुनामकम् ॥ १९१ ॥
तत्रत्य कार्यकरेण, गृहीतं तद्धिपत्रकम् ।
गुरुपार्श्वे समागत्य, दलं तादृक् च दर्शितम् ॥ १९२ ॥
तत्र किं लिखितं चास्ति, तच्च प्रकटभावतः ।
वाच्यते गुरुणा यावत्ता–त्तत्स्पष्टं भवेत्खलु ॥ १९३ ॥
भक्तिभावेन राज्ञैव, रामनगरवासिना ।
भवतां दर्शने चैव, अतीच्छा प्रकटायिता ॥ १९४ ॥
आगतिर्येन मार्गेण, भवतां परिजायते ।
तदर्थं यानपात्रादि, मया सर्वं विधीयते ॥ १९५ ॥
यदि च सुरनदीमार्गे, इच्छाऽऽगमे प्रवर्त्तते ।
तदा श्रवहणं चैव, मदीयं प्रेष्यते वरम् ॥ १९६ ॥

यदि च राजमार्गेण, जिगमिषा प्रवर्त्तते ।
तदाऽऽश्वीयरथानाञ्च, प्रेषणं क्रियते मया ॥ १९७ ॥
वाहनमुपवेश्यैव, साधुभिर्नैव गम्यते ।
सर्वधर्मीयसाधूनां, इयमाचारता समा ॥ १९८ ॥
यानारूढो यतिं दृष्ट्वा, सचेलं स्नानमाचरेत् ।
इत्येवं भवतां शास्त्रे, लिखितं च विचार्यताम् ॥ १९९ ॥
जैनशास्त्रेषु साधूनां, वाहनस्योपवेशने ।
निषेधः सर्वथा ज्ञेयः, कथमयोऽपविश्यते ॥ २०० ॥

प्रोक्तं मनुस्मृतौ—

दृष्टिपूतं न्यसेत्पादं, वस्त्रपूतं जलं पिबेत् ।
सत्यपूतां वदेद्वाणीं, मनःपूतं समाचरेत् ॥ २०१ ॥
दृष्टिपूतं न्यसेत्पादं, इत्येवं जायते कथम् ?
यानोपवेशकर्त्तव्ये, धर्माचारो विनश्यति ॥ २०२ ॥
आचारपरिहीणश्च, भ्रष्टरूपेण गीयते ।
शास्त्रं च तस्य पावित्र्-करणे नैव शक्तिमत् ॥ २०३ ॥
अतो धर्मस्य रक्षार्थै, आचारः परिपाल्यते ।
कस्यापि वाहनस्यैव, उपरि नोपविश्यते ॥ २०४ ॥
राजघाटस्य मार्गेण, गम्यते गुरुणा तदा ।
साधुछात्रैश्च सम्मील्य, प्राप्तं च राजमन्दिरम् ॥ २०५ ॥

गुरुणामागतिं दृष्ट्वा, राजाऽऽयाति च सम्मुखे ।
मन्त्रिवर्गोऽपि सामीप्ये, भक्तिभावं प्रदर्शयेत् ॥ २०६ ॥
तदाज्ञां प्राप्य तत्रैव, तिष्ठन्ति गुरवः खलु ।
ततोऽनु साधुछात्राश्च, उपविष्टा यथाक्रमम् ॥ २०७ ॥
निरासने च राजाऽपि, उपविष्टश्च सम्मुखे ।
धर्मचर्चाप्रस्तावे च, जीवनज्ञाख्य पण्डितः ॥ २०८ ॥
तद्विघ्नकरणार्थैव, अन्तराले प्रपृच्छति ।
भवतां दर्शनं चैव, दर्शनषट्कमध्यके ॥ २०९ ॥
आद्यं व चरमं ज्ञेयं, मध्यमं दर्शनं तथा ।
कूटाशयस्वभावेन, प्रश्नावलिः कृता तदा ॥ २१० ॥
यदाद्यं दर्शनं स्वस्य, तदा राज्ञो विरोधता ।
वदेत्स्वदर्शनं श्रेष्ठम–न्याधमं निगद्यते ॥ २११ ॥
इत्येवं जल्प्यमाने च, महाविरोधता भवेत् ।
अन्तिमं यदि प्रोच्येत, तदा तदधमं मतम् ॥ २१२ ॥
अधमस्यादरो नैव, केनापि कार्यते कदा ।
मध्यमे कथनेनापि, प्रयोजनं न सिध्यति ॥ २१३ ॥
इति सञ्चिन्त्य तेनैव, विघ्नं च कारितं महत् ।
गुरुणा तीक्ष्णबुध्यैव, उत्तरं दापितं मुदा ॥ २१४ ॥
दर्शनेनापि येनैव, मोक्षप्राप्तिः प्रजायते ।
तदेव दर्शनं मे स्याद–न्यद्भवविडम्बकम् ॥ २१५ ॥

तादृशमुत्तरं श्रुत्वा, राजाऽपि हर्षितः खलु ।
गुरुभ्यो धन्यवादं च, ददाति बहुप्रेमतः ॥ २१६ ॥

प्रतिनिवृत्य तस्माच्च, शालायां ते समागताः ।
द्विवर्षीय परीक्षायै, राममिश्राश्च शास्त्रिणः ॥ २१७ ॥

आगताः पाठशालायां, बृहस्पतेश्च सादृशाः ।
सर्वतन्त्रस्वतन्त्रोऽसौ, राममिश्रसुधीरयम् ॥ २१८ ॥

साधुछात्राश्च तत्स्थाने, परीक्षार्थं समागताः ।
प्रश्नागूढस्वरूपाश्च, तैश्च निष्कासिता दृढाः ॥ २१९ ॥

प्रश्नावलिनिरीक्ष्यैव, छात्राणां मानसे खलु ।
संक्षोभः परिजायेत, विचार्य लिखितास्तदा ॥ २२० ॥

कालेजे दापनं यासां, तासामत्रापि दापनम् ।
व्याकरणीयगम्भीरा, न्यायस्य बुद्धिपेशलाः ॥ २२१ ॥

साहित्ये सुखदाः प्रोक्ताः, लिख्यन्ते साधुछात्रकैः ।
मौखिक्याश्च परीक्षायां, तर्के पेशलप्रश्नकाः ॥ २२२ ॥

एतेषामुत्तरं श्रुत्वा, प्रमुदिताश्च शास्त्रिणः ।
वार्षिकोत्सवकार्ये च, शास्त्रिणस्ते समागताः ॥ २२३ ॥

पारितोषिकदानं च, दत्तं तत्समये बहु ।
शास्त्रिणामादरश्चैव, कृतोऽस्तीत्र सप्रेमतः ॥ २२४ ॥

व्याख्यानं सर्वविज्ञानां, गुरूणां च प्रजायते ।
पण्डितमालवीयाख्याः, मदनमोदनास्तथा ॥ १२५ ॥

आगत्यैवोपदेशं च, ददति ज्ञानपोपकम् ।
पादपूर्त्ति समस्या च, संस्कृते विहिताश्च तैः ॥ २२६ ॥
तादृशबुद्धिकौशल्यं, छात्राणां वीक्ष्यपण्डिताः ।
शालास्तुति कृता बह्वी, गुरूणां धन्यवादनम् ॥ २२७ ॥
एकान्ते गुरुसामीप्ये, आगत्य पण्डितैश्च तैः ।
विश्वविद्यालयानां च, स्थापने मतयाचनम् ॥ २२८ ॥
गुरुणा शुद्धभावेन, योजना दर्शिता शुभा ।
युक्तियुक्तां च तां मत्वा, पण्डिता हर्षितास्तदा ॥२२९॥
भारतवासि राज्ञां च, प्राग्वचनं च गृह्यताम् ।
दरभङ्गादि राजानां, मेलनमत्र कार्यके ॥ २३० ॥
पञ्चदशादिलक्षाणां, प्राप्यते वचनं यदि ।
तदा परिश्रम त्वं च, सफलं परिजायते ॥ २३१ ॥
गुरूणां बुद्धिकौशल्यं, ज्ञात्वा च पण्डितेन वै ।
अनुमोदं विधायैव, कुम्भमेलनकृत्यके ॥ २३२ ॥
व्याख्यानपरिदानार्थं, गुरूणां प्रार्थना कृता ।
लाभालाभौ च विज्ञाय, प्रस्थानं क्रियते तदा ॥ २३३ ॥
प्रयागराजगन्तव्ये, हर्षायिताश्च छात्रकाः ।
माधवो गुरुणा सार्धमागता भक्तिभावतः ॥ २३४ ॥
व्याख्यानमण्डपेऽस्माकं, व्यवस्था कारिता च तैः ।
गुरूणां तत्र स्थैर्यार्थं, किन्तु ग्रामे स्थिताश्च ते ॥ २३५ ॥

नग्नाटधर्मशालायां, तेषां च प्रार्थनादितः ।
व्याख्यानसमये तत्र, गच्छन्ति सर्वसाधवः ॥ २३६ ॥

सनातनीयधर्माणां, महासभाऽत्र वर्तते ।
भारतीयमहाधर्मसभा च-वर्तते किल ॥ २३७ ॥

आर्यसमाजिधर्मस्य, तृतीया च सभा तदा ।
क्रिश्चियनजनानां च, चतुर्थी तु सभा मता ॥ २३८ ॥

सनातनसभायां च, यो वदति च संस्कृतम् ।
तस्यैव तत्र प्रावेश्ये, दलमेकं तु मीलति ॥ २३९ ॥

येषां पार्श्वे दलं तच्च, विद्यते ते च सज्जनाः ।
प्रविशंति सभायां च, अन्ये तिष्ठन्ति बाह्यके ॥ २४० ॥

आमन्त्रणात्समायाताः, जैनाश्च तत्र मण्डपे ।
प्रवेशकरणे तेषां, निषेधो नैव विद्यते ॥ २४१ ॥

विंशतिर्लक्षकानां च, यात्रिणां समुदायता ।
दशसहस्र संख्याकाः, नग्नाटा साधवो मता ॥ २४२ ॥

त्रिवेणिसङ्गमे स्नानं, महापुण्यविधायकम् ।
मान्यता तादृशी येषां, तेषां किं ब्रूमहे वयम् ॥ २४३ ॥

नदीस्नानेन मुक्तिश्चे-त्मत्स्यादीनां कथं न सा ।
काशिवासिकषायाणां, गोवधादिककारिणाम् ॥ २४४ ॥

तेषां तत्स्नानतो नैव, कथं मुक्तिः प्रजायते ?
एकान्तस्नानतो मुक्तिः, विचारो युज्यते न हि ॥ २४५ ॥

सनातनसभायां च, दशसहस्रसंख्यकाः ।
पण्डिताः प्रेक्षकास्तत्र प्रवेशोऽन्यस्य नो कदा ॥ २४६ ॥

शृङ्गेरिमठवास्तव्य, शङ्कराचार्य-साधूनाम् ।
आधिपत्ये च व्याख्यानं, सर्वेषामेव जायते ॥ २४७ ॥

दीनदयालशर्माणः, व्याख्याताः कुशला वहु ।
पण्डितानां च व्याख्यानं, असम्बद्धप्रलापनम् ॥ २४८ ॥

विषयोऽन्यत्र चैषां वै, जल्पनं चान्यमार्गिकम् ।
उत्थितजल्पनेनैव, अभ्यासोन कदाचन ॥ २४९ ॥

पण्डितप्रवराणां च, व्याख्याने हास्यपात्रता ।
अध्यापकस्य कार्येषु, जायन्ते कुशलाश्चते ॥ २५० ॥

उत्थाने हर्षवाहुल्यं, व्याख्याने मतिमन्दता ।
अतस्तेषु न योग्यत्वं, संन्यासिनां तथैव च ॥ २५१ ॥

भारतधर्मपर्षद्यां, व्याख्याता वहवो जनाः ।
धार्मिकज्ञानता तेषां, मिथ्यात्व वासिनी सदा ॥ २५२ ॥

पण्डितानां च तर्कादि, शास्त्रं विना च ज्ञानता ।
वेदश्रुतिस्मृतीनां च, स्वल्पापि नैव विद्यते ॥ २५३ ॥

सामाजे च वितण्डास्या-द्व्यसनं वालिवादनम् ।
अन्यच नैव ज्ञातव्यं, खण्डने नैव युक्तिता ॥ २५४ ॥

क्रिश्चीयनसभायां च, विश्वासस्य प्रधानता ।
शून्यता च सुयुक्तीनां, अतस्तत्रापि नो मनः ॥ २५५ ॥

व्याख्यानं गुरुदेवानां, स्वल्पसामयिकं खलु ।
ऐक्यविषयबोधत्वं, रोचकं धर्मपोषकम् ॥ २५६ ॥

पञ्चपल्लोपदेशस्य, कालस्तैश्च नियन्त्रितः ।
किन्तु द्विघटिका जाते, एकोऽपि न वदेत्खलु ॥ ५५७ ॥

केवलं करतालीनां, ध्वनिर्गुञ्जायते बहु ।
तेषां व्याख्यानकर्त्तव्ये, यो रसः परिजायते ॥ २५८ ॥

तादृशो नैव चान्येषां, व्याख्याने रसता भवेत् ।
मालवीयामहाभागैरन्ये, विभिन्नदेशजैः ॥ २५९ ॥

सम्मील्य स्तुतिवादानि, कृतानि बहुभेदतः ।
स्वदेशे देशनाऽऽदाने, प्रार्थना च कृता तथा ॥ २६० ॥

धूम्रशकटमारुह्य, अस्माभिः सह सर्वथा
आगम्य धर्मदानाय, देशना प्रकटीयताम् ॥ २६१ ॥

व्याख्यानावसरे तैश्च, कल्पनाऽनेकधा कृता ।
पीताम्बरो हरिः किंवा, किंवा रामावतारता ॥ २६२ ॥

अथवा शङ्कराचार्यः, अवतीर्णो धरातले ।
इत्येवं कल्पना ज्ञेया, अन्येषां मानसे तदा ॥ २६३ ॥

ज्ञातश्च जैनसाधुः सः, प्रकाण्डपंडितः खलु ।
सर्वदर्शनमन्तव्यः, यस्य व्याख्यानमीदृशम् ॥ २६४ ॥

सर्वत्र धन्यवादानां, वृष्टिश्च परिजायते ।
तत्र सर्वजनानां च, प्रमोदो मानसे भवेत् ॥ २६५ ॥

व्याख्यानकरणार्थैव, प्रार्थनाऽऽशाम्बरैः कृता ।
तेषामाग्रहसद्भावे, जिनालयोपदेशनम् ॥ २६६ ॥

औदार्य जैनधर्मस्य, यादृशं शुचि विद्यते ।
तादृगन्यत्र नो ज्ञेयं, प्रमाणेन परिष्कृतम् ॥ २६७ ॥

भगवदादिदेवानां, कल्याणभूमिस्पर्शनम् ।
जुगमन्दिरजैनेन, प्रश्नः कृतश्च भावतः ॥ २६८ ॥

वैदेशिके च गन्तव्ये, आशयः कीदृशो भवेत् ?
इति श्रोतुं च मे काङ्क्षा, उत्तरेणैव पूर्यताम् ॥ २६९ ॥

गुरुणा च तदा प्रोक्तं, यथा गङ्गाजलं शुभम् ।
क्षारोदधिपयो योगे, गङ्गात्वं परिनाशयेत् ॥ २७० ॥

तथा त्वदीयचित्तं चेत्तत्रत्यानां समागमे ।
आर्यत्वं यदि रक्षेत, तदा गतौ न दोषता ॥ २७१ ॥

आर्यत्वरक्षणे शङ्का, यदि च भवतां भवेत् ।
तदा तत्र न गन्तव्यमस्माकमयमाशयः ॥ २७२ ॥

गुरूणां बुद्धिकौशल्यं, श्रुत्वा ते चकितास्तदा ।
प्रशंसां भूरि कुर्वन्ति, विनयानम्रः गात्रतः ॥ २७३ ॥

काशिसंस्कृतकालेजे, जैनविद्यार्थिनां न हि ।
परीक्षार्थं च प्रावेश्यं, कदापि तत्र युज्यते ॥ २७४ ॥

गणेशिलालजैनेन, तत्र पण्डितपार्श्वके ।
गत्वा पृष्टं तदा तेन, विचित्रमुत्तरं कृतम् ॥ २७५ ॥
जैनविद्यार्थिरूपेण, तां दातुं नैव शक्यते ।
यदि च दातुमिच्छा चेच्छैवोऽहमिति लिख्यताम् ॥२७६॥
पत्रभरणकाले च, स्वधर्मो न प्रकाश्यताम् ।
अन्यथा वै परीक्षां तु, दातुं शक्येत नो कदा ॥२७७॥
विज्ञानां तादृशं वाक्यं, युक्तिहीनं श्रुतं तदा ।
गुरुपार्श्वे समागत्य, सर्वं तेन निवेदितम् ॥ २७८ ॥
आश्चर्यं गुरुचित्तेषु, तदा महत्प्रजायते ।
धर्मविगोपनं कृत्वा, परीक्षा नैव दीयताम् ॥ २७९ ॥
तत्वपरीक्षाप्रदाने च, आत्मनि नैव लाभता ।
अवसरे च तत्सर्वं, भविष्यति शुभं खलु ॥ २८० ॥
किमर्थं तादृशं कार्यं, क्रियते भाग्यसेवधिः ।
परीक्षायाश्च तादृश्याः, नास्त्यस्माकं प्रयोजनम् ॥ २८१ ॥
तस्याश्च यदि मोक्षः स्यात्तदा तत्र प्रवर्तताम् ।
अन्यथाऽसत्यसेवायां, भववृद्धिर्भविष्यति ॥ २८२ ॥
इति संज्ञाप्य तेषां वै, आश्वासो गुरुणा कृतः ।
अत्र केन प्रसङ्गेन, वेणिसाहब आगतः ॥ २८३ ॥
प्रिन्सिपलः स ज्ञातव्यः, तन्मीलनाय तत्र वै ।
गुरुणामागतिं ज्ञात्वा, समयस्तेन योजितः ॥२८४॥

अतीव प्रेमपूर्वेण, मीलिता गुरवस्तदा ।
वार्त्तां प्रासङ्गिकीं कृत्वा, परीक्षाविषयः खलु ॥ २८५ ॥

निष्कासितः सुयोगेन, वार्तालापस्वरूपतः ।
गवर्नमेण्टकालेजे, प्रतिबन्धः कथं भवेत् ? ॥ २८६ ॥

जैनेतराः परीक्षायां, तिष्ठन्ति नैव श्रावकाः ।
ब्राह्मणैस्तादृशं प्रोक्तं, भवतां नैव शोभते ॥ २८७ ॥

सार्वजनीनकालेजे, एकदेशीयता कथम् ।
तच्छ्रुत्वा तेन सम्प्रोक्तं, केन प्रोक्तं भवादृशाम् ॥ २८८॥

सर्वविद्यार्थिवर्गाणां, द्वारमुद्घाटितं भवेत् ।
अस्माकं यादृशाः शैवाः, वैष्णवा अपि तादृशाः ॥२८९॥

जैनाश्च तादृशा ज्ञेयाः, पक्षपातो न विद्यते ।
जैना नायान्ति तत्कार्ये, इति श्रुतं न कर्हिचित् ॥२९०॥

भवतां यदि जिज्ञासा, जैनछात्रस्य पाठने ।
परीक्षार्थं तदा चैव, प्रवेशः सुलभो भवेत् ॥ २९१ ॥

परीक्षापत्रकं ग्राह्यं, मत्याश्वासितसर्वदा खलु ।
यदि निरोधता तत्र, केन चिक्रियते तदा ॥ २९२ ॥

तदुपरि मया योग्यः, प्रबन्धः प्रविधीयते ।
तादृशी भावना तेन, महोदयेन दर्शिता ॥ २९३ ॥

धन्यवादं विधायैव, स्वस्थाने आगताश्च ते ।
आगत्य सर्ववार्त्तादि, सर्वेषां श्रावितं खलु ॥ २९४ ॥

प्रमोदः सर्वचित्तेषु, अतीव परिजायते ।
मङ्गलविजयादीनां, साधूनां कथितं तदा ॥ २९५ ॥

गणेशिलालविज्ञानां, ज्ञापितं तच्च सर्वशा ।
परीक्षार्थं च ते सर्वे, भवन्ति सोत्साहकाः ॥ २९६ ॥

अधिकारश्च सर्वेषां, जैनानां नो भवेत्कथम् ?
अतएव च दातव्या, परीक्षा प्रेमभावतः ॥ २९७ ॥

युष्माकं साधवश्चैव, निःसंशयं ददत्यपि ।
उपदेशप्रदानेन, तोपिताः सर्वछात्रकाः ॥ २९८ ॥

साधवस्तत्र भावेन, श्रमं कुर्वन्ति सर्वदा ।
परीक्षापत्रकं भृत्वा, प्रेषितं तस्य संनिधौ ॥ २९९ ॥

इमां वार्त्तां च श्रुत्वैव, पण्डिताः परिकोपिताः ।
विरोधकार्यकर्त्तव्ये, सर्वदा सम्मुखाश्च ते ॥ ३०० ॥

न्यायस्य मध्यमायां च, परीक्षायां समुत्सुकाः ।
साधवस्तत्र सञ्जाताः, रात्रिदिनं पठन्ति ते ॥ ३०१ ॥

नव्यन्यायपरीक्षा च, अतीव कठिना मता ।
कालेजे दानवुद्ध्या च, साधुत्रयी गता तदा ॥ ३०२ ॥

मङ्गलन्यायसाधू च, अन्यश्चैको मुनिः खलु ।
गत्वा पत्रादि लेखं च, कुर्वन्ति सर्वसम्मुखे ॥ ३०३ ॥

पञ्चदिनपरीक्षा च, लेखनविषये मता ।
मौखिकस्य समादाने, गङ्गाधराः समागताः ॥ ३०४ ॥

जैनधर्मविरोधस्य, कर्त्ता स पण्डितः खलु ।
द्रोहिपार्श्वे कथं मे स्यात्परीक्षा मौखिकी यतः ?॥ ३०५ ॥
ततः साधू समुत्थाय, प्रिन्सिपलसमीपके ।
गत्वा निवेदनं चैव, तद्विषये च ज्ञापितम् ॥ ३०६ ॥
अस्मद्मौखिकपृष्टव्ये, तिष्ठतु च भवानपि ।
अन्यथाऽन्यायसद्भावः, सर्वथा च भविष्यति ॥ ३०७ ॥
निवेदनं च श्रुत्वा वै, स एव तत्र चागतः ।
शास्त्री गङ्गाधरश्चैव, प्रिन्सिपलमहोदयाः ॥ ३०८ ॥
सर्वे तत्स्थानके स्थित्वा, परीक्षा दानकार्यकम् ।
प्रारम्भन्ते च माध्यस्थ–भावेन सर्वसज्जनाः ॥ ३०९ ॥
पृच्छन्ति चाष्टप्रश्नाश्च, उत्तरं सुविचारतः ।
तेऽपि कुर्वन्ति तत्काले, सर्वे ते हर्षितास्तदा ॥ ३१० ॥
षड्विंशतिच्छात्राणां, उत्तीर्णाः सप्तछात्रकाः ।
अन्ये सर्वे च तच्छून्याः, वीक्षन्ते श्यामचित्तकाः ॥३११॥
जैनसाधुसमुत्तीर्णे, द्वेपायिताश्च ब्राह्मणाः ।
किं कर्त्तव्ये च दिग्मूढाः, सञ्जाताः काशिमध्यके ॥३१२॥
द्वौ साधू च समुत्तीर्णौ, एकस्तु योग्यताहीनः ।
गुरूणां स्थिरताऽभावे, आचार्यस्य परीक्षणम् ॥३१३॥
काशीयं नैव जायेत, अतस्तीर्थपरीक्षणम् ।
कर्तुमिच्छा तयोर्जाते, अतः सर्वं विचार्यते ॥ ३१४ ॥

वङ्गीयकालिकातायाः, तीर्थस्य मध्यमां विना ।
अन्या नैव प्रजायेत, तदर्थमुद्यमं खलु ॥ ३१५ ॥
विज्ञप्तिपत्रकं चैकमत्र विलिख्य प्रेषितम् ।
अत्रत्याः समितेश्चैव, सभ्यास्तु मीलितास्तदा ॥ ३१६ ॥
अत्रैव वङ्गदेशीय, परीक्षा मध्यमां विना ।
तीर्थस्य नैव कल्प्येत, इयं रीतिश्च शाश्वती ॥ ३१७ ॥
विना च मध्यमां तीर्थं, दातुं च न प्रवर्त्तते ।
अनुमतिश्च वङ्गीय-सभ्यैश्च परिदापिता ॥ ३१८ ॥
साधूनामयमाचारः, पादचारेण सङ्गतिः ।
पुनः पुनः समायाते, बहु कष्टं परिजायते ॥ ३१९ ॥
विद्वद्भिः साधुभिस्तत्स्थैः, मध्यमा काशिस्थानके ।
दत्ता च परिणामस्य, साफल्यं च समागतम् ॥ ३२० ॥
उत्तीर्णपत्रदृष्टे च, तेषां तोषस्तु मानसे ।
सञ्जातेऽपि परीक्षार्थमागता प्रेमभावतः ॥ ३२१ ॥
मैथिलजीवनाथश्च, वाणीशझा द्वितीयकः ।
शालायाञ्च परीक्षार्थं, दृढीकृतञ्च मानसम् ॥ ३२२ ॥
परीक्षा च कृता ताभ्यां, साधूनां बहुयुक्तितः ।
प्रश्नोत्तरं च सञ्जातं, लैखिकं वाचिकं तथा ॥ ३२३ ॥
तीर्थस्यैव परीक्षायां, सर्वथा कुशलौ इमौ ।
तयोः प्रवेश पत्राणि, प्रेष्यन्तां च सुखेन वै ॥ ३२४ ॥

समित्यां तद्दलं चैव, वाचितं सभ्यतारकैः ।
हस्ताक्षरं च कृत्वैव, अनुमतिः प्रदर्शिता ॥ ३२५ ॥
नव्यन्यायस्य तीर्थस्य, परीक्षा योग्यकौ मतौ ।
इतिसम्मतिता तैश्च, दर्शिता शुभभावतः ॥ ३२६ ॥
शास्त्रिणो नवद्वीपस्थाः, गोस्वामितर्कतीर्थकाः ।
नवकृष्णाऽभिधानाश्च, अध्यापनार्थमागताः ॥ ३२७ ॥
सार्वभौमीयविज्ञानां, यदूनां परिपार्श्वके ।
अधीत्य तर्कतीर्थं च, प्रवीणः सर्वदा खलु ॥ ३२८ ॥
आगत्य न्यायतीर्थस्य, ग्रन्थांश्च पाठयन्ति ते ।
तेषामध्यापनं चैव, युक्तिपूर्वेण जायते ॥ ३२९ ॥
सिंहावलोकन्यायेन, पुनः काशिविचारणा ।
क्रियते शुभभावेन, दत्तचित्तेन तत्र व ॥ ३३० ॥
गूर्जरदेशतः साधुसप्तकं तत्र चागतम् ।
कर्पूरविजयाद्याश्च, चारित्रान्ताः प्रकीर्त्तिताः ॥ ३३१ ॥
कर्पूरो वृद्धिचन्द्राणां, शिष्यो लघुतमो मतः ।
क्षमामोहनतच्छिष्यौ, भक्तिश्च गुरुशिष्यकः ॥ ३३२ ॥
अमृतो भक्ति शिष्यः स्याचारित्रो विनयस्य वै ।
सर्वे ते विजयान्ताः स्युः, तपोगच्छानुयायिनः ॥ ३३३ ॥
एकस्तु चान्यसाधुः स्यादित्येवं परिज्ञायताम् ।
सन्मानं श्रावकैस्तेषां, कारितं स्थानरूपतः ॥ ३३४ ॥

काशीगततीर्थयात्राञ्च, कृत्वा च पठनोद्यताः ।
भक्तिः काव्यानि चान्येऽपि, न्यायव्याकरणानि च ॥३३५॥

गुरूणां निकटे भक्तिः, काव्यं पठति प्रेमतः ।
अन्यत्र बुद्धिराहित्या–त्परिश्रमं करोति न ॥ ३३६ ॥

अनुक्रमेण पाठानां, कारकाः दुःखहारकाः ।
चारित्रो बुद्धिमान्द्येन, पठति स्वल्पमात्रकम् ॥ ३३७ ॥

बहुशो विकथायाञ्च, समयः परिगालयेत् ।
ज्ञापिते गुरुणा सर्वं, तदपि बुध्यते न हि ॥ ३३८ ॥

न्यायेऽयोग्यतां ज्ञात्वा, प्रारब्धा शब्दरूपिका ।
चातुर्मासिकपर्यन्ते, तेन पूर्णा च नो कृता ॥ ३३९ ॥

सम्मेतशैलतीर्थस्य, यात्रायां भावना बहु ।
पाठशालां परित्यज्य, तदर्थं विहृतिः कृता ॥ ३४० ॥

पञ्चत्रिंशच्च छात्राः स्युः, साधवः पञ्चसंख्यकाः ।
अनुक्रमेण यात्रायै, कुर्वन्ति विहृतिं तदा ॥ ३४१ ॥

आराग्रामे च नग्नाटैः, सन्मानः बहुशः कृतम् ।
सर्वेषां साधुछात्राणां, देवकुमारसज्जनैः ॥ ३४२ ॥

छात्राणां च परीक्षाऽपि, कारिता बहुप्रेमतः ।
समस्यापूर्त्तितां ज्ञात्वा, हर्षितास्तन्निवासिनः ॥ ३४३ ॥

तोषिारिकतां दत्वा, सन्तोषः प्रकटीकृतः ।
व्याख्यानं गुरुदेवानां, सर्वजनहिताय च ॥ ३४४ ॥

जैनधर्मप्रभावश्च, सर्वोपरि प्रजायते ।
ततः पाटलिपुत्रेषु, विहारो गुरुणा कृतः ॥ ३४५ ॥
स्थूलिभद्रमहात्मानः जगद्विख्यातसाधवः ।
उमास्वातिर्महाभागाः, सुदर्शनमहोदयाः ॥ ३४६ ॥
पञ्चशतप्रमाणानां, ग्रन्थानां रचना कृता ।
स्थूलिभद्रेण तत्रैव, कोशावेश्यागृहे खलु ॥ ३४७ ॥
चातुर्मासविधानाय, गुर्वाज्ञा प्राप्यते तदा ।
तस्याश्च चित्रशालायां, षड्रसभोजने कृते ॥ ३४८ ॥
तस्याश्च हावभावेन, न मुह्यते कदाचन ।
कज्जलमयस्थाने च, स्थितेऽपि नैव लिप्यते ॥ ३४९ ॥
तेषां पुरुषसिंहानां, जन्मादिस्थानस्पर्शना ।
जायते पुण्ययोगेन, पाटलिपुत्रपत्तने ॥ ३५० ॥
ततो विहृत्य पापायां, वीरनिर्वाणभूमिषु ।
आद्या च देशना तैश्च, प्रदत्ता तत्र भूमिषु ॥ ३५१ ॥
गौतमादि मुनीनां च, गणधरत्वदापनम् ।
तत्रैव परिसञ्जातमन्येषां, संयमादिकम् ॥ ३५२ ॥
सङ्घस्य स्थापना तत्र, कारिता प्रभुणा शुभा ।
अन्तिमदेशना तेन, कारिताऽतिमनोहरा ॥ ३५३ ॥
पवित्रभूमिकां स्पृष्ट्वा, जन्मजातं पवित्रकम् ।
इति विचारतां भाव्य, यात्रां कुर्वन्ति भावतः ॥ ३५४ ॥

विहारग्रामवास्तव्याः, गोविन्दचन्द्रश्रावकाः ।
आगत्य तत्र भक्तिं च, कृत्वा नयन्ति तत्र वै ॥ ३५५ ॥
हस्तिवाद्यादि सामग्रीं, समादाय च सन्निधौ ।
भावुकास्तत्र सामीप्ये, गता नगरबाह्यके ॥ ३५६ ॥
लालबागं समानीय, गुरूणां देशना श्रुता ।
रूप्यकमोदकानां च, प्रभावना शुभा खलु ॥ ३५७ ॥
तत्रत्य मन्दिराणां च, चैत्यवन्दनता कृता ।
ततो राजगृहे चैत्ये, पञ्चपर्वतके स्थिते ॥ ३५८ ॥
वैभारगिरिवर्यादौ, यात्रा कृता च भावतः ।
सर्वगणधराणां च, मोक्षस्थानं च तन्मतम् ॥ ३५९ ॥
तत्रत्यसर्वचैत्यानां, दर्शनं शुभप्रेमतः ।
कृत तद्गुरुवर्येण, अन्यत्स्थानं विलोकितम् ॥ ३६० ॥
प्रभूणां विहृतिस्तत्र, नैकशः परिजायते ।
समवसरणं तेषां, देवैश्च विहितं तदा ॥ ३६१ ॥
श्रेणिकादिमहाराजाः, अभयादिकमन्त्रिणः ।
चिल्लणाश्राविकाद्याश्च, अन्ये च भाग्यशालिनः ॥ ३६२ ॥
आगत्य देशनालाभं, कुर्वन्ति शुद्धभावतः ।
धन्यास्ते दिवसा ज्ञेयाः, येषु च देशना श्रुतिः ॥ ३६३ ॥
आगता कणमध्ये च, श्रुता च बहुभावतः ।
श्रुत्वा च स्वीय कल्याणं, ते धन्याः साधयन्ति ये ॥३६४॥

तदा क्व मादृशा जीवाः, कुत्र गताश्च हे प्रभो !
मदीयं चैव कल्याणं, कदा भवति तद्वद ॥ ३६५ ॥

नैकयोनि परिभ्रम्य, महापुण्येन चाप्यते ।
शासनं सर्वज्ञस्यैव, तदपि निष्फलं गतम् ॥ ३६६ ॥

धन्योऽस्मि खलु संसारे, प्राप्तं त्वदीयदर्शनम् ।
महापापीष्टजीवानां, तदपि नैव जायते ॥ ३६७ ॥

कल्याणं सर्वज्ञानां च, शासने एव जायते ।
धन्यं तच्छासनं ज्ञेयं, सर्वज्ञगुणपोषकम् ॥ ३६८ ॥

पवित्रभूमिदृष्टव्ये, पवित्रा भावना भवेत् ।
सैव कल्याणहेतुः स्यात्कर्त्तव्यो नात्र संशयः ॥ ३६९ ॥

सुव्रतस्वामिकल्याणं, चतुष्कमत्र जायते ।
अतिमुक्तादिसाधूनां, मोक्षस्थानमिहैव च ॥ ३७० ॥

शालिभद्रादिसाधूनां, चानशनस्य स्थानकम् ।
अत्रैव परिज्ञातव्यं, धन्यः स दिवसः खलु ॥ ३७१ ॥

कुण्डनपुरग्रामश्च, गौतमगुरुजन्मदम् ।
स्थानं पवित्रतारूपं, जैनदर्शनसम्मतम् ॥ ३७२ ॥

गुणशीलीय चैत्यं तद्भवमज्ञानकारणम् ।
स्पष्टं तच्छुद्धभावेन, गुरुणा दर्शनं कृतम् ॥ ३७३ ॥

तदपि पुण्यरूपं तद् दृष्ट्वाऽऽनन्दः प्रजायते ।
ततो विहृत्य क्षत्रियकुण्डे च गुरवो गताः ॥ ३७४ ॥

श्रीवीरस्वामिदेवानां, कल्याणकत्रयी मता ।
उपरि जन्मजं स्थानं, च्यवनस्थानकं तथा ॥ ३७५ ॥
तलहट्यां च दीक्षायाः, स्थानकं प्रणिगद्यते ।
लेच्छीयराजण्यक्तीनां, स्थानत्वाल्लच्छवारकम् ॥३७६॥

तन्नाम्नैव प्रसिद्धं तत्तत्रापि मन्दिरं शुभम् ।
धर्मशालादिसामग्री, अत्रैव प्राप्यते खलु ॥ ३७७ ॥
जन्मभूम्यादिके स्थाने, मन्दिराणि भवन्ति च ।
वीरकल्याणपूजादि, कार्यं च श्रावकैः कृतम् ॥ ३७८ ॥

भक्तिभावश्च तत्रापि, कृतोऽनेकप्रकारतः ।
तत्सर्वस्थानकं स्पृष्ट्वा, काकन्दीनगरीं गताः ॥ ३७९ ॥
दर्शनार्थं च भावेन, साधुछात्रैश्च संयुताः ॥
सुविधिनाथदेवानां, कल्याणकचतुष्टयी ॥ ३८० ॥
अत्रैव परिजाता सा, तस्याः पवित्रदर्शनम् ।
कर्त्तव्यं निर्जरा हेतु, सर्वैर्विशुद्धभावतः ॥ ३८१ ॥
कल्याणभूमिरत्रैव, पूर्वदेशे च विद्यते ।
ततः पवित्रदेशत्वं, यादृशं शास्त्रसम्मतम् ॥ ३८२ ॥
तादृश नैव विज्ञेयमन्यत्र, कुत्रचित्तथा ।
परन्तु कालदोषेण सञ्जातं शाक्तरूपकम् ॥ ३८३ ॥
महाहिंसकदेशोऽयं, सञ्जातः पापयोगतः ।
विप्राणां मांसभक्षीणां, उपदेशोऽपि तादृशः ॥ ३८४ ॥

स्वार्थलुब्धैश्च तैरेव, देशो रसातलं नीतः ।
स्वल्पकार्यस्य सिद्ध्यर्थं, कुर्वन्ति किं न पापिनः? ॥३८५॥

सर्वजन्तुविनाशश्च, तेषामेवोपदेशतः ।
प्रतिजन्तु च तेषां वै, एकतुण्डप्रदापनम् ॥ ३८६ ॥

चतुराणकद्रव्यं च, तण्डुलं पादसेतकम् ।
प्रतिवर्षे च तेषां हि, धोतिकं रूप्यसंयुतम् ॥ ३८७ ॥

एतावत्परिलाभाय, लक्षशो जीवघातनम् ।
कार्यते जगदम्बायाः, समीपे तैश्च पापिभिः ॥ ३८८ ॥

अहो तेषां नृशंसानां, का गतिर्भाविनी वद ।
विनानरकभूमिं च, अन्यत्स्थानं न विद्यते ॥ ३८९ ॥

सर्यूपारीणबङ्गीयाः, मैथिलाः श्रोत्रियास्तथा ।
पूर्वदेशीयविप्राश्च, प्रायस्ते पापपोषकाः ॥ ३९० ॥

प्रतिग्रामं प्रतिस्थानं, शतशो जन्तुघातनम् ।
सङ्कल्पं कारयित्वैव, तत्स्थाने हन्यते पशुः ॥ ३९१ ॥

यो यं वधेत तं सोऽपि, हन्याच नात्र संशयः ।
सङ्कल्पमिति कृत्वैव, पश्चात्तैः तत्र हन्यते ॥ ३९२ ॥

ध्वनास्थानं च तज्ज्ञेयं न तु मातृनिकेतनम् ।
तदृष्ट्वा गुरुदेवानां, स्वान्ते कारुण्यभावना ॥ ३९३ ॥

तादृशपापनाशाय, अहिंसाधर्मवृद्धये ।
पुस्तकं लिखितं चैकमहिंसाधर्मपोषकम् ॥ ३९४ ॥

दिग्दर्शनेन संयुतं चाहिंसादिपदं मतम् ।
प्रकटं तदभिख्यं च, रचितं पुस्तकं शुभम् ॥ ३९५ ॥
निर्माय पुस्तकं तादृग्नैके जीवाः प्रबोधिताः ।
दशसहस्रसङ्ख्याकं, पुस्तकं मुद्रितं तदा ॥ ३९६ ॥
भारते नैकभाषाया–मनुवादाश्च कारिताः ।
दशसहस्रसङ्ख्याकं, पुनश्च मुद्रितं खलु ॥ ३९७ ॥
एवं परोपकाराश्च, गुरुणा विहितास्तदा ।
तद्विषये समाख्यानं, शतशः कारितं तदा ॥ ३९८ ॥
व्यवस्था पूर्वदेशीय–तीर्थानां नैव विद्यते ।
व्यवस्थाकारका ये च, ते एव नाशका मताः ॥ ३९९ ॥
देवद्रव्यस्य नो काचिद् व्यवस्था परिदृश्यते ।
तत्रत्य कार्यकर्त्तारः, भृत्यास्ते भुञ्जते समम् ॥ ४०० ॥
कार्यवाहकजैनाश्च, बाब्बाख्या पूर्वदेशीयाः ।
चाटुकारिजनानां च, रक्षन्ति स्वार्थसिद्धये ॥ ४०१ ॥
जी हुजूरेति वक्तारः, सरकारेति कुत्रचित् ।
एवं शब्दं च श्रुत्वैव, उत्फुल्लमानसाश्च स्युः ॥ ४०२ ॥
यथा पावापुरीग्रामे, तूफानी एव धूर्त्तराट् ।
सर्कारमिति सम्प्रोच्य, स्वाधीनं च करोति सः ॥४०३॥
सर्वे तदीयबन्ध्वाद्याः, कार्यं कुर्वन्ति तत्रवै ।
भण्डारा मन्दिराणां च, तस्याधीना मताः सदा ॥४०४॥

अलङ्कारादि सामग्री, तदधीना च सम्मता ।
निर्मापनादि कार्यं च, तूफानी हि करोति सः ॥ ४०५ ॥

धर्मशालादि कार्याणां, कर्त्ता स एव ज्ञायताम् ।
चतुर्थांशं च तेषां वै, मीलति नात्र संशयः ॥ ४०६ ॥

आपणे वस्तुव्रातानां, ग्रहणे आणकद्वयम् ।
उभयपार्श्वतो ग्राह्यं, इति तेषां मतं खलु ॥ ४०७ ॥

जैनमन्दिरस्थाये च, नयन्ति प्रस्तरा गृहे ।
अन्यवस्तु च तेनैव, गृह्यते मन्दिराचतः ॥ ४०८ ॥

क्षत्रियकुण्डतीर्थेषु, भृतको रामरूपकः ।
सोऽपि सकलवस्तूनां, चोरको लुब्धकस्तथा ॥ ४०९ ॥

मन्दिराशातनानां च, गणना नैव विद्यते ।
ब्रह्मभट्टाश्च तत्रैव, कार्यकरा जना मताः ॥ ४१० ॥

अनाचारस्य सेवायां, स बहुकुशलः सदा ।
कार्यवाहकजैनाश्च, शृण्वन्ति न हि कस्यचित् ॥ ४११ ॥

इसरीपेढिकार्यस्य, कर्ता रुद्रप्रसादकः ।
सर्वं स्वाहा च कर्त्तव्ये, इति तस्य मतिः सदा ॥४१२॥

सकलजैनसङ्घस्य, राजनगरहट्टकम् ।
कार्यवाहाश्च तस्यैव, विद्यन्ते परचक्षुषः ॥ ४१३ ॥

तेऽपि चाटुकराः सर्वे, रुद्रप्रसादकौशलम् ।
जानन्ति नैव केनाऽपि, योगेन ते कदाचन ॥ ४१४ ॥

देवद्रव्यविनाशस्य, कर्त्तारं कथयन्ति न ।
वनकर्मादिकार्याणां, कर्त्तारस्तेऽपि सम्मताः ॥ ४१५ ॥

तत्कार्ये श्रावकाणां च, निषेधः सर्वथा खलु ।
कर्मादानं कथं तर्हि, कुर्वन्ति कार्यग्राहकाः ॥ ४१६ ॥

धनवृद्धिर्न तेनापि, योगेन खलु सम्मताः ।
अतो महानुभावेन, तन्निषेधो विधीयताम् ॥ ४१७ ॥

आनन्दजीकल्याणं च, श्रीसङ्घहट्टनामकम् ।
संरक्ष्य कर्मणाऽऽदानं, कर्मादानं न मुञ्चति ॥ ४१८ ॥

यत्र श्रीसङ्घहट्टं स्यात्तत्रैव धर्मनिन्दकाः ।
विप्राश्च कार्यकर्त्तारः, तेषां कीदृक् च जैनता ? ॥ ४१९ ॥

जैनाश्च कार्यकर्त्तारः, भवन्ति यदि सर्वथा ।
पोलप्रकटता तेषां, जायते चेति भीतितः ॥ ४२० ॥

जैनश्राद्धनियोगश्च, अतएव न युज्यते ।
पावापूर्यां च तादृश्यं, जातं च नाटकं महत् ॥ ४२१ ॥

विप्रपीशाचवर्गेण, बाबूनां प्रार्थना कृता ।
जैनमुनीमसद्भावे, कार्यं किञ्चिन्न जायते ॥ ४२२ ॥

भवत्पोलप्रकाशोऽपि, क्रियते तेन तत्क्षणे ।
निष्कासनं यदा श्रेष्ठं, भवतां यदि सम्मतम् ॥ ४२३ ॥

विचारमिति निर्णीय, जैनो निष्कासितस्तदा ।
विप्राणां पापवृत्तीनां, तस्य च ज्ञानता न हि ॥ ४२४ ॥

प्रभुनिर्माल्यपुष्पाणां, विक्रयश्चापणे सदा ।
अन्यान्यपि च पुष्पाणि, जायन्ते चान्यमन्दिरे ॥ ४२५ ॥

अनेकाशातना तत्र, वर्ण्यन्ते च यथा कति ? ।
तदुपेक्षा च कर्त्तॄणां, भाविदुःखपरंपरा ॥ ४२६ ॥

देवद्रव्यस्य रक्षायां, सुगतिर्भाविनी सदा ।
अन्यथा दुर्गतिश्चैव, जायते नात्र संशयः ॥ ४२७ ॥

तत्रत्य धन्नुलालश्च, सरलो धर्मभावुकः ।
तूफ़ानी धूर्त्तराजस्य, वाग्जालेषु समागतः ॥ ४२८ ॥

मयानुभवयोगेन, ज्ञाता च तस्य धूर्त्तता ।
ज्ञापिता तस्य सामीप्ये, ततोऽपि नैव बोधितः ॥ ४२९ ॥

राजगृहेऽपि बाहुल्यमाशातना सुविद्यते ।
पर्वतोपरिदेवाधिदेव–पूजा न जायते ॥ ४३० ॥

चातुर्मासेऽपि तत्रैव, सर्वथा नैव पूजनम् ।
मांसाशि ब्राह्मणानां च, हस्ते पूजा विधापनम् ॥४३१॥

कार्यवाहाश्च तत्रापि, नागच्छन्ति कदाचन ।
धर्मशाला च धर्माय, कारिता भावुकैर्जनैः ॥ ४३२ ॥

मांसाशिवङ्गदेशीयाः, तिष्ठन्ति तत्र स्थानके ।
स्वानुकूलं च भोज्यं तज्जैनधर्मविरोधि यद् ॥ ४३३ ॥

निषेधो नैव तैरेव, कदाचिदपि तन्यते।
अधर्मपुष्टिदातॄणां, तेषां किं कथ्यते मया? ॥ ४३४ ॥

तत्रत्य मन्दिराणां च, स्थितानां पर्वतोपरि।
तेषां विभागकार्यस्य, अधिकारो न विद्यते ॥ ४३५ ॥

अनधिकारचेष्टायाः, कर्त्तव्ये दक्षता न हि।
बुद्धिभ्रंशोऽपि तत्कार्ये, कर्त्तव्ये परिज्ञायताम् ॥ ४३६ ॥

अनिष्टकार्यता जाता, अनिष्टपरिणामकृत्।
विनाशकालिके बुद्धि-वैपरीत्यं प्रजायते ॥ ४३७ ॥

पावापुरीयतीर्थे च, प्रभुभक्तिविधानके।
जिनमूर्त्तिसमानेये, जलमन्दिरधामनि ॥ ४३८ ॥

तन्निमित्तं महायुद्धं, नग्नाटैश्च कृतं तदा।
कलहो न्यायसंस्थाने, विलायते गतः खलु ॥ ४३९ ॥

कालो न्यायस्य सञ्जातः, तथापि गम्यते न हि।
इतिवार्तां च श्रुत्वैव, गताश्च न्यायतीर्थकाः ॥ ४४० ॥

प्रभाकरेण युक्ताश्च, गत्वा पृष्टश्च तत्क्षणे।
धन्नुलालेन तस्यैव, समीपे चोत्तरं कृतम् ॥ ४४१ ॥

वसूनां शून्यतायोगे, कथञ्च तत्र प्रेष्यते।
सर्वत्र वसुकार्याय, दण्डं च लिखितं खलु ॥ ४४२ ॥

तथापि चोत्तरं चैव, तदर्थमागतं ननु।
अस्मत्पार्श्वे च द्रव्यादि, तदर्थं नैव विद्यते ॥ ४४३ ॥

राजनगरवास्तव्यैः, कार्यवाहकपुङ्गवैः ।
यदि तीर्थं प्रदीयेत, द्रव्यं दास्यामि वै तदा ॥ ४४४ ॥

इत्येवं वाक्यवक्तव्ये, शोभा नैव प्रजायते ।
अतो मया च किं कार्यं, कथञ्च प्रेष्यते किल ॥ ४४५ ॥

दिग्मूढं मानसं ज्ञात्वा, प्रकारो दर्शितस्तथा ।
मोहमय्यां च रङ्गूने, तदेवं प्रेष्यते मया ॥ ४४६ ॥

मङ्गलविजयादीनां, वाक्येन हर्षिताः समे ।
ततो रङ्गूनद्रव्यार्थं, चत्वारः श्रावका गताः ॥ ४४७ ॥

मोहमय्यां च द्वौ श्राद्धौ, गतौ तौ कुशलौ सदा ।
तत्सर्वस्थानतश्चैव, दशसहस्रमागतम् ॥ ४४८ ॥

इन्द्रचन्द्रः सुशीलोऽसौ, योग्यो विलायते मतः ।
गुरुवाक्येन सन्तुष्टः, स्वार्थत्यागी स गच्छति ॥ ४४९ ॥

आशिर्वचनमादत्य, प्रभुभक्तिश्च भावतः ।
कृत्वा नगरवास्तव्यैः, धूमगन्त्रीं गतः खलु ॥ ४५० ॥

ततो मोहमयीं गत्वा, यानमार्गेण चागमत् ।
ततो लन्दनके ग्रामे, गत्वा कार्यञ्च साधितम् ॥ ४५१ ॥

धर्मप्रसादतः सर्वकार्यसिद्धिः प्रजायते ।
श्वेताम्बरीय जैनानां, जयघोषश्च भारते ॥ ४५२ ॥

स्वार्थत्यागी महाभागः सुचन्ती कुलदीपकः ।
लक्ष्मीचन्द्रात्मजो धन्यवादपात्र गतः खलु ॥ ४५३ ॥

तारादेवी च तन्माता, तत्कार्यं चानुमोदितम् ।
आचाम्लं च तपः सर्वैः, विहितं शुभभावतः ॥ ४५४ ॥

प्रायश्चित्तं गुरोः पार्श्वे, याचितं शुद्धबुद्धितः ।
धर्मकार्ये च गन्तव्ये, प्रायश्चित्तं यतो न हि ॥ ४५५ ॥

तथापि स्वान्तशुद्ध्यर्थं, यात्रा सिद्धाचलस्य वै ।
प्राक्कृत्वा च ततो गेहे, आगन्तव्यं ततः खलु ॥४५६॥

मङ्गलाज्ञां शिरोधार्य, इन्द्रेणैव तथा कृतम् ।
सर्वत्र जैनसङ्घेन, धन्यवादाः समर्पिताः ॥ ४५७ ॥

ततो विहृत्य यत्रैव, वीरकेवलभूमिका ।
ऋज्वी च वालुका यस्याः, तत्तटे ज्ञानमुत्तमम् ॥४५८॥

तत्स्थानं स्पर्शयित्वैव, सम्मेतशिखरे गिरौ ।
भावना शुद्धभावेन, भावयन्तः समागताः ॥ ४५९ ॥

दूराद्गिरिश्च दृष्टैव, हर्षाश्रूणि पतन्ति च ।
अद्य मे सफलं जन्म, अद्य मे सफलं दिनम् ॥ ४६० ॥

अद्य मे सफलं गात्रं, सञ्जातं गिरिस्पर्शनात् ।
महापुण्योदयेनैव, गिरीणां दर्शनं भवेत् ॥ ४६१ ॥

कल्याणं यत्र चैकं स्यात्पवित्रं तच्च मन्यते ।
यत्रैव विंशतिर्जाता, तत्स्थानस्य च किं ब्रुवे ॥४६२॥

कोटिशो मुनिराजानां, निर्वाणं यत्र सम्मतम् ।
महापवित्र तत्स्थानं, कथं नैव निगद्यते ॥ ४६३ ॥

ते मुनयश्च समागत्य, अनशनं च तत्र वै ।
चतुर्थशुक्लध्यानेन, मोक्षं च प्रापयन्ति ते ॥ ४६४ ॥
अतो महापवित्रं तत्स्थानं च कथ्यते मया ।
क्षपकश्रेणिसंकाशं, ध्यानिनां स्थानमुच्यते ॥ ४६५ ॥
पदे पदे समारोहे, भावनाऽलौकिकी भवेत् ।
मोक्षस्थानमतस्तद्धि, भगवता प्रदर्श्यते ॥ ४६६ ॥
तलहट्याश्च गत्वैव, कुर्वन्ति श्रमनाशनम् ।
यत्र गन्धर्वदेवाश्च, आगत्य तत्र धामनि ॥ ४६७ ॥
नृत्यादि गीतगानश्च, कुर्वन्ति प्रभुसन्निधौ ।
तत्स्थानं तेन शब्देन, प्रसिद्धमागतं खलु ॥ ४६८ ॥
किञ्चिद्दूरश्च गन्तव्ये, सीतानालुः समागतम् ।
तद्विषये कथा चैका, श्रुता साऽपि प्रकाश्यते ॥ ४६९ ॥
मुनिसुव्रतदेवानां, यत्र निर्वाणभूमिका ।
तत्स्थानस्पर्शनार्थैव, अतीवानन्दिताश्च ये ॥ ४७० ॥
रामलक्ष्मणसीताश्च, त्रयस्तत्र समागताः ।
तत्र स्नानादिकार्याय, जलं तैश्च विशोधितम् ॥४७१॥
आद्य स्नानेन सीतायाः, सीतानालु प्रसिद्धिभाग् ।
सञ्जातमत्र तीर्थे च, ततोऽद्यावधि जायते ॥ ४७२ ॥
चम्पकतरुछायायां, विश्रम्य शोधनं कृतम् ।
शुद्धश्च निर्मलं नीरं, दृष्ट्वा हर्षिताश्च ते ॥ ४७३ ॥

अनेकवैद्योपचाराय, श्राद्धेन तत्र चानीता ।
निषिद्धा गुरुणा तस्मात्तथापि तत्र रक्षिता ॥ ४९४ ॥

उपचारेऽपि कर्त्तव्ये, रोगशान्तिर्न जायते ।
निरुपाये च तत्रैव, गुरुणा स्थिरता कृता ॥ ४९५ ॥

साधुविद्यार्थिनश्चते, कुर्वन्ति तीर्थयात्रिकाम् ।
स्वाध्यायधर्मयोगादि, कार्ये च तत्पराः खलु ॥ ४९६ ॥

अनेके तीर्थयात्रायै, आगच्छन्ति च भावुकाः ।
गुरुसेवोपदेशादि, कार्यं कुर्वन्ति ते तदा ॥ ४९७ ॥

विद्यार्थिभक्तिलाभश्च, प्राप्नुवन्ति च तत्र वै ।
धर्मध्यानादिकं सर्वं, कर्त्तव्यं सर्वसम्मतम् ॥ ४९८ ॥

तीर्थयात्रासु गन्तव्ये, सर्वैः सह सप्रेमतः ।
बन्धुभावश्च मन्तव्यः, दुःखे दुःखी सुखे सुखम् ॥ ४९९ ॥

कषायः सर्वथा त्याज्यः, मिथ्यात्वपरिनाशनम् ।
प्रतिक्रान्तिर्हि कर्त्तव्या, चैत्यवन्दनकं तथा ॥ ५०० ॥

अष्टविधा च पूजापि, स्नानविधानपूर्विका ।
प्रत्याख्यानं यथाशक्ति, कर्त्तव्यं हितकाङ्क्षिभिः ॥ ५०१ ॥

जापोऽपि जिनराजस्य, स्वच्छस्वान्तेन सर्वथा ।
स्वामिभक्तिविधानादि, कार्यञ्च तत्क्षणे मतम् ॥ ५०२ ॥

नियमोऽपि च कर्त्तव्यः, पुनरागमने तथा ।
विकृतीनां परित्यागः, तीर्थस्थाने विशेषतः ॥ ५०३ ॥

इत्येवं देशनाकाले, कालिकतीय भावुकाः ।
पारेखाऽमूल्यपुत्राद्या, मुन्नालालदयश्च ते ॥ ५०४ ॥

गुरुवन्दनकार्याय, विज्ञप्त्यर्थं समागताः ।
व्याख्यानसमये तैश्च, विहारायैव याचिताः ॥ ५०५ ॥

पादव्याधेश्च बाहुल्ये, आगतिरधुना न हि ।
रोगशान्तिर्यदा मे स्यात्तदा सर्वं विचार्यते ॥ ५०६ ॥

मासिकीवेदनां तत्र, अनुभूय विचक्षणैः ।
साधुभिः सह गन्तव्ये, निर्णयश्च कृतस्तदा ॥ ५०७ ॥

साधुविद्यार्थिभिर्मार्गे, कावाकृति विधाय च ।
गुरुंस्तत्र समारोप्य, गम्यते बहुभक्तितः ॥ ५०८ ॥

प्रतिग्रामं च व्याख्यानं, गुरुणा प्रविधीयते ।
नैकमांसाशि जीवाश्च, उध्धृताः शुद्धबोधतः ॥ ५०९ ॥

गुरूणां देशनां श्रुत्वा, जागृता धर्मभावना ।
तत्रैव स्थितिकर्त्तव्ये, बह्वी च प्रार्थना कृता ॥ ५१० ॥

क्रमेण वर्धमाने च, ग्रामेऽपि गुरवो गताः ।
तत्रत्य बङ्गवास्तव्यैः, जनैः स्थानं समर्पितम् ॥ ५११ ॥

तेरापन्थिकश्राद्धेन, बङ्गीय जनसम्मुखे ।
आगत्य प्रतिषेधश्च, कृतश्चातीव रोषतः ॥ ५१२ ॥

तादृशानां च साधूनामुत्तरणं न शोभनम् ।
अस्मदीयाश्च नैते स्युः, वदन्त्येवं च कोपतः ॥ ५१३ ॥

अपरं कारणं तस्य, दन्तकथान्तरागतम् ।
महादेवी च सीताऽपि, गच्छति जलशोधने ॥ ४७४ ॥

चम्पकवृक्षव्रातानामधो वल्लिवितानकैः ।
सञ्छन्नं सुन्दरं नीरं, देव्या च परिदर्शितम् ॥ ४७५ ॥

ततः प्रभृति तत्स्थानं, सीतानालुप्ररूपितम् ।
रामलक्ष्मणबन्धुभ्यां, वस्त्रेण शोध्यते जलम् ॥ ४७६ ॥

स्नानादिका क्रियाः सर्वाः विहितास्तत्र तैस्तथा ।
ततः शिखरयात्रायै, गच्छन्ति च त्रयस्तदा ॥ ४७७ ॥

परिधाय शुभं वस्त्रं, निर्मलगात्रता युताः ।
भगवत्पूजने कार्ये, चलन्ति भाग्यशालिनः ॥ ४७८ ॥

नमः श्रीतीर्थराजाय, सर्वतीर्थमयात्मने ।
इत्येवं ध्यानकार्यञ्च, कुर्वन्ति गमने क्षणे ॥ ४७९ ॥

सर्वत्र दर्शनं कृत्वा, मुनिसुव्रतसन्निधौ ।
प्रोक्तं मादृशजीवानां, त्वच्छासनं कथं मीलेत् ? ॥४८०॥

महापुण्येन लब्धं तत्कथं विस्मार्यते खलु ।
भगवत्सुव्रतानां च, शासने चोत्तमा जनाः ॥ ४८१ ॥

अनेके खलु सञ्जाताः, श्रीपालमदनादयः ।
चन्द्रकुमारसम्पूर्ण–श्रद्धालु–श्रावकाः किल ॥ ४८२ ॥

अन्ये सत्पुरुषास्तेषां, जायन्ते शासने किल ।
त्वदीयं शासनं धन्यं, मीलितं मादृशां खलु ॥ ४८३ ॥

हे प्रभो ! तव ध्यानेन, मोक्षप्राप्तिर्भवेद्ध्रुवम् ।
का वार्त्ता चान्य कार्यस्य, तदेव प्रार्थ्यते मया ॥ ४८४ ॥

इत्येवं भावनां कृत्वा, ततः स्थानाद्विनिर्गतम् ।
रामो भरतयुक्तेन, त्रिकोटिमुनिना सह ॥ ४८५ ॥

अनशनादि कार्याय, गत्वा च पादलिप्तके ।
सिद्धाचले समागत्य, मोक्षसुखं जगाम च ॥ ४८६ ॥

सीतानाद्य समाश्रित्य, सर्वश्च वर्णितं मया ।
तथैव सर्वमाख्यानमागतं गुरुमानसे ॥ ४८७ ॥

गुरुणा साधुभिः सार्कं, कृता यात्रा च भावतः ।
मेघाडम्बरकूटे च, ध्यानं च गुरुणा कृतम् ॥ ४८८ ॥

विशुद्धमानसेनैव, विशुद्धा भावना कृता ।
आत्मानं स्वीय धन्यं च, मत्वा तेन च तत्क्षणे ॥ ४८९ ॥

पार्श्वप्रभोश्चरित्रं तत्सर्वं च हृदि धारितम् ।
त्रिकोटियोगसामग्री, समर्पिता विशुद्धितः ॥ ४९० ॥

जलमन्दिरस्थानेषु, चैत्यवन्दनपूर्वकम् ।
ध्यानं शुभं विधायैव, अन्यत्र दर्शनं कृतम् ॥ ४९१ ॥

सम्पूर्ण तीर्थराजस्य, वन्दनाऽनेकशः कृता ।
ततो निवर्तमाने च, पादस्तु स्खलितः तदा ॥ ४९२ ॥

अतीव कष्टसद्भावः, वेद्योदयेन जायते ।
गुरुणां मानसे किञ्चिन्नैव दुःखं प्रजायते ॥ ४९३ ॥

अनेकवैद्योपचाराय, श्राद्धेन तत्र चानीता ।
निषिद्धा गुरुणा तस्मात्तथापि तत्र रक्षिता ॥ ४९४ ॥

उपचारेऽपि कर्त्तव्ये, रोगशान्तिर्न जायते ।
निरुपाये च तत्रैव, गुरुणा स्थिरता कृता ॥ ४९५ ॥

साधुविद्यार्थिनश्चते, कुर्वन्ति तीर्थयात्रिकाम् ।
स्वाध्यायधर्मयोगादि, कार्ये च तत्पराः खलु ॥ ४९६ ॥

अनेके तीर्थयात्रायै, आगच्छन्ति च भावुकाः ।
गुरुसेवोपदेशादि, कार्यं कुर्वन्ति ते तदा ॥ ४९७ ॥

विद्यार्थिभक्तिलाभञ्च, प्राप्नुवन्ति च तत्र वै ।
धर्मध्यानादिकं सर्वं, कर्त्तव्यं सर्वसम्मतम् ॥ ४९८ ॥

तीर्थयात्रासु गन्तव्ये, सर्वैः सह सप्रेमतः ।
बन्धुभावश्च मन्तव्यः, दुःखे दुःखी सुखे सुखम् ॥ ४९९ ॥

कषायः सर्वथा त्याज्यः, मिथ्यात्वपरिनाशनम् ।
प्रतिक्रान्तिर्हि कर्त्तव्या, चैत्यवन्दनकं तथा ॥ ५०० ॥

अष्टविधा च पूजापि, स्नानविधानपूर्विका ।
प्रत्याख्यानं यथाशक्ति, कर्त्तव्यं हितकाङ्क्षिभिः ॥ ५०१ ॥

जापोऽपि जिनराजस्य, स्वच्छस्वान्तेन सर्वथा ।
स्वामिभक्तिविधानादि, कार्यञ्च तत्क्षणे मतम् ॥ ५०२ ॥

नियमोऽपि च कर्त्तव्यः, पुनरागमने तथा ।
विकृतीनां परित्यागः, तीर्थस्थाने विशेषतः ॥ ५०३ ॥

इत्येवं देशनाकाले, कालिकतीय भावुकाः ।
पारेखाऽमूल्यपुत्राद्या, मुन्नालालदयश्च ते ॥ ५०४ ॥

गुरुवन्दनकार्याय, विज्ञप्त्यर्थं समागताः ।
व्याख्यानसमये तैश्च, विहारायैव याचिताः ॥ ५०५ ॥

पादव्याधेश्च बाहुल्ये, आगतिरधुना न हि ।
रोगशान्तिर्यदा मे स्यात्तदा सर्वं विचार्यते ॥ ५०६ ॥

मासिकीवेदनां तत्र, अनुभूय विचक्षणैः ।
साधुभिः सह गन्तव्ये, निर्णयश्च कृतस्तदा ॥ ५०७ ॥

साधुविद्यार्थिभिर्मार्गे, कावाकृतिं विधाय च ।
गुरुंस्तत्र समारोप्य, गम्यते बहुभक्तितः ॥ ५०८ ॥

प्रतिग्रामं च व्याख्यानं, गुरुणा प्रविधीयते ।
नैकमांसाशि जीवाश्च, उध्धृताः शुद्धबोधतः ॥ ५०९ ॥

गुरूणां देशनां श्रुत्वा, जागृता धर्मभावना ।
तत्रैव स्थितिकर्त्तव्ये, बह्वी च प्रार्थना कृता ॥ ५१० ॥

क्रमेण वर्धमाने च, ग्रामेऽपि गुरवो गताः ।
तत्रत्य बङ्गास्तव्यैः, जनैः स्थानं समर्पितम् ॥ ५११ ॥

तेरापन्थिकश्राद्धेन, बङ्गीय जनसम्मुखे ।
आगत्य प्रतिषेधश्च, कृतश्चातीव रोषतः ॥ ५१२ ॥

तादृशानां च साधूनामुत्तरणं न शोभनम् ।
अस्मदीयाश्च नैते स्युः, वदन्त्येवं च कोपतः ॥ ५१३ ॥

उत्तरं बङ्गदेशीयैः, सम्यग्रीत्या च दापितम् ।
भवादृग्निर्दयानां च, वचनं नैव मन्यते ॥ ५१४ ॥

इमे दयार्द्रभावेन, व्याख्यानं समभावजम् ।
कुर्वन्ति शुद्धबोधाय, जनकल्याणहेतवे ॥ ५१५ ॥

अस्माकं भाग्ययोगेन, महात्मानः समागताः ।
तेषां विशुद्ध भावेन, कथं भक्तिर्न तन्यते ? ॥ ५१६ ॥

युष्माकं भाग्ययोगेन, मिथ्यावचनभाषिता ।
सूर्योदये च घूकानां, चक्षुषोरन्धता यथा ॥ ५१७ ॥

तथा पापोदयेनैव, विपर्यं भाषणं मतम् ।
एवमुक्त्वा च तैरेव, स्वप्रासादः समर्पितः ॥ ५१८ ॥

तत्र स्थित्वा च व्याख्यानं, कृतं सार्वजनीनकम् ।
दयादानाभिधानं तत्सर्वजगद्धितावहम् ॥ ५१९ ॥

तेरापन्थिकजीवानां, भिक्षार्थं च गृहे गतान् ।
साधून्वीक्ष्यैव तैः प्रोक्तमत्र शुद्धा न गोचरी ॥५२०॥

रसवती विशुद्धायाः, विद्यमानेऽपि तद्गृहे ।
अदानबुद्धिदोषेण निषेधस्तैः कृतस्तथा ॥ ५२१ ॥

अग्न्यादि लेपताहीने, भिक्षादोषैश्च वर्जिते ।
आहारे विद्यमानेऽपि, द्वेषबुद्ध्या न दीयते ॥ ५२२ ॥

जल्पन्ति च मृषावादं, महामोहविडम्बिताः ।
गणयन्ति न पापं ते, तेरापन्थिजनास्तदा ॥ ५२३ ॥

वर्धमानप्रभूणाञ्च, नाम्ना तदभिधानकम् ।
वर्धमानपुरं जातं, प्रभुणा प्राक्पविन्नितम् ॥ ५२४ ॥

शूलपाणीय यक्षाणां, कायोत्सर्गश्च मन्दिरे ।
कृतस्तत्प्रतिबोधाय, मौनभावेन सर्वथा ॥ ५२५ ॥

दुष्टपापीष्टयक्षेण, उपसर्गो विधीयते !
अतीव कठिनास्तेऽपि, एकैकाः प्राणनाशकाः ॥ ५२६ ॥

सिद्धार्थप्रतिबोधेन, बुद्धो यक्षः प्रसन्नताम् ।
प्राप्य भवगतस्तुतिं, चकार बहुप्रेमतः ॥ ५२७ ॥

प्रसन्न शूलपाणिं च, वीक्ष्य तत्रत्य मानवैः ।
भगवतां प्रभावेन, बुद्धोऽयमिति निश्चितम् ॥ ५२८ ॥

ततः प्रभृति तद्ग्रामनामाऽपि, परिवर्त्तितम् ।
वर्धमानेति सञ्जातं, भारते दुःखहारके ॥ ५२९ ॥

बालिगञ्जे विहारञ्च, कृत्वा गुरुः समागतः ।
कालिकतीय भव्याश्च, एकोऽपि नागतस्तदा ॥ ५३० ॥

विचारं तत्र सम्पूर्णं, कृत्वा विद्यार्थिनस्तदा ।
गताश्च कालिकातायां, पश्यन्ति सर्वसज्जनान् ॥५३१॥

गुरुविहारपूर्वेञ्च, आगताः केऽपि साधवः ।
भवाभिनन्दिजीवाश्च, निन्दां च कृतवन्तकाः ॥ ५३२ ॥

व्याख्यानकालिके तत्र, सर्वेषां श्राद्धसम्मुखे ।
शकृद्भक्षणनिष्कासे, शकृदेव नि–र्गीर्यते ॥ ५३३ ॥

अहो तन्मुनिपाशानां, का गतिर्भाविनी च भोः ।
दुर्गतिपातनं चैव, कर्म तेन समर्जितम् ॥ ५३४ ॥

प्रायो गौर्जरजीवानां, शटितं मानसं ततः ।
गुरुनिन्दां च कुर्वन्ति, दोषदृष्टिप्रभावतः ॥ ५३५ ॥

मरुदेशीय–भव्यैश्च, बावूमहाशयेन वै ।
सम्मुखागमनं कृत्वा, प्रवेशोत्सवता खलु ॥ ५३६ ॥

निर्णीता च परिज्ञाय, विद्यार्थिनः समागताः ।
आगत्य गुरुसामीप्ये, सर्वं तैश्च निवेदितम् ॥ ५३७ ॥

प्रोक्तं च गुरुणा तत्र, सर्वं धर्मप्रसादतः ।
भविष्यति न सन्देहः अत्र कार्यं कथं च न ॥ ५३८ ॥

निन्दकानां स्वभावोऽयं, परमलविशुद्धिकृत् ।
मातृतोऽधिकभावेन, निन्दकाश्चोपकारिणः ॥ ५३९ ॥

माता च मलशुद्धीनां, कार्यं हस्तेन साधयेत् ।
निन्दका जिह्वया चैव, कुर्वन्ति मलशोधनम् ॥ ५४० ॥

गालीमन्तश्च गाल्यादि, ददाति खलबुद्धितः ।
मम पार्श्वे च तन्नास्ति कथं गालिं ददाम्यहम् ॥ ५४१ ॥

जगति विदितं चैतत्यस्य पार्श्वे च यद्भवेत् ।
ददाति च तदेवं तन्न च शशविषाणकम् ॥ ५४२ ॥

अतो मौनं विधातव्यं, भावदया विचिन्तनम् ।
तेषां बालिशजीवानां, निन्द्या स्वभावता मता ॥ ५४३ ॥

कागतिर्भाविनी तेषां, निन्दादि पापकारिणाम् ।
पयःपानं भुजङ्गानां, केवलं विषवर्धनम् ॥ ५४४ ॥

इत्युक्त्वा बोधिताः छात्राः, गुरुणा विहृतिः कृता ।
अनेकमरुदेशीयाः, बद्रीदासादि भावुकाः ॥ ५४५ ॥

वृद्धिसिंहादयश्चैव, केचिद्गूर्जरदेशीयाः ।
कालिकतीय वास्तव्याः, पश्चात्सर्वे समागताः ॥ ५४६ ॥

गताश्च वर्तलायां ते, सर्वसङ्घजनैः सह ।
प्रारब्धं मङ्गलं तत्र, गुरुदेवेन भावतः ॥ ५४७ ॥

द्वितीयदिवसे तत्र, न मान्ति खलु भावुकाः ।
तदा द्वितीयस्थानं च, निर्णीतं सङ्घसज्जनैः ॥ ५४८ ॥

तत्रापि जनसंख्याश्च, न मान्ति देशनाक्षणे ।
ततस्तृतीयस्थानं च, अर्पितं श्रावकैः शुभम् ॥ ५४९ ॥

एवं सप्तदिने सप्तस्थानं च परिवर्तितम् ।
बाहुल्यश्रोतृवर्गत्वाद्बृहत्स्थानं च याचितम् ॥ ५५० ॥

धर्मात्मावृद्धिसिंहेन, चातुर्मासाय प्रार्थना ।
सङ्घेन सह चागत्य, कृता च बहुभावतः ॥ ५५१ ॥

मरुदेशीय भव्याश्च, वाबूपक्षीय भावुकाः ।
सर्वे सम्मील्य तत्काले, आगताः शुभयोगतः ॥ ५५२ ॥

अत्याग्रहं च कृत्वैव, स्थितास्तेषां च सन्निधौ ।
स्वीकार्या यदि याञ्चा चेत्तदा मे सफलं जनु ॥ ५५३ ॥

सङ्घस्य प्रार्थना तैश्च, गुरुभिः प्रविचार्य च ।
भाटिकस्थानके चाहं, स्थास्यामि न कदाचन ॥ ५५४ ॥

स्वकीयं यदि स्थानं चेद्युष्माभिर्दीयते तथा ।
व्याख्यानसमये तत्र, श्राद्धत्रयीसमुत्थिता ॥ ५५५ ॥

कृपया स्थानमस्माकमागत्यैव विलोक्यताम् ।
यदि च सानुकूलं स्यादनुग्रहो भवेत्तदा ॥ ५५६ ॥

लक्ष्मीचन्द्रमहाभागकर्णावटस्य स्थानकम् ।
सर्वोत्तमं च भासेन, धर्मध्यानस्य साधकम् ॥ ५५७ ॥

प्रतिमासं द्विसाहस्रं, रूप्यकभाटकानि च ।
तानि त्यज्यैव भक्त्यर्थं, गुरवे तत्समर्पितम् ॥ ५५८ ॥

दशसहस्रमन्येषां, रूप्यकानां व्ययः खलु ।
कृतश्च धर्ममार्गेषु, चातुर्मासेषु तेन वै ॥ ५५९ ॥

साधूनां स्थानदानेन, यत्पुण्यं समुपार्जितम् ।
तत्तु वक्तुं न शक्योऽस्मि, जानाति केवली प्रभुः ॥ ५६० ॥

धर्मपत्नी च तस्यैव, शीलालङ्कारधारिणी ।
तपस्विनी च धर्माढ्या, व्रतपालनतत्परा ॥ ५६१ ॥

गटा देवीति सन्नाम, विशुद्धभावनावती ।
प्रत्यहं देवपूजादि, धर्मकृत्यं करोति सा ॥ ५६२ ॥

इतो व्याख्यानकाले च, आगत्य पञ्चभावुकाः ।
दीक्षार्थं प्रार्थनायाश्च, करणे ते समुद्यताः ॥ ५६३ ॥

राजनगरवास्तव्यः, सङ्घोऽपि च तदागतः।
सहस्रशो नृसङ्घायां, ददाति देशनां गुरुः ॥ ५६४ ॥
मेघगर्जनगम्भीरा, श्रोतृकर्णे सुधोपमा।
तां श्रुत्वा बुद्धिसिंहेन, सिंहावलोकदृष्टितः ॥ ५६५ ॥
वद्रीदासस्य सामीप्ये, यदुक्तं तन्निशम्यताम्।
वद्रीदासमहाभाग, प्राक् श्रुतं विस्मृतं च किम् ॥५६६॥
दृष्टो गुरुमहाभागः, सर्वसाधुशिरोमणिः।
साधुना तेन दुष्टेन, किं प्रोक्तं गुरवे तदा ॥ ५६७ ॥
देशनाऽमृतधारा स्याज्जगदाह्लादकारिणी।
सर्वोत्तमं च चारित्रं, यस्य स्वान्ते सदा वसेत् ॥ ५६८॥
निन्दायास्तस्य कर्तॄणां, पापिनां का गतिर्भवेत् ?।
वद्रीदासेन चोक्तं तत्सत्यं च गदितं त्वया ॥ ५६९ ॥
तस्य व्याख्यानकाले च, निन्दाकार्यं पदे पदे।
धर्मविजयव्याख्याने, निन्दा नामपि नो भवेत् ॥५७०॥
तादृशं जल्पनं कृत्वा, प्रासङ्गिकं च चर्चितम्।
गुरुदेवं समालोक्य, शृण्वन्ति देशना गिरा ॥ ५७१ ॥
तच्छ्रुत्वा गुरुदेवेन, निषिद्धा बुद्धिसिंहकाः।
न किञ्चिज्जल्पनं कार्यं, कस्यापि विषयेऽधुना ॥ ५७२ ॥
निन्दाकारकजीवेषु, भावदया विचिन्त्यताम्।
मनुष्यजन्म प्राप्यापि, निष्फलं गमयेत्खलु ॥ ५७३ ॥

इत्यैवं प्रतिबोध्यैव, ददाति गुरुदेशनाम् ।
प्रस्तुतविषयं तेषामग्रे पुष्णाति सर्वथा ॥ ५७४ ॥

पञ्चछात्रैः समागत्य, प्रार्थना च यदा कृता ।
श्रीसङ्घसज्जनेनैव, तेषां प्रश्नावली कृता ॥ ५७५ ॥

सर्वेषां प्रश्नवाक्यानामुत्तरं स्थिरचित्ततः ।
द्विचरैश्च महाभागैः, नृसिंहेन तथैव च ॥ ५७६ ॥

उत्तरं दापितं तत्र, सर्वसन्तोषकारकम् ।
केनचिच्च कृतः प्रश्नः, दीक्षा विद्यार्थिना न हि ॥५७७॥

दीक्षादानस्य नैयम्यं, गुरूणां परिविद्यते ।
कथं दीक्षाप्रदानं स्यादित्यारेका च तात्त्विकी ॥ ५७८ ॥

तच्छ्रुत्वा गुरुणा तत्र, उत्तरं दापितं मुदा ।
पाठशालासु यावत्तु, स्थितिर्मिमाऽपि विद्यते ॥ ५७९ ॥

तावत्कालं च तेषां वै, दीक्षा न दीयते मया ।
इति च नियमोऽस्माकं, यावज्जीवं च तन्नहि ॥ ५८० ॥

साधूनां तादृशो नैव, धर्मो भवेत्कदाचन ।
दीक्षा–निर्वाणहेतुः स्यात्कथं मया निषिध्यते ॥ ५८१ ॥

शालास्थितेश्च रक्षायै, लोकबोधनहेतवे ।
तादृशो नियमो ज्ञेयः, सापेक्षरूपतो मतः ॥ ५८२ ॥

गुरूणां तादृशं वाक्यं, श्रुत्वा तत्रत्य भावुकाः ।
गुरूणां धन्यवादत्वं, वदन्ति शतशो मुखात् ॥ ५८३ ॥

प्रोत्साहिताश्च ते सर्वे, दीक्षाकार्ये च सम्मताः ।
आगच्छेचेद्विरोधार्थं, तदा न्यायालयः स्फुटः ॥ ५८४ ॥

कङ्कणं धारितं नैव, अस्माभिर्हस्तके कदा ।
वुद्धिसिंहेश्च तत्प्रोक्तं, सर्वाश्चर्यस्य कारणम् ॥ ५८५ ॥

सर्वस्यानुमतिस्तत्र, मीलिता शुभभावतः ।
वैशाखशुक्लपञ्चम्याः, दिनो निर्धारितस्तदा ॥ ५८६ ॥

सुगुणाद्यैश्च सच्छ्राद्धैः, सेवाभावश्च स्वीकृतः ।
प्रतिदेशं प्रतिग्रामं, कुङ्कुमपत्रिका गता ॥ ५८७ ॥

मरुदेशीय बाबूभिः, गौर्जरैः कच्छवासिभिः ।
भक्तिभावविधानाय, प्रत्यहं स्वगृहे नीताः ॥ ५८८ ॥

सीपाणी वुद्धिसिंहाद्या, कन्हैयालालभावुकाः ।
अतीव भक्तिभावेन, जानीता स्वगृहे खलु ॥ ५८९ ॥

महाडम्बरपूर्वेण, नगरे परिभ्राम्य च ।
स्वस्थाने धारितास्तैश्च, विशुद्धधर्मभावतः ॥ ५९० ॥

बाबूमध्ये च मुख्यत्वं, वुद्धिसिंहस्य शोभते ।
ओसवालेषु मुख्यत्वं, लक्ष्मीचन्द्रमहाशये ॥ ५९१ ॥

डोशालालस्य कच्छिषु, ज्येष्ठालालकादीनाम् ।
वल्लभप्रभृतीनां च, मुख्यत्वं गौर्जरे मतम् ॥ ५९२ ॥

सेवाभावेषु सर्वेषां, मध्ये सुगुणसम्मतः ।
प्रतिरोमे च तस्यैव, धर्मभावः प्रवर्तते ॥ ५९३ ॥

महाडम्बरपूर्वेण, धर्मजागृतिहेतवे ।
समारोहेण सर्वेण, भ्रमन्ति नगरे खलु ॥ ५९४ ॥

दीक्षाया दिवसे प्रातः, सुगुणचन्द्रपुत्रकः ।
मृतो लघुवयस्कश्च, पुत्रोऽपि एक एव च ॥ ॥ ५९५ ॥

धर्मात्मना च तेनैव, तत्कालं संस्कृतिक्रियाम् ।
कृत्वा प्राभातिके काले, वन्दनाय समागतः ॥ ५९६ ॥

शिरस्त्राणं च रक्तं तच्छिरोधार्यं सहर्षतः ।
मुखे ताम्बूलदानञ्च, कृत्वा शीघ्रं समागतः ॥ ५९७ ॥

गुरूणां मानसे चिन्ता, दीक्षाऽद्य न भविष्यति ।
य एव कार्यकर्त्ता स्यात्तस्य पुत्रस्य संस्थितिः ॥ ५९८ ॥

पुत्रप्रेमातिरेकत्वं, मानसे नैव जायते ।
धर्मप्रेमातिरेकत्वं, तस्य स्वान्ते निरन्तरम् ॥ ५९९ ॥

तेनोक्तं गुरुसामीप्ये, दीक्षाकार्यं भविष्यति ।
इहलोके च सम्बन्धः, पुत्रादीनां न शास्वतः ॥ ६०० ॥

अयं तु धर्मसम्बन्धः, कल्याणकारणं सदा ।
अतः शोकं परित्यज्य, धर्मध्यानं विधीयते ॥ ६०१ ॥

गुरुणा धन्यवादश्च, दत्तस्तस्मै तत्क्षणे ।
दम्पती बहुभावेन, दीक्षाकार्ये समुद्यतौ ॥ ६०२ ॥

सम्पूर्णनगरे चैव, आश्चर्यं परिजायते ।
धन्योऽयं खलु धर्मात्मा, ईदृशी यस्य भावना ॥ ६०३ ॥

सकलसङ्घसन्दोहः, दीक्षायाः समये खलु ।
आगतोऽतीव हर्षेण, सामग्री बहुशो युतः ॥ ६०४ ॥

बद्रीदासगृहाच्चैव, वार्षिकदानकालिके ।
अलङ्कारादि सामग्री, भावुकैः परिधारिता ॥ ६०५ ॥

महारथेषु संस्थाप्य, अनेकवाद्यघोपणम् ।
गगनभेदिशब्देन, सर्वेषां जागृतिः कृता ॥ ६०६ ॥

रथानां शतशः संख्या, मोटरो शतशस्तथा ।
नगरवाद्यसामग्री, आगतास्तत्र तत्क्षणे ॥ ६०७ ॥

बहुशो दानसामग्री, श्रावकैः परिपूरिता ।
टङ्कशालासु निर्माप्य, नूतनरूप्यकादिकम् ॥ ६०८ ॥

अतीव हर्षयोगेन, ददति सर्वमानवान् ।
बुद्धिसिंहादिना सार्धमग्रे गच्छति मुख्यकाः ॥ ६०९ ॥

जयघोषादि शब्दाश्च, प्रजायन्ते पदे पदे ।
राजमार्गोऽपि सङ्कीर्णः, तदानीमभवत्खलु ॥ ६१० ॥

लक्षशो जनसन्दोहः, दर्शनार्थं समागतः ।
धन्यवादप्रघोषांश्च, कुर्वन्ति बहवो जनाः ॥ ६११ ॥

सङ्घीयानुक्रमेणैव, आगताः सर्वसज्जनाः ॥
विशालसङ्घनाट्यां वै, विशालमण्डपे तदा ॥ ६१२ ॥

दशसहस्रसंख्याकाः, जैनानां जनमेदिनी ।
अन्ये बहुजनास्तत्र, बङ्गीयाश्च समागताः ॥ ६१३ ॥

साधुवर्गः समायातः, मध्येषु गुरुपुङ्गवः ।
दीक्षादानक्रियार्थं च, गुरवस्तु समुद्यताः ॥ ६१४ ॥

अतीव हर्षयोगेन, आगत्य वन्दना कृता ।
पश्चाच्चान्या समारब्धा, विशुद्धा धार्मिकी क्रिया ॥६१५॥

धर्मध्वजप्रदानस्य, काले च सर्वसज्जनैः ।
हर्षाश्रुसर्वनेत्राच्च, योगदाने च वर्षितम् ॥ ६१६ ॥

यदा तु साधुवेषोऽपि, परिधृतस्व तैस्तदा ।
सभागमनकाले च, वैराग्यं प्रकटायितम् ॥ ६१७ ॥

धन्यास्ते च महाभागाः, येषां स्वान्तेषु चेदृशी ।
विशुद्धा भावना जाता, सुगतिभागिनश्च ते ॥ ६१८ ॥

धन्यवादश्च तेषां वै, मातापितृषु सर्वथा ।
यैश्च तादृक् सुतानां च, जन्मप्रदानकं कृतम् ॥ ६१९ ॥

गुरुवश्च महाधन्याः, येषां शिष्याश्च तादृशाः ।
विद्वांसः कवयश्चैव, सञ्जाताः शुभयोगतः ॥ ६२० ॥

तेषामनुक्रमेणैव, कथ्यते चाभिधानकम् ।
सिंहविद्यागुणाद्याश्च, महेन्द्रन्यायसंज्ञकाः ॥ ६२१ ॥

विजयान्ताश्च सर्वैस्तैः श्रुतं नामापि भावतः ।
अभिधानं च संश्रुत्य, सर्वे ते हर्षितास्तदा ॥ ६२२ ॥

सिंहसादृशशौर्येण, सिंहविजयसार्थकम् ।
गुणानां बहुयोगेन, गुणविजयता मता ॥ ६२३ ॥

विद्यायाः प्राप्तियोगेन, विद्याविजय नामकम् ।
महाचरित्रयोगाच्च, महेन्द्रं परिकीर्त्तितम् ॥ ६२४ ॥

न्यायानां विजये प्राप्ते, न्यायविजयसम्मतम् ।
सार्थकमभिधानञ्च, धृतं यथार्थ योगतः ॥ ६२५ ॥

सकलसङ्घसार्थेन, साधूनां वन्दना कृता ।
जयजयेति शब्देन, मण्डपं गर्जितं तदा ॥ ६२६ ॥

देशना गुरुदेवानां, गम्भीरध्वनितस्तथा ।
वैराग्यरसपोषश्च, तत्रैव परितः कृतः ॥ ६२७ ॥

अश्रुप्रपातनेत्रैश्च, सर्वैः श्रुता च भावतः ।
स्वामिवात्सल्यसामग्री, परिपूर्णा च दर्शिता ॥ ६२८ ॥

ऐशानकोणके ते च, स्थित्वा च जपमालिकाम् ।
गणयन्ति शुभे योगे, धर्मध्यानं च तत्क्षणे ॥ ६२९ ॥

बङ्गपर्षदि चाख्यानं, सार्वजनीनबोधकम् ।
यदि च गुरुणा तत्र, क्रियतेऽतीव लाभता ॥ ६३० ॥

इति सञ्चिन्त्य तत्रत्याः, सभ्याः सर्वे समागताः ।
प्रार्थना बङ्गदेशानां, गुरुणा स्वीकृतिः कृता ॥ ६३१ ॥

तच्छ्रुत्वा श्रावकैश्चोक्तं, गन्तुं तत्रैव नोचितम् ।
पादे–चोपानहं धृत्वा, आगच्छन्ति च पर्षदि ॥ ६३२ ॥

अत्र देशीय मर्यादा, तदास्तत्रैव नोचितम् ।
इति वाक्यं च संश्रुत्य, तेषां च प्रतिबोधनम् ॥ ६३३ ॥

कृतं सदुपदेशेन, वुद्धिसिंहादिसज्जनैः ।
सहैव गतवान् स्थाने, उत्थिता वङ्गवासिनः ॥ ६३४ ॥

सन्मानं च गुरोः कृत्वा, स्थितास्तत्र सभाजनाः ।
प्रारम्भे मांसभोजस्य, प्रसङ्गेन विवेचनम् ॥ ६३५ ॥

श्रुतिस्मृतिपुराणादि, प्रमाणैश्च निषेधनम् ।
कृतं तद्युक्तिपूर्वेण, गुरुणा ज्ञानयोगतः ॥ ६३६ ॥

तमो गुणस्य पुष्टिश्च, तत एव प्रजायते ।
शरीरे रोगसम्प्राप्ति–रधिकास्तत्र भाव्यताम् ॥ ६३७ ॥

श्रुत्वा गुरूपदेशं तं, त्याजितं मांसभोजनम् ।
सहस्रजनसङ्ख्याभिः, विद्वद्भिश्च तदा खलु ॥ ६३८ ॥

प्रतिभास्करवारं च, व्याख्यानं सार्वसम्मतम् ।
जैनधर्मं समुद्दिश्य, कुर्वन्ति नवसङ्ख्यकम् ॥ ६३९ ॥

सतीशचन्द्रमहाभागैः, गुरूणां च समीपके ।
आगत्य जैन तत्त्वानाम–भ्यासश्च कृतस्तदा ॥ ६४० ॥

प्रमाणनवतत्त्वादि, पदार्थानां विवेचनम् ।
स्पष्टरूपेण तेषां वै, कृतश्च बहुप्रेमतः ॥ ६४१ ॥

जैनन्यायादिशास्त्राणां, परीक्षायां प्रवेशनम् ।
संस्कृते च कालेजे, कार्यतां बोधहेतवे ॥ ६४२ ॥

प्रमाणनवतत्त्वाख्य, ग्रन्थस्य च प्रवेशनम् ।
आङ्गलीय परीक्षायां, बी–ए–क्लासस्य मध्यके ॥ ६४३ ॥
संस्कृतग्रन्थरत्नानां, न्यायव्याकृति तीर्थके ।
प्रवेशायैव तैस्तत्र, वचनं कथितं तदा ॥ ६४४ ॥
यदि प्रिन्सिपलत्वं चेन्मयि च स्थास्यति प्रभो ! ।
तदा कार्यं करिष्यामि, संशयो नात्र कश्चन ॥ ६४५ ॥
सुबोधचन्द्रवैद्यश्च, डाक्तरोऽपि महान् तथा ।
गुरूणामुपदेशेन, जैनधर्मी भवेत्तदा ॥ ६४६ ॥
नवतत्त्वादिशास्त्राणामध्ययनं कृतं तदा ।
गुरुदेवस्य सामीप्ये, सुश्रद्धानेन पूर्वकम् ॥ ६४७ ॥
सुशीलो गुणरागी स्या–ज्जैनधर्मपरायणः ।
सर्वज्ञदेवपूजायां, सर्वदा तत्परः खलु ॥ ६४८ ॥
सर्वेषां जैनबन्धूनां, सेवाकार्येषु तत्परः ।
मुनीनाञ्च विशेषेण, सेवां करोति भावतः ॥ ६४९ ॥
मङ्गलविजयः साधुः, भीक्षार्थे च गतः कदा ।
अमृतलीयरथ्यां च, शकटाऽधः समागतः ॥ ६५० ॥
कट्यामुपरि गन्त्री च, अगच्छद् बहुवेगतः ।
ततोऽति वेदना जाता, महाकष्टेन चागतः ॥ ६५१ ॥
आगतिं वीक्ष्य तस्यैव, ज्ञातं च गुरुणा तदा ।
आकारितः सुबोधश्च, सेवां करोति तत्क्षणे ॥ ६५२ ॥

द्वादशघटिकाकालं, तिष्ठति गुरुसन्निधौ ।
आरोग्यं प्रविधायैव, डाक्तरो गतवान् गृहे ॥ ६५३ ॥

वङ्गीयपुरुषानैकेः, जाताश्च गुरुभक्तकाः ।
केचिज्जैना भवेयुश्च, केचिन्मध्यस्थभावना ॥ ६५४ ॥

सतीशचन्द्रविद्याया भूषणो गुरुभक्तराट् ।
कालेजे तस्य मुख्यत्वं, संस्कृते परिभाव्यताम् ॥ ६५५ ॥

छन्नुलालस्तु भक्तः स्यान्मङ्गलविजयस्य च ।
शिष्यत्वं स्वीकृतं तेन, अतीव भक्तिभावतः ॥ ६५६ ॥

लक्ष्मीचन्द्रात्मजो ज्येष्ठः, सर्वबन्धुशिरोमणिः ।
गाम्भीर्यादि गुणाढ्यः सः, विनयानम्रगात्रकः ॥ ६५७ ॥

चातुर्मासिकपूर्णान्ते, कार्तिकीपूर्णिमा दिने ।
रथयात्रा प्रशस्ता स्याद्भारते चापरा न हि ॥ ६५८ ॥

महेन्द्रध्वजनिष्कासे, तारादीनां च त्रोटनम् ।
जायते नगरे तस्मिनपूर्वदृश्यता तदा ॥ ६५९ ॥

सार्द्धगव्यूतमानं च, आयतेः परिज्ञायताम् ।
अनेकरथवैमानं, पताकाश्च सहस्रशः ॥ ६६० ॥

मोटराश्वीयगन्त्रीणां, शतशो मानता मता ।
मध्ये च धर्मनाथस्य, शिबिका परिशोभते ॥ ६६१ ॥

लक्षशो रूप्यकानां च, अलङ्कारेण शोभिताः ।
बाबू सन्तानका धन्याः, कुर्वन्ति भक्तिभावनाम् ॥ ६६२ ॥

कुङ्कुमरागरक्तानां, वाघानां परिधापनम् ।
वैमानं च समुत्थाय, चलन्ति भाग्यशालिनः ॥ ६६३ ॥

गीतगानं च कुर्वन्ति, नृत्यन्ति प्रभुसम्मुखे ।
पवित्ररसनां कृत्वा, भावनां भावयन्ति ते ॥ ६६४ ॥

देवकुमारसंकाशाः, शोभन्ते ते च रूपतः ।
अनेकवाद्यनिर्घोषैः, कुर्वन्ति शासनोन्नतिम् ॥ ६६५ ॥

वीरवाड्यां च यात्रा सा, गता सर्वेण वीक्षिता ।
पूजास्नात्रविधानादि, स्वामिवात्सल्यता कृता ॥ ६६६ ॥

स्वल्पा गौर्जरदेशीयाः, अन्ये च बहवो मताः ।
गौर्जरश्रावकानां च, प्रवेशो भोजने न हि ॥ ६६७ ॥

मांसभक्षिकहाराणां, हस्तात्तु परिभुज्यते ।
श्रीमालजैनजातीनां, हस्ताद्भुक्ति न तन्यते ॥ ६६८ ॥

अहो तेषां च वैचित्र्यं, बुद्धीनां परिज्ञायताम् ।
अधुना कालयोगेन, सर्वं तत्परिवर्त्तितम् ॥ ६६९ ॥

चाडीलालाख्यभक्तेन, तदानीं प्रार्थना कृता ।
मद्भ्रातुर्मग्नलालस्य, दीक्षादानविधीयताम् ॥ ६७० ॥

प्रोक्तं च गुरुणा तत्र, अधुना नव दीयते ।
लघुवयस्क-त्वा तस्य, दाने च धर्महेलना ॥ ६७१ ॥

आनन्दसागरश्चैव, दीक्षादाने समर्थकाः ।
युष्माभिर्दीयते दीक्षा, यदा तदा शुभं मतम् ॥ ६७२ ॥

अन्यथा तत्र नीत्वैव, दीक्षादानं विधीयते ।
प्रोक्तं च गुरुणा तस्मै, सुखेन गम्यतां खलु ॥ ६७३ ॥

गन्तुमन्यत्र नैवेच्छा, मगनलालस्य जायते ।
अतो हि कालिकातायाः, बाह्यारामस्य मध्यके ॥ ६७४ ॥

प्रच्छन्नं साधुवेषश्च, तेनैव परिधापितः ।
दिनत्रयी च तत्रैव, स्थितस्तस्य समीपके ॥ ६७५ ॥

यदा च गुरुदेवेन, कार्तिकी पूर्णिमा दिने ।
कृत्वा विहरणं तस्माद्वीरचाट्यां समागतम् ॥ ६७६ ॥

रथयात्रां निरीक्ष्यैव, अनुमोदनता बहु ।
धर्मोन्नतिं विभाव्यैव, गुरुणा विहृतिः कृता ॥ ६७७ ॥

मार्गे च मगनलालश्च, साधुवेषेण चार्पितः ।
साधुं च नूतनं दृष्ट्वा, गुरुणा कथितं तदा ॥ ६७८ ॥

दीक्षितः केन कस्मैश्च, विनाज्ञां दीक्ष्यते कथम् ?।
इति प्रश्नविधाने च, वाडीलालेन तत्क्षणम् ॥ ६७९ ॥

कथितं भो महाराज!, वेषो मया समर्पितः ।
तदात्मनः शिवार्थं च, कार्यं च तादृशं कृतम् ॥ ६८० ॥

मया ज्ञातं गुरोराज्ञा, कदापि नैव मील्यते ।
अन्यो–पायश्च कर्त्तव्यः, इति विचिन्त्य योजितम् ॥६८१॥

अन्यथा नैव कल्याणम–स्यापि जायते कदा ।
मद् भ्रातुः सुखशान्त्यर्थं, कृतं चैतद्विचार्यताम् ॥ ६८२ ॥

ममोपरि कृपां कृत्वा, अस्योद्धारो विधीयताम् ।
भगवन् ! ममयाश्चा सा, सर्वथा सफलीयताम् ॥ ६८३ ॥

गुरुणा च दयां कृत्वा, दीक्षितः सङ्घसन्निधौ ।
बुद्धिसिंहाग्रहेणैव, सर्वं तद् गुरुणा कृतम् ॥ ६८४ ॥

गुरुव्याख्यानलाभाय, बुद्धिसिंहेन तत्र वै ।
नवमासिकपर्यन्ता, अतो हि स्थिरता कृता ॥ ६८५ ॥

प्रातः सामायिकं नित्यं, देवपूजादिकं तथा ।
व्याख्यानश्रवणं चैव, मध्याह्ने शास्त्रसंश्रुतिः ॥ ६८६ ॥

सर्वतीर्थङ्कराणां च, चरित्रं श्रयते सदा ।
श्रवणं मननं कृत्वा, प्रश्नोत्तरं विधीयते ॥ ६८७ ॥

एकदा गुरुणा तत्र, शासनोन्नतिहेतवे ।
गुरुकुलस्य पापायां, कर्त्तव्येच्छा प्रदर्शिता ॥ ६८८ ॥

सार्द्धं द्विशतकं तस्मै, दानेच्छा प्रतिमासिकम् ।
दर्शिताऽतीव भावेन, गुरूणां च समीपके ॥ ६८९ ॥

अन्येपामपि सर्वेपां, मीलित्वा द्विसहस्रकम् ।
प्रतिमासं च विज्ञेयं, वीरचन्द्रेण सम्मतम् ॥ ६९० ॥

चारित्रविजयस्तत्र, कालिकातासु चागतः ।
एकविद्यार्थिना सार्धमागत्य गुरुसन्निधौ ॥ ६९१ ॥

तेन निवेदितं काश्यां, कलहः परिज्ञायते ।
कर्पूरविजयैः साकं, गुरुणा शिक्षितस्तदा ॥ ६९२ ॥

पश्चाद्‌ल च काशीतः, आगतमेकदा खलु ।
आचारहीनतां दृष्ट्वा, गुरुणा प्रतिबोधितः ॥ ६९३ ॥

प्रायश्चित्तं च दत्त्वैव, ज्ञापितं धर्मयोगतः ।
कदाप्येवं न कर्त्तव्यं, निष्कास्यतेऽन्यथा मया ॥ ६९४ ॥

एकाक्षरं च तेनैव, पठितं न कदाचन ।
पठनार्थं गुरोः शिक्षा, प्रतिदिनं प्रजायते ॥ ६९५ ॥

तथापि पठ्यते नैव, मोहोन्मादस्य कारणाद् ।
विनयविजयैः सार्धम्-तएव न तिष्ठति ॥ ६९६ ॥

लालनशिष्यकौ तौ द्वौ केशरमदनौ मतौ ।
मदन पूर्वकाले च, पश्चद्विनयता मता ॥ ६९७ ॥

मदनविजयस्यैव, पार्श्वे च कलहायितम् ।
ततो निष्कासितस्तेन, कर्पूरेण सहागतः ॥ ६९८ ॥

तत्पार्श्वे कलहारादिः प्रत्यहं परितन्यते ।
ततस्तेनापि तत्स्थानान्निष्कासितश्च सर्वथा ॥ ६९९ ॥

दयाभावेन तस्यैव, ग्रहणं गुरुणा कृतम् ।
मङ्गलविजयस्यैव, पार्श्वे तिष्ठति सर्वदा ॥ ७०० ॥

कालिकातासु नो किञ्चित्तेनाधीतं कदाचन ।
वार्त्तालापेन तत्रापि, समयं गमयेत्सदा ॥ ७०१ ॥

प्रोक्तश्च तत्प्रसङ्गेन, प्रकृतमनुकथ्यते ।
द्वित्रिस्थानस्य पर्यन्ते, सर्वे श्राद्धा समागताः ॥ ७०२ ॥

अतीव धर्मसेवादि–कार्यं जातमनेकशः ।
सन्तुष्टमानसेनैव, गम्यतेऽग्रे ततः परम् ॥ ७०३ ॥

मक्षुदावादसद्ग्रामे, समृद्धीनां निकेतने ।
सर्वैः सहैव गन्तव्ये, प्रयाणं गुरुणा कृतम् ॥ ७०४ ॥

तेषाञ्च विहृतिं ज्ञात्वा, बुद्धिसिंहादि भावुकाः ।
वन्दनार्थं प्रतिग्राममा–गच्छन्ति सुयोगतः ॥ ७०५ ॥

यत्रैव मन्दिरं शुभ्रं, तत्र पूजा मनोहरा ।
स्वामिवात्सल्यता भावपूर्वेण तैर्वितन्यते ॥ ७०६ ॥

बालूचरप्रवेशाय, महोत्सवश्च कारितः ।
महाराजबहादूरैरुत्साहेन मनोहरैः ॥ ७०७ ॥

पुरप्रवेशकर्त्तव्ये, क्षणे भक्तेश्च का कथा ?।
स्वस्तिकं मौक्तिकानां च, श्राविकाः पूरयन्ति वै ॥ ७०८ ॥

वर्धापनं च तत्काले, गुरूणां कारितं मुदा ।
पदे पदे च पूज्यानां, सत्कारं कारयन्ति ते ॥ ७०९ ॥

मक्षुदावादवास्तव्याः. भक्तास्तत्र समागताः ।
तत्राऽपि चाधिका भक्तिं, तन्वन्ति बुद्धिसिंहकाः ॥ ७१० ॥

तत्र नीत्वा गुरूणां च, प्रवेशोत्सवता शुभा ।
अतीवाडम्बरेणैव, कारिता तत्र सज्जनैः ॥ ७११ ॥

प्रभावना–प्रणालिश्च, विशुद्धो–दारभावतः ।
अनेकाश्च कृतास्तत्र, धर्मवृद्धिकराश्च ताः ॥ ७१२ ॥

सार्वजनीनकल्याण–हेतवे धर्मदेशना ।
शालादौ च प्रतिस्थाने, व्याख्यानं परिजायते ॥ ७१३ ॥

कटगौलादिके स्थाने, गच्छन्ति दर्शनाय च ।
महिमापुरवास्तव्य–जगच्छ्रेष्ठिनिकेतने ॥ ७१४ ॥

गत्वा मन्दिरदेवानां, कृता यात्रा च भावतः ।
कषपट्टिकजातीनां, प्रस्तराणां च मन्दिरम् ॥ ७१५ ॥

वापिका निर्मितिश्चैव, कषपट्टिकजातीनाम् ।
यात्रा तत्रैव सर्वत्र, गुरुणा भावतः कृता ॥ ७१६ ॥

परेद्युर्दृढरागेण, आगत्य गुरुसन्निधौ ।
शिष्टत्व भावनार्थैव, वृद्धिसिंहस्य याचना ॥ ७१७ ॥

स्वीकृता धर्मयोगेन, व्याख्यानसमये गुरुः ।
वासक्षेपः क्रिया तस्य, कृता चातीव प्रेमतः ॥ ७१८ ॥

योग्यशिष्यं परिज्ञाय, विधिना वासक्षेपकम् ।
व्रतादानकपूर्वेण, विहितं गुरुणा तदा ॥ ७१९ ॥

ततोऽपि हर्षयोगेन, स्वामिवात्सल्यकं कृतम् ।
अन्यान्यपि च कार्याणि, धर्मवृद्धिकराण्यपि ॥ ७२० ॥

सुगुणादिकसच्छ्राद्धाः, गुरुशिष्याश्च ते मताः ।
हनुमानात्मजो लक्ष्मीचन्द्र कर्णावटः खलु ॥ ७२१ ॥

गुरुदेवस्य शिष्यः स्याद्धर्मप्रभावकारकः ।
अन्येऽपि मरुदेशीयाः, शिष्या जाताश्च भावतः ॥ ७२२ ॥

ज्येष्टालालादि सौभाग्यशालिनः शिष्यसम्मतः।
पौरचन्दरवास्तव्या वल्लभाः परिभाविताः ॥ ७२३ ॥

गुणज्ञा ज्ञानयोगेषुः, सर्वदा ज्ञानदीपकाः।
सवचन्द्रात्मजश्चैव, हेमचन्द्रो गुणी सदा ॥ ७२४ ॥

गुरुदेवस्य शिष्याश्च, ते सर्वे परिकीर्त्तिताः।
सतीश्चन्द्रादिकाः सर्वे, अन्ये च वङ्गवासिनः ॥ ७२५ ॥

एवमनेकशिष्याश्च, भवन्ति वङ्गदेशके।
ततो विहृत्य, चम्पायामागताः साधवः समे ॥ ७२६ ॥

कल्याणं वासुपूज्यानां भगवतां च पञ्चकम्।
मल्लिनाथस्य तत्रापि, आगतं मिथिलापुरात् ॥ ७२७ ॥

पवित्रभूमिकां दृष्ट्वा, यात्रां कुर्वन्ति भावतः।
सुखराजजमीदाराः, नाथनगरवासिनः ॥ ७२८ ॥

तदाग्रहाच्च तिष्ठन्ति, गुरुदेवाश्च तत्रवै।
यन्त्रालयं च कीटानां, विद्यते भागले पुरे ॥ ७२९ ॥

रेशमेति च भाषायां, कथ्यते तस्य वस्त्रकम्।
परिधायैव पूजायां, गच्छन्ति श्रावकाः खलु ॥ ७३० ॥

कोशेटकीयकीटानां, विना मृत्युं न जायते।
अनेकजीवसंहाराज्जातं वस्त्रं च तादृशम् ॥ ७३१ ॥

महाहिंसामयं तादृक्, देहे कथं च धार्यते ?।
धारणे जीवहिंसानां पोषणं तैः कृतं सदा ॥ ७३२ ॥

तद् दृष्ट्वा साधुछात्रैश्च, तच्चेलं त्याजितं तथा ।
अतीवोष्णजलेष्वेव, कीटानां परिक्षेपणम् ॥ ७३३ ॥

परिपाके च सञ्जाते, निष्कास्यते ततः परम् ।
जीवेभ्यस्तन्तुनिष्कास्य, कलेवरं ततस्त्यजेत् ॥ ७३४ ॥

अतिपापनिमित्तं च, हिंसाया बहु साधनम् ।
तज्जं चेलं च संत्याज्यं, सर्वैः सदा विधीयताम् ॥७३५॥

तदा च दैवयोगेन, चारित्रविजयस्य वै ।
गुह्यस्थानेषु सञ्जातः, व्याधिः प्रमेहनामकः ॥ ७३६ ॥

पूतिगन्धिशरीरं च, सञ्जातं कर्मयोगतः ।
तत्पार्श्वे नैव तिष्ठन्ति, साधवः केऽपि तत्क्षणे ॥ ७३७ ॥

गुर्वाज्ञां च परिज्ञाप्य, मङ्गलस्तस्य सन्निधौ ।
रोगशान्तिविधानाय, सेवां करोति सर्वथा ॥ ७३८ ॥

डोक्तरं च समाकार्य, दर्शितं तस्य विग्रहम् ।
गुह्यभागं विलोक्यैव, उपायः छेदनं विना ॥ ७३९ ॥

अन्योऽपि नैव विद्येत, अत आज्ञा विधीयताम् ।
विना भेदे च कर्त्तव्ये, आरोग्यं नैव जायते ॥ ७४० ।

अनुमतिं गुरोर्नीत्वा, कारितं छेदनं परम् ।
भयङ्करं च तद्दृष्ट्वा, वैद्येन कथितं खलु ॥ ७४१ ॥

तेन सहैव सम्बन्धः, न केनापि विधीयताम् ।
तद्रोगजन्तुसञ्चारः, अन्यथाऽन्यत्र जायते ॥ ७४२ ॥

गुरूणां ज्ञापयित्वैव, वैद्याश्च प्रपलायिताः ।
तस्यैव मलमूत्रादि, बहिश्च क्षेपणं सदा ॥ ७४३ ॥

वैद्यभीतिमनादृत्य, मङ्गलेन कृतं समम् ।
पूर्वकर्मविपाकेन, उदितमत्र ज्ञायताम् ॥ ७४४ ॥

ततोऽपि शान्तिशून्यत्वे, विहृतिः गुरुणा कृता ।
प्रतिदिनं हि चाराटिः, चारित्रेण वितन्यते ॥ ७४५ ॥

अतीव कष्टयोगेन, पाथायां च समानीतः ।
नापीतं च समानीय, तद्देहः परिदर्श्यते ॥ ७४६ ॥

यथाज्ञा गुरुदेवानां, जायते धर्मयोगतः ।
तस्योपचारकार्यस्य, प्रणालिः परिदर्शिता ॥ ७४७ ॥

गुरुदेवस्य पुण्येन, रोगशान्तिर्भवेत्तदा ।
पारितोपिकदानञ्च, सुचन्त्या दापितं महत् ॥ ७४८ ॥

पट्टसाधुबृहतीदीक्षा, योगोद्वहनपूर्विका ।
पाथायां गुरुदेवेन, कारिता तन्निशम्यताम् ॥ ७४९ ॥

बृहद्दीक्षाविधानाय, प्रतीक्षा क्रियते पुरा ।
वीरविजयपन्न्यासः, यात्रार्थं च तदाऽऽगतः ॥ ७५० ॥

प्राग्मित्रं गुरुदेवानामागतिं वीक्ष्य तत्क्षणे ।
अत्यानन्देन तस्यापि, प्रवेशः कारितः किल ॥ ७५१ ॥

तीर्थयात्रां विधायैव, धर्मचर्चाविधापनम् ।
स्वाध्यायध्यानकं कृत्वा, शालायाः परिपृच्छनम् ॥७५२॥

सर्वं प्रासङ्गिकं कृत्वा, वृहद्दीक्षा कृते पुनः ।
पृष्टं तदा च तेनैव, विहारो ज्ञापितो मुदा ॥ ७५३ ॥

स्थगिता विहृतिस्तस्य, मुहूर्त्तं प्रविलोकितम् ।
अष्टाह्निकोत्सवाद्यं च, कृतं गोविन्दभातुकैः ॥ ७५४ ॥

सकुटुम्बैः समागत्य, भक्तिभावः कृतो बहु ।
प्रत्यहं नूतना पूजा, कारिताऽतीव भावतः ॥ ७५५ ॥

धन्नुलालश्च तत्पुत्रः, सुयोग्यो गृहकार्यके ।
लक्ष्मीचन्द्रः परो ज्ञेयः, सदाचारः शिरोमणिः ॥ ७५६ ॥

बुद्धिमान् सद्विचारश्च, सत्यवादी सदा मतः ।
तृतीयः केशरीचन्द्रः, प्रपुत्रा बहवो मताः ॥ ७५७ ॥

विहारवासिनः सर्वे, पट्टणातश्च तत्क्षणे ।
यात्रिणस्तीर्थयात्रायै, तदाऽनेके समागताः ॥ ७५८ ॥

शुभमुहूर्त्तसंयोगे, फाल्गुनशुक्लपञ्चमी ।
तद्दिने सप्तघण्टायाः, समये दीक्षिताः समे ॥ ७५९ ॥

रूप्यकनाणकानां च, प्रभावना च तैः कृता ।
नालिकेरादिवस्तूनां, पराऽपि कारिता बहु ॥ ७६० ॥

अष्टदिवसपर्यन्तं, स्वामिवात्सल्यकं शुभम् ।
कृतं बहुविधानेन, सर्वप्रमोदकारणम् ॥ ७६१ ॥

तत्काले सर्वजीवाना—मानन्दाश्रूणि चक्षुषः ।
आगतानि निजं जन्मकृतार्थं मानितं तदा ॥ ७६२ ॥

फाल्गुनपूर्णिमाह्वे च, विहारस्थगिताय च ।
याचना स्वीकृता तत्र, पंन्यासैर्विहितिः कृता ॥ ७६३ ॥

लक्ष्मीचन्द्रमहाभागः, गुरुभक्तिषु तत्परः ।
तत्काले यच्च सञ्जातं, श्रूयतां सावधानतः ॥ ७६४ ॥

पाठशालां परित्यज्य, विहारो गुरुणा कृतः ।
पश्चात्स्वार्थिजनेनैव, स्वार्थं च साधितं महत् ॥ ७६५ ॥

अयोग्यछात्रवर्गाणां, लोभेन पोषणं कृतम् ।
अन्येषां मानसे दुःखं, महत्तदा प्रजायते ॥ ७६६ ॥

पाञ्चालसाधुसम्बन्धात्सञ्जाता लोभिनश्च ते ।
पक्षपातप्रवेशश्च, तदानि तत्र चागतः ॥ ७६७ ॥

पठनपाठनं कार्यं, सर्वैस्तदा च विस्मृतम् ।
केवलं भुक्तिकार्यञ्च, आदृतं च प्रमादतः ॥ ७६८ ॥

छात्राः पलायितास्तस्याः, तिष्ठन्ति सप्तस्वार्थिनः ।
अन्ये च पञ्चमध्यस्थाः, परे सर्वे गृहे गताः ॥ ७६९ ॥

छिन्नभिन्न दशांवीक्ष्य, पत्रतः श्रेष्ठिना तदा ।
तारद्वारा गुरूणाञ्च, ज्ञापितं सर्वथा खलु ॥ ७७० ॥

भवद्विहारसद्भावे, लोभिसाधुनियोगतः ।
पाठशालाविनाशश्च, अधुना परिजायते ॥ ७७१ ॥

सुधाकुण्डविनाशस्य, उपेक्षा नैव युज्यते ।
गुरुदेवप्रभावेन, प्राक् चोन्नतिश्च कीदृशी ॥ ७७२ ॥

अवनतेश्च सम्भावः, स्वप्नेऽपि धारितो न हि ।
अतः सर्वं परित्यज्य, कृपया विहृतिः पुनः ॥ ७७३ ॥

न पापायां गुरुकुलं, अधुना कार्यतां प्रभो ! ।
भवत्प्रसादतः सर्वमत्र भव्यं भविष्यति ॥ ७७४ ॥

येन केन प्रकारेण, काश्यामागतिः शुभा ।
शासनोन्नतिकार्यञ्च, इदमेव विलोक्यताम् ॥ ७७५ ॥

मम देहे व्यथा वह्वी, सञ्जाता कर्मयोगतः ।
आगन्तुं नैव शक्तोऽस्मि, अतो हि प्रार्थना मम ॥७७६॥

मङ्गलं च समाहूय, कथितं गुरुणा तदा ।
त्वया प्रागपि गन्तव्यं, पश्चादागमनं मम ॥ ७७७ ॥

पञ्चसाधुमहाराजाः, पञ्चछात्रैश्च संयुताः ।
गच्छन्तु भो महाभाग, विलम्बो नैव युज्यते ॥ ७७८ ॥

अन्येषां गन्तुमुत्साहः, विद्यते नैव कश्चन ।
अतस्त्वयैव गन्तव्यं, शुभकार्ये शुभे दिने ॥ ७७९ ॥

प्रतिपत्फाल्गुने चैव, कृष्णपक्षे प्रयाणकम् ।
विहितं गुरुदेवस्य, आज्ञा शिरो विधाय वै ॥ ७८० ॥

विहारे मङ्गलैः सार्धं, साधुछात्राश्च तत्पराः ।
सिंहो गुणो महेन्द्रश्च, अमृतविजयस्तथा ॥ ७८१ ॥

त्रिभुवनादि छात्राश्च, सर्वे ते भक्तिकारकाः ।
पक्षदिवसपर्यन्तं, विहारं परिधाय च ॥ ७८२ ॥

चैत्रस्य शुक्लपक्षे च, द्वितीया दिवसे खलु ।
वाराणस्यां प्रवेशश्च, शालासु च गताः समे ॥ ७८३ ॥

साधूंश्च वीक्ष्य तत्रत्यैः, स्वार्थसाधकछात्रकैः ।
शोच्यते च निजे स्वान्ते, किमर्थं ते समागताः ॥७८४॥

जयशङ्करभूदेवः, तत्रैव कार्यग्राहकः ।
भयभ्रान्तश्च सञ्जातः, तत्काले स गृहे गतः ॥ ७८५ ॥

पुरातनीयछात्राश्च, शोचयन्ति स्वमानसे ।
स्वार्थसिद्धिः कथं मे स्यात्कथं तेषां च तोषणम् ? ॥७८६॥

पुस्तकालयग्रन्थाश्च, व्रजलालादिछात्रकैः ।
संहृत्य च निजे स्थाने, रक्षितः पापयोगतः ॥ ७८७ ॥

अत्याचारस्य बाहुल्यं, भ्रष्टप्रायं च मन्यताम् ।
सुखलालादिछात्राणां, शालाप्रवेशदुर्लभः ॥ ७८८ ॥

पूर्वं पठनकर्त्तव्ये, अधिकारि निषेधता ।
गुरुणा प्रेमपूर्वेण, आकारितः प्रयत्नतः ॥ ७८९ ॥

अन्यत्वदोषयुक्तत्वा–न्निषेधस्तेन कारितः ।
किन्तु दयार्द्रचित्तेन, आहूता गुरुणा पुनः ॥ ७९० ॥

तदर्थं रक्षितः छात्रः, याचनार्थं अहर्निशम् ।
स्वानुकूला च सामग्री, नियोजिता विशेषतः ॥ ७९१ ॥

कण्टालश्च समायातः, तस्याध्ययनकार्यके ।
सान्त्वनं गुरुणा तत्र, कृतमनेकयोगतः ॥ ७९२ ॥

धर्मविषयतत्त्वानां, श्रद्धया रहितस्तथा ।
मिथ्याज्ञानस्य सद्भावे, पाण्डित्यं नैव कथ्यते ॥ ७९३ ॥

अतीव श्रमपूर्वेण, तेषां च पाठनं कृतम् ।
पापकर्मत्वयोगेन, उपकारश्च विस्मृतः ॥ ७९४ ॥

गुणविजयसाधूनां, बहुज्वरस्य वेदना ।
तदानिं तत्र सञ्जाता, सन्निपातेन संयुता ॥ ७९५ ॥

भिषग्वरैः समागत्य, विलोकितं च विग्रहम् ।
रोगशान्तिरुपायश्च, न दृष्टस्तेन तत्क्षणे ॥ ७९६ ॥

असाध्यरोगसद्भावं, दृष्ट्वा मङ्गलसाधुना ।
पारलोकिक–पाथेयं, दत्तं धर्मरसायनम् ॥ ७९७ ॥

चतुःशरणभक्तानां, धारणा नियमौ कृतौ ।
परमेष्ठिनमस्काराः, सर्वे च श्रावितास्तदा ॥ ७९८ ॥

आवश्यकक्रियाकाले, आवश्यकं कृतं तथा ।
तृतीयावश्यके काले, प्राणाश्च त्याजितास्ततः ॥ ७९९ ॥

काशीययतिवर्गेण, आगत्य मङ्गलं प्रति ।
कथितं चाधुना कार्या, अग्निसंस्कारसत्क्रिया ॥ ८०० ॥

मङ्गलेन तदा प्रोक्तं, श्राद्धानां नैव रात्रिकी ।
तादृक् क्रियाऽपि कर्त्तव्या, मुनीनां तर्हि का कथा ? ॥८०१॥

जैनधर्मानुसारेण, जैनश्रावकसज्जनैः ।
तादृक् क्रिया च कर्त्तव्या, यत्र न शास्त्रबाधता ॥८०२॥

प्रातःकाले च सर्वत्र, वार्त्ता च प्रसृता खलु ।
जैनजैनेतराः सर्वे, समागताश्च सत्वरम् ॥ ८०३ ॥

भक्तिभावेन सा तत्र, जय शब्देति घोषतः ।
शिबिकां च समारोप्य,संस्काराय च ते गताः ॥ ८०४ ॥

पश्चात्क्रिया च तैः सर्वैः, साधुछात्रसमायुतैः ।
देववन्दनकार्यं च, विहितं शोकपूर्वकम् ॥ ८०५ ॥

सङ्घेन सह शान्तेश्च, पाठः छात्रैः श्रुतस्तदा ।
गुरूणां ज्ञापितं तच्च, कृतं सर्वं च तैरपि ॥ ८०६ ॥

गुरुणा विहृतिश्चैत्र, कृता विहारभूमितः ।
पाटलिपुत्रनगर्यां, यज्जातं तच्च कथ्यते ॥ ८०७ ॥

पादस्य स्खलना जाता, मार्गे गमनकालिके ।
तत्पीडावस्ततः स्थानादग्रे गन्तुं न शक्यते ॥ ८०८ ॥

साधुछात्रेण झोलायां, संस्थाप्य तत्र गम्यते ।
वैद्याह्वानं कृतं तैश्च, पट्टणावासिसज्जनैः ॥ ८०९ ॥

वैद्यो धर्मगुरुं दृष्ट्वा, श्रुत्वा व्याख्यानकं तथा ।
अतीव हर्षयोगेन, कथितं श्राद्धसम्मुखे ॥ ८१० ॥

प्रतिदिनं विचारं च, आगमिष्यामि सत्वरम् ।
गुरुसेवाविधानाय, भक्तिश्च मानसे बहु ॥ ८११ ॥

विशुद्धेनोपयोगेन, वैद्यस्य भक्तिभावतः ।
रोगशान्तिश्च सञ्जाता, धर्मयोगप्रभावतः ॥ ८१२ ॥

मासिकी वेदनां भुक्त्वा, कर्मजन्यां च तत्क्षणे ।
समाधिं च परां प्राप्य, विहारो गुरुणा कृतः ॥ ८१३ ॥

प्रतिग्रामं समाख्यानं, जायते धर्मपूर्वकम् ।
अनेके हिंसका जीवाः, हिंसां त्यजन्ति सत्वरम् ॥ ८१४ ॥

कैश्चिच्च सर्वथा हिंसा, त्यज्यते सुखहेतवे ।
कैश्चिच्च वर्षपर्यन्तं, त्याजने नियमः कृतः ॥ ८१५ ॥

जैनधर्मस्य सद्बोधः, सर्वत्र परिजायते ।
जैनसाहित्यदानं च, प्रतिग्रामं विभाव्यताम् ॥ ८१६ ॥

अद्यावधि च ग्रन्थानां, दर्शनं तत्र जायते ।
गीतावद्ग्रन्थरत्नानां, अध्ययनं वितन्यते ॥ ८१७ ॥

जैनदर्शनविख्यातिः, अतीव गुरुणा कृता ।
शासनरसिकाः सर्वे, भवेयुर्जन्तवो यथा ॥ ८१८ ॥

इति च भावना येषां, स्वान्ते चातीव जायते ।
तादृशगुरुदेवानां, भक्तिः कथं न तन्यते ? ॥ ८१९ ॥

ततो विहारयोगेन, वाराणसीसमीपके ।
आगता गुरुदेवाश्च, प्रसृतिरिति जायते ॥ ८२० ॥

जैनजैनेतराः सर्वे, दर्शनाय चलन्ति ते ।
चन्द्रावतीनगर्यां च, गतास्ते सर्वसज्जनाः ॥ ८२१ ॥

चन्द्रप्रभोश्च कल्याणं, चतुष्कमत्र भाव्यताम् ।
पवित्रभूमिकायाश्च, व्याख्यानं गुरुणा कृतम् ॥ ८२२ ॥

सुधापानं समं तच्च, ज्ञात्वा पीतं च सज्जनैः ।
राजघाटीयशालायामानीताः श्रावकैः खलु ॥ ८२३ ॥

गौर्जराभिध देशेषु, वटपद्रीयराज्यके,
लींचग्रामे समुत्पन्नैर्मंगलविजयैः कृतः ॥ ८२४ ॥

धर्मे निपुण भगवान् दृढतत्त्वविच्च,
मायादिदोषरहिता व्रतरागरक्ता ।
अम्बेति मातृगुणभृद् अभिधा यदीया;
तत्पुत्रचित्तसुखदैर्रचितः स ग्रन्थः ॥ ८२५ ॥

इति श्रीशास्त्रविशारद जैनाचार्य जगत्पूज्य जङ्गम-
युगप्रधान श्रीविजयधर्मसूरीश्वरशिष्येण न्याय-
तीर्थ न्यायविशारदोपाध्यायमङ्गलविजयेन
विरचिते विजयधर्मसूरिजीवनरेखान्तर्गत-
वाराणसीतः तीर्थयात्रार्थविहारकालि-
कातागमन पञ्चभावुकदीक्षाप्रदान
चम्पापूर्यादि यात्राकरण पुनः
काश्यामागति विषयकनामा
तृतीयः परिच्छेदः
समाप्तः ॥३॥

# चतुर्थपरिच्छेदः प्रारभ्यते

आगतिं गुरूणां श्रुत्वा, हर्षायितं च साधुभिः ।
काशिनरेशपार्श्वाच्च, एको भृत्यः समागतः ॥ १ ॥

आगमनं गुरूणां च, कदा काश्यां भविष्यति ।
इति पृच्छा कृता तेन, शालाछात्रैश्च ज्ञापितम् ॥ २ ॥

राजघाटीयशालाया—मागमिष्यन्ति श्वो दिने ।
तेनापि कथितं तत्र, प्रावेश्यं शुभयोगतः ॥ ३ ॥

अस्मत्पार्श्वे च सामग्री, यावती खलु विद्यते ।
सर्वाऽपि गुरुसामीप्ये, प्रेष्यते बहुप्रेमतः ॥ ४ ॥

कच्छदेशीयवास्तव्याः, पासुवीराधिकारिणः ।
यात्रार्थं ते समायाताः, श्रुतं तैरपि तत्क्षणे ॥ ५ ॥

प्रावेश्यं गुरुदेवानामस्माभिश्च विधीयते ।
यावद्द्रव्यव्ययस्तत्र, तावच्च क्रियते मया ॥ ६ ॥

गजानां दशकं चैव, चाश्वानां द्विशतं तथा ।
पताका द्विशती ज्ञेया, अन्याऽपि तादृशी किल ॥ ७ ॥

अनेकवाद्यसामग्री, काशितश्च समागता ।
अन्या नगरवास्तव्यैः, योजिता गुरुभक्तितः ॥ ८ ॥

राजघाटे समायातां, सामग्रीं वीक्ष्यते जनैः ।
किमद्य जायते चात्र, महोत्सवश्च तादृशः ॥ ९ ॥

पीताम्बरो हरिः किंवा, किंवा शङ्करस्वामिनः ।
किंवाऽवतारता केषामद्यैव परिजायते ॥ १० ॥

इति तर्कं विधायैव, पश्चात्तैरेव निश्चितम् ।
महात्मा धर्मसूरीणां, काश्यामागमनं मतम् ॥ ११ ॥

अहो त्यागि महात्माऽसौ, सर्वथा निष्पृहः किल ।
जगदुद्धारकार्याय, साधुर्वेषो धृतो यतः ॥ १२ ॥

सर्वे च काशिवास्तव्याः आगता गुरुसन्निधौ ।
चलन्ति ते च तत्पश्चाद्बहुविवेकपूर्वकम् ॥ १३ ॥

राजा मौक्तिक–लालाख्याः, राजानो माधवास्तथा ।
कालीय साव मुख्याश्च, ज्ञातव्याः सज्जना जनाः ॥१४॥

ज्ञानानन्दादि सन्यासी, चेतनमठस्वामिनः ।
सर्वे ते च समायाताः, गुरूणां सम्मुखे तथा ॥ १५ ॥

मधुसूदनमिश्राश्च, अम्बादत्तादयः खलु ।
वागीशजीव मिश्राद्याः, त्रिपाठी देवशास्त्रिणः ॥ १६ ॥

रमापति महोत्साहाः, अन्ये च शास्त्रिणस्तदा ।
श्रुत्वा सर्वे समायाताः, गुरुदेवप्रभावतः ॥ १७ ॥

एककोशप्रमाणं च, जातं प्रवेशमानकम् ।
वर्धापिता च मार्गेषु, अक्षताद्यैश्च भावतः ॥ १८ ॥

महाडम्बरपूर्वेण, काश्यां प्रवेशनं कृतम् ।
तादृशं नैव केषाञ्चिन्न भूतं न भविष्यति ॥ १९ ॥

मङ्गलदेशना तेषां, श्रुत्वा सर्वे प्रहर्षिताः ।
जैनमुनिमहाराजाः, सर्वोत्तमाश्च दर्शने ॥ २० ॥

अन्येषां दर्शनानां च, मध्ये च जैनदर्शनम् ।
समाश्रित्य समाख्यानकर्त्तव्ये कुशला मताः ॥ २१ ॥

जैनदर्शनज्ञातारः, काश्यां न कोऽपि विद्यते ।
इयं त्रुटिरनेनैव, महात्मना च पूरिता ॥ २२ ॥

षड्दर्शनसमाख्यान–मनेनापि विधीयते ।
सर्वदर्शनपाण्डित्यमस्मिंश्च सर्वथा मतम् ॥ २३ ॥

इमां वार्तां च संश्रुत्य, अपरे पण्डितास्तथा ।
शास्त्रार्थविदवाने च, समर्थाश्च भवन्ति नो ॥ २४ ॥

पाठशालाप्रबन्धश्च, पुनः सुचारुरूपतः ।
अयोग्यं च परिज्ञाय, निष्कासनं विधीयते ॥ २५ ॥

संघवीसुखलालश्च, व्रजलालस्तथा परः ।
स्वार्थसाधनकार्याय, यत्नशीलौ च तौ मतौ ॥ २६ ॥

लघूनां दुःखदातारौ, उदरपुष्टिकारकौ ।
शिष्यलोभिमुनीनां च, प्रतारणपरौ च तौ ॥ २७ ॥

तयोरसद्विचारं च, दृष्ट्वा च गुरुणा तदा ।
श्रद्धाविहीनतां ज्ञात्वा, निष्कासितौ ततश्च तौ ॥ २८ ॥
ततश्च छात्रवर्गाणां, पाठावलिः कृता शुभा ।
स्वल्पसमयसञ्जाते, छात्रसङ्ख्या प्रवर्धिता ॥ २९ ॥
मुनीनां न्यायपाठाश्च, साहित्यपठनं परम् ।
एवमन्ये च सत्पाठाः, निर्धारिताश्च तत्क्षणे ॥ ३० ॥
गुरूणां कीर्त्तिकल्लोलाः, प्रसृता भारते तदा ।
संश्रुत्य सर्वविज्ञैश्च, स्वाऽभिप्रायः प्रकाशितः ॥ ३१ ॥
तदा च काशिराजेन, निर्धारितं च मानसे ।
गुणज्ञ—विज्ञवर्गेण, गुरवेऽपि निवेदितम् ॥ ३२ ॥
सर्वदेशीयविज्ञैश्च, भव्यपदवीप्रदापने ।
निर्णीतं च दिनं तस्य, मुद्रालेखश्च कारितः ॥ ३३ ॥
गुरुणा कथितं तेषां, न मे पदवीप्रयोजनम् ।
श्राद्धवर्गेण संश्रुत्य, कथितं सुन्दरं महत् ॥ ३४ ॥
जैनेतरीयविज्ञाश्च, ददति जैनसाधुभ्यः ।
न भूतं च कदाप्येवं, भविष्यति ततोऽपि न ॥ ३५ ॥
अवसरं करे लब्ध्वा, कथं च ततः क्षिप्यते ।
इति संचिन्त्य पत्रं तन्मोहमय्यां च दापितम् ॥ ३६ ॥
भक्तराड्वीरचन्द्रश्च, श्रुत्वातिहर्षितस्तदा ।
इदं च सत्वरं कार्यं, विलम्बो नात्र युज्यते ॥ ३७ ॥

मोहमय्याश्च सच्छ्राद्धाः, सर्वे यास्यन्ति शीघ्रकम् ।
आमन्त्रणं च सर्वत्र, प्रेष्यतां पत्रतस्तथा ॥ ३८ ॥

सर्वैः पण्डितवर्गैश्च, हस्ताक्षरः कृतस्तथा ।
कालिकातीयविज्ञाश्च, नवद्वीपीय पण्डिताः ॥ ३९ ॥

भाटपल्लिस्थिता ये च, शान्तिपुरनिवासिनः ।
तैः सह गुरुदेवानां, परिचयः प्रसङ्गतः ॥ ४० ॥

नवद्वीपेषु सञ्जातः, तत्सर्वं प्रणिगद्यते ।
कालिकाता विहाराच्च, मक्षुदाबादमार्गके ॥ ४१ ॥

गुरुणा तत्र गन्तव्ये, नवद्वीपः समागतः ।
तत्र गन्तुं च सोत्साहः, धारितो गुरुणा तदा ॥ ४२ ॥

गंगापारं समागत्य, नवद्वीपे गतास्ततः ।
दशकोशविहारश्च, तद्दिने परिजायते ॥ ४३ ॥

परिश्रान्ताश्च ते सर्वे, साधुछात्राश्च तद्दिने ।
राजमार्गे च दुर्गन्धिः, समुच्छलति भूरिशः ॥ ४४ ॥

मत्स्यमांसादिवस्तूनां,जायन्ते तत्र राशयः ।
वङ्गवासिपलादाश्च, भक्षयन्ति च नित्यशः ॥ ४५ ॥

तां दृष्ट्वा कुत्र गन्तव्यं, शुद्धं स्थानं न विद्यते ।
इति सञ्चिन्त्य वङ्गीय–जनः पृष्टश्च तत्क्षणे ॥ ४६ ॥

सन्यासिपाठशालायां, गन्तव्यमिति घोषितम् ।
गताश्च तस्य शालायां, साधुमहाशयैस्तथा ॥ ४७ ॥

भो विद्वन् ! आगतः कस्मात्क च गन्तुं मनोरथः ।
इति पृच्छा विधातव्ये, विचाले तेन बोधितम् ॥ ४८ ॥

प्रयागराजकुम्भस्य, मेलायां भाषणं तव ।
सञ्जातं विज्ञवर्गैश्च, श्रुतं तत्र स्थितेन वै ॥ ४९ ॥

श्रुतं चापि मया पूर्वं, भवतामागतिः कथम् ? ।
भवादृक् पुण्यरूपाणां, मम गृहे कदाऽऽगतिः ? ॥ ५० ॥

धन्योऽहं कृतकृत्योऽहमद्य मे सफलं दिनम् ।
पूर्वपुण्यप्रयोगेन, जातं त्वदीय दर्शनम् ॥ ५१ ॥

शिष्याणां पाठनं तस्मात्समापितं च तत्क्षणे ।
अद्य वेदान्तपाठोऽपि, न भवतीति ज्ञापितम् ॥ ५२ ॥

शिष्टाऽऽगमनकाले च, अनध्यायो निगद्यते ।
धर्मचर्चां विधायैव, एकं स्थानं च दर्शितम् ॥ ५३ ॥

एकान्ते साधुयोग्यं तज्ज्ञात्वा तत्र स्थिताः समे ।
व्रजवासिद्विजानां च, गृहादाहारता शुभा ॥ ५४ ॥

तेन सह समागत्य, दापितं भक्तपानकम् ।
आगत्य च निजे स्थाने, व्यापृतश्चैव साधुभिः ॥ ५५ ॥

प्रातःकाले यदूनाथ—सार्वभौमनिकेतने ।
साधुभिर्गुरुदेवाश्च, गता मिलनकार्यके ॥ ५६ ॥

साधूनामागतिं दृष्ट्वा, गृहाद्बहिः समागतः ।
सार्वभौमयदूनाथः, सन्मानं च करोत्यसौ ॥ ५७ ॥

धन्यभाग्यं मदीयं च, ममाङ्गणे च साधवः ।
आगच्छन्ति पवित्राश्च, कथं भक्ति करोमि न ॥ ५८ ॥

इति सञ्चिन्त्य तेनैव, उचितासनकं मुदा ।
दापितं भक्तिपूर्वेण, स्वयमधः स्थितस्तदा ॥ ५९ ॥

ऊर्णासनगृहीत्वैव, स्थिताश्च गुरवः किल ।
जैनधर्मीय साधूनां, प्रशंसा तेन कारिता ॥ ६० ॥

भारते नैव चान्येषां, साधूनां पथि कष्टता ।
यादृशी जैन साधूनां, तादृगन्यत्र नो खलु ॥ ६१ ॥

विज्ञेन कथितं तत्र जैन धर्मस्य किं ब्रुवे ।
यत्र स्याद्वादसिद्धान्तः विशुद्धः परिराजते ॥ ६२ ॥

सापेक्षवादता यत्र, नयादिना समन्विता ।
तादृक् सिद्धान्तवादं च, कथं स्तोतुं च नार्हति ॥ ६३ ॥

प्रोक्तं च गुरुणा तत्र, यदीच्छा तस्य खण्डने ।
विद्यते मानसे यस्य, तदागच्छतु सत्वरम् ॥ ६४ ॥

तेनोक्तं शङ्कराचार्यैः, यत्नोऽपि खण्डने कृतः ।
तथापि नैव सञ्जातमस्माभिः किं विधीयते ? ॥ ६५ ॥

तत्पश्चादपि मानुष्यैर्भूरिशः प्रयतः कृतः ।
नैव केनपि सञ्जातं, इति स्वान्ते विचार्यताम् ॥ ६६ ॥

अभेद्यवज्रदुर्गेषु , मायागोलाप्रवेशनम् ।
कदापिनैव जायेत, कथं चेष्टा च मादृशाम् ? ॥ ६७ ॥

इति वार्त्ता विधायैव, ततो ग्रन्थसमर्पणम् ।
न्यायव्याकृतिसाहित्य, विषयग्रन्थकाः खलु ॥ ६८ ॥

ग्रन्थरत्नानि वीक्ष्यैव, विज्ञाश्च हर्षितास्तदा ।
ततश्च राजकृष्णानां, गृहे च गुरवो गताः ॥ ६९ ॥

आगतांश्च गृहे वीक्ष्य, सन्मुखं ते समागताः ।
मत्स्यभोजस्य दुर्गन्धि—रागच्छति च सत्वरम् ॥ ७० ॥

तर्कपञ्चाननैर्युक्ता, राजकृष्णमहोदयाः ।
भक्तिपूर्व च सन्मानं, कुर्वन्ति हि गुरोस्तदा ॥ ७१ ॥

प्रणिपत्यैव विज्ञप्तिं, कुर्वन्ति ते च सज्जनाः ।
भवत्पुण्यप्रभावेन, गृहं जातं पवित्रकम् ॥ ७२ ॥

कार्यमादिश भो विद्वन् !, निष्फला प्रार्थना मम ।
न जायते च कुत्रापि, अतोहि सा विधीयते ॥ ७३ ॥

प्रोक्तं च गुरुणा तत्र, न मे किञ्चित्प्रयोजनम् ।
किन्तु न्यायपदार्थानां, चर्चनेच्छा प्रवर्त्तते ॥ ७४ ॥

जैनदर्शनतत्त्वानां, ज्ञानं त्वयि च वर्त्तते ।
यदिस्यात्तर्हि वक्तव्यं, श्रोतुमिच्छा गरीयसी ॥ ७५ ॥

तेनोक्तं जैनतत्त्वानां, मह्यं ज्ञानं न विद्यते ।
किन्तु स्याद्वादसिद्धान्तः, समन्वयस्य कारकः ॥ ७६ ॥

सर्वैः सहैव संलापं, कर्तुं च स प्रवर्त्तते ।
तस्यैव खण्डनं नैव, अन्येनैव विधीयते ॥ ७७ ॥

बन्धुभावं च सर्वत्र, करोति जैनदर्शनम् ।
अन्यस्मिन्नास्ति तच्छक्तिः, तत्रेति च विशेषता ॥ ७८ ॥

एवं विनोदवार्त्तां च, कृत्वा गुरुः समागतः ।
मध्याह्ने च ते सर्वे, सम्मील्य गुरुसन्निधौ ॥ ७९ ॥

आगता देशनार्थं च, गुरुणा प्रतिबोधिताः ।
सार्वजनीन–जिज्ञासा–पूर्त्तिश्च विहिता तदा ॥ ८० ॥

जैनदर्शनतत्त्वानां, व्याख्यानं गुरुणा कृतम् ।
समन्वयस्वरूपेण, श्रुत्वा सर्वे च हर्षिताः ॥ ८१ ॥

प्रश्नोत्तरं च सर्वेण, कृतं च हितबुद्धितः ।
गुरूणां बुद्धिचातुर्यं, दृष्ट्वा सर्वे चमत्कृताः ॥ ८२ ॥

सुन्दरं दर्शनं तेषां, सर्वग्राह्यं च तन्मतम् ।
एवं प्रोच्यैव तैः सर्वैरनुमोदनता कृता ॥ ८३ ॥

तत्र स्थिरत्वकार्याय, समयाऽभावयोगतः ।
प्रार्थना स्वीकृता नैव, गुरुणा विहृतिः कृता ॥ ८४ ॥

एवं च सर्वविज्ञानां, परिचयप्रधानतः ।
प्रेमप्रकर्षता जाता, मञ्जिष्ठरागसदृशी ॥ ८५ ॥

प्रासङ्गिकं च चर्चित्वा, प्रकृतं कथ्यते ततः ।
पदवीप्रदानसद्योगः, अधुना परितन्यते ॥ ८६ ॥

पद्वीप्रदान कार्यार्थ, सर्वे तत्र समागताः ।
मोहमयी पुरीतश्च, गोकुलवीरचन्द्रकौ ॥ ८७ ॥

गुलाबदेवचन्द्राश्च, चुन्नीलालसराफकः ।
वेणीचन्द्रादयश्चैव, अन्ये गौर्जरदेशजाः ॥ ८८ ॥

भावपत्तनकाः श्राद्धाः, राजनगरभावुकाः ।
मगुभाइफतेचन्द्रः, अन्ये तदनुयायिनः ॥ ८९ ॥

कालिकातीयवास्तव्याः, सर्वे तत्र समागताः ।
सतीचन्द्रश्च विद्यायाः भूषणोऽपि समागतः ॥ ९० ॥

मक्षुदावादतः सर्वैः, पत्रादिकं च प्रेषितम् ।
अन्येषां तारपत्राणां, राशयस्तत्र चागताः ॥ ९१ ॥

शालास्थानं समारभ्य, ठठ्यर्पणतान्तकम् ।
पताकाः सुन्दरा बद्धा, जैनशासनदीपिकाः ॥ ९२ ॥

शालाशोभाविशेषेण, कारिता बहु भेदतः ।
यत्रैव काशिराजस्य, अध्यक्षपदता भवेत् ॥ ९३ ॥

तत्स्थानस्यैव सौन्दर्यं, तदा च कथ्यते किमु ।
स्वर्गविमानसादृश्यं, जनैश्च परिकल्पितम् ॥ ९४ ॥

अहिंसा परमो धर्मः, यतो धर्मस्ततो जयः ।
सत्यसमश्च नो धर्मः, इत्येवमपि घोषितम् ॥ ९५ ॥

स्याद्वादो वर्तते यस्मिन्पक्षपातो न विद्यते ।
नास्त्यन्यपीडनं किञ्चिज्जैनधर्मे स उच्यते ॥ ९६ ॥

क्षमावीरस्य भूषणं, जैनं जयति शासनम् ।
इत्याद्यनेकवाक्यानां, बोधपाठाश्च दर्शिताः ॥ ९७ ॥

काशिराजस्य वैतानं, विशालं बहुमूल्यकम् ।
शालाचत्वरदेशेषु, ऊर्ध्वेञ्च तानितं महत् ॥ ९८ ॥

तदुपरि शुभं चिह्नमतीव दीप्तिकारणम् ।
पञ्चविधेन काचेन, निर्मितं गोलकादिकम् ॥ ९९ ॥

बङ्गीया भट्टपल्लीयाः, नवद्वीपीय सज्जनाः ।
मैथिलाः काशिवास्तव्याः, दाक्षिणात्याश्च पण्डिताः॥१००॥

त्रिशतं चैव विज्ञानां, सन्यासिनां शतं तथा ।
नृपा मौक्तिकचन्द्राद्याः, माधवकालिकादयः ॥ १०१ ॥

हरिदासादि गुप्ताश्च, वाराणसीय सम्भवाः ।
चौधरी शिखराद्याश्च, मोहनहर्षचन्द्रकाः ॥ १०२ ॥

काशिप्रसाद नित्याश्च, अन्येऽपि श्राद्धवर्गकाः ।
नग्नाटाः छेदिलालाद्याः, डाह्यालालादि गौर्जराः ॥ १०३ ॥

कालिकातीय वास्तव्याः, लक्ष्मीचन्द्रादिकाः समे ।
रामचन्द्रादिकाश्चैव, वल्लभाः सर्ववल्लभाः ॥ १०४ ॥

मोहमयी समायाताः, वीरचन्द्रादिभावुकाः ।
गोकुलमणिलालाश्च, अन्ये सर्वे च तत्क्षणे ॥ १०५ ॥

आग्रादेहलि वास्तव्याः, विहारलखनौ–भवाः ।
शतशो ग्रामवास्तव्याः, अन्ये तत्र समागताः ॥ १०६ ॥

मोहमयीसमाचारदलसम्पादका जनाः ।
जैनसम्पादकाश्चैव, अन्ये काशिपुरस्थिताः ॥ १०७ ॥
दैनिकपत्रकारीय, समाचारस्य पाठकः ।
नागरी पत्रदातारः, तेऽपि तत्र समागताः ॥ १०८ ॥
अनेकवाद्यसामग्री, संयोजिताच भावतः ।
श्रेष्ठिना वीरचन्द्रेण, दीपचन्द्रात्मजेन वै ॥ १०९ ॥
सर्वकार्ये च कर्त्तव्ये, हर्षश्च प्रकटीकृतः ।
पुत्रोत्सवाधिकं सौख्यमत्रैव परिज्ञायते ॥ ११० ॥
आनन्दसागरादीनां, ज्ञापितं श्रेष्ठिना तदा ।
धर्मविजयसाधूनामाचार्यपदरोपणम् ॥ १११ ॥
सङ्घेन राजसामीप्ये, विज्ञवर्येण तत्र च ।
सम्मील्य पददानं च काश्यां सर्वैर्विधीयते ॥ ११२ ॥
तेनानुमोदितं तत्र, अन्यसाधुजनेन वै ।
अनेकसाधुवर्याणां, प्रापितास्तेन सम्मतिः ॥ ११३ ॥
पदवीप्रदानकार्यं च, महत्वाधायकं मतम् ।
शासनोन्नतिहेतुश्च, कथ्यते नात्र संशयः ॥ ११४ ॥
यदा च काशिराजस्य, आगमनं भवेत्खलु ।
राजमन्त्र्याद्यनेकैश्च, राजवर्गेण संयुतः ॥ ११५ ॥
ठट्टर्यापणपर्यन्ते, यदा राजा समागतः ।
शङ्खनादकैर्विप्रैः, गुञ्जारवः कृतो महान् ॥ ११६ ॥

सहस्र जनसंख्याश्च, अन्यास्तत्रैव चागताः ।
स्थाना–भावाच्च सर्वत्र, रथकट्यां स्थिताः समे ॥ ११७ ॥

नन्दनशावरथ्यां च, स्थानं किञ्चिन्न विद्यते ।
शालायां चैव सर्वत्र, उपर्यधश्च भूमिषु ॥ ११८ ॥

येन लब्धं च यत्स्थानं, स तत्र परितिष्ठति ।
पर्वणि सर्वधर्मस्य, साङ्कीर्ण्यं परिदृश्यते ॥ ११९ ॥

सतीशचन्द्रमहाभागाः, गुरुदेवस्य शिष्यकाः ।
आशुतोषादिकाः सर्वे, अन्येऽपि वङ्गदेशीयाः ॥ १२० ॥

हिन्दुकॉलेजवास्तव्याः, अन्ये चैवाधिकारिणः ।
आगता बहु हर्षेण, वन्दिता गुरवश्च तैः ॥ १२१ ॥

सभापत्यासनं येन, स्वीकृतं च नृपेण वै ।
यदा च गुरुदेवानां, सन्मानं जायते तदा ॥ १२२ ॥

सहस्रवर्षपूर्वं च, न जातं यत्र यादृशम् ।
तादृशं तत्र सञ्जातमतो हर्षो महान्भवेत् ॥ १२३ ॥

विज्ञानामर्पणं चैव, पदव्याश्च राजसन्निधौ ।
राज्ञा च परमाभक्तिः, तदा च प्रकटीकृता ॥ १२४ ॥

जैनसङ्घोऽपि हर्षेण, जातोऽतीव प्रमोदभाक् ।
गुरूणां तादृशं मानं, दृष्ट्वा केषां न जायते ॥ १२५ ॥

जैनधर्मप्रभावश्च, वर्धते काशिदेशके ।
द्वेषिविप्रजनानां च, मनः शल्यायितं महत् ॥ १२६ ॥

पदवीप्रदानकार्यं च, प्रारब्धं वीरचन्द्रकैः ।
मङ्गलं च कृतं पूर्वं, राज्ञां प्रमुखस्थानके　॥ १२७ ॥
अहोऽद्य सफलं जन्म, गुरूणां पददापनम् ।
मम हस्ते प्रजायेत, ततो हस्तपवित्रकः　॥ १२८ ॥
सहस्र वर्षपूर्वस्मिन्पार्श्वनाथो जगत्प्रभुः ।
अत्रैव नगरे जातः, धन्यमतः पुरं मतम्　॥ १२९ ॥
तादृश प्रभुशिष्यस्य, पदवीप्रदानकं महत् ।
सञ्जातं भावपूर्वेण, धन्यं च नगरं ततः　॥ १३० ॥
शास्त्रविशारदं पूर्वं, जैनाचार्यं ततः परम् ।
इत्युपाधि प्रदानं च, गुरूणां कारितं तदा　॥ १३१ ॥
गुरुदेवेन तस्यैव, उत्तरं दापितं मुदा ।
संघेनाचार्यपदवी च, तदा तस्मै समर्पिता　॥ १३२ ॥
पत्रिका पददानस्य, अत्रैव दीयते खलु ।
ततस्तेनैव ज्ञातव्यं, कीदृक् पदवीप्रदानकम्　॥ १३३ ॥
सतीश्चन्द्रादि भव्यानां, पण्डितानां तथैव च ।
भाषणं शुद्धसञ्जातं, वीरचन्द्रेण कारितम्　॥ १३४ ॥
अनेकधन्यवादाश्च, जैनेन दापितास्तदा ।
गुरुणा च कृता सर्वा, क्रिया कल्याणहेतुका　॥ १३५ ॥
व्याख्यानानन्तरं राज्ञां, गुरुपार्श्वे समागतिः ।
आगत्य धार्मिकी चर्चा, कृता चातीव प्रेमतः　॥ १३६ ॥

सर्वेषां विदुषां तेषां, सत्कारः श्रेष्ठिना कृतः ।
अभिनन्दनपत्राणि, संस्कृते चागतानि च ॥ १३७ ॥

प्राकृते छात्रवर्गाणां, दलानि च शुभानि वै ।
गम्भीराणि विशालेन, अर्थेन पूरितानि च ॥ १३८ ॥

स्वामिवात्सल्यता श्रेष्ठिवर्येण कारिता शुभा ।
पूजा प्रभावनाद्यं च, सर्वं तत्र विभाव्यताम् ॥ १३९ ॥

शास्त्रविशारदं पूर्वं, जैनाचार्यं ततः परम् ।
विजयधर्मसूरिश्च, इति नाम्ना प्रसिद्धिभाक् ॥ १४० ॥

आचार्यपदकं चैव, श्रीसङ्घेन समर्पितम् ।
राज्ञा पण्डितवर्गेण, शास्त्रविशारदादिकम् ॥ १४१ ॥

एवं च पदलाभेऽपि, स्वान्तेऽनुत्सेकता खलु ।
सदा शान्तस्वभावश्च, सर्वत्र समभावना ॥ १४२ ॥

जैनसङ्घेन सर्वत्र, घोषितं पददापनम् ।
समाचारादि पत्रेषु, जैनकीर्त्तिः समुज्ज्वलाः ॥ १४३ ॥

अन्येन साधुवर्गेण, श्रुत्वा द्वेषानलो हृदि ।
ज्वालितश्च तथा प्रोक्तं, हाहा तेन कृतं च किम् ॥१४४॥

यादृशी भावना येषां, सिद्धिर्भवति तादृशी ।
भावदया च तेष्वेव, गुरूणां वर्तते सदा ॥ १४५ ॥

न्यायव्याकृतिशास्त्राणां, साहित्यनाटकादीनाम् ।
गुरुद्वारा प्रचारश्च, जैनानां परिजायते ॥ १४६ ॥

पुस्तकदानकार्यं च, अतिवेगैर्वितन्यते ।
सर्वदेशीयविज्ञानां, दाने नैव विभिन्नता ॥ १४७ ॥

न्यायग्रन्थाभिधानञ्च, विपुलभावयोगतः ।
उल्लेखः क्रियते चात्र, सर्वेषां बोधहेतवे ॥ १४८ ॥

शास्त्रवार्त्तासमुच्चयः, खण्डनखाद्यपुस्तकम् ।
न्यायालोकादिका ग्रन्थाः, रत्नाकरावतारिका ॥ १४९ ॥

स्याद्वादरत्नखानिश्च[1], सन्मतितर्कपुस्तकम् ।
प्रमालक्ष्मप्रमाणस्य, मीमांसा परिभाषिका ॥ १५० ॥

प्रमाणनयतत्त्वाख्यं, स्याद्वादमञ्जरी तथा ।
इत्यादि न्यायग्रन्थाश्च, अन्येऽपि परिभाषिताः ॥ १५१ ॥

सिद्धहेमबृहद्वृत्तिः, लघुवृत्तिश्च नामकम् ।
बुद्धिसागरकं धर्मदीपिका लघुप्रक्रिया ॥ १५२ ॥

न्यासादि[2] युक्तमत्रैव, विद्यते ग्रन्थरत्नकम् ।
काव्यानुशासनं चैव, वाग्भट्टीयानुशासनम् ॥ १५३ ॥

लिङ्गानुशासनं चैव, सटीकं परिवर्तते ।
काव्यग्रन्थस्य बाहुल्यं, जैनशास्त्रे च विद्यते ॥ १५४ ॥

छन्दोऽनुशासनं छन्दस्य विषयप्रकाशनम् ।
नाट्यदर्पणशास्त्रं च, नाटकभेददीपकम् ॥ १५५ ॥

१ स्याद्वादरत्नाकरः । २ बृहन्न्याससम्पूर्णो नास्ति ।

मोहपराजयं चैव, नलविलासकं तथा ।
सत्यहरिश्च[1] द्रौपद्याः, स्वयंवरणनाटकम् ॥ १५६ ॥
जैनग्रन्थान् समालोक्य, युक्तिप्रबलसंयुतान् ।
योगविद्या च जैनानां, गृहे एव प्रजायते ॥ १५७ ॥
विज्ञानां मानसे नित्यं, प्रभावश्च ततोऽपि च ।
योगग्रन्थेषु बाहुल्यमस्ति तदपि कथ्यते ॥ १५८ ॥
योगदृष्टिसमुच्चयः, योगविंशतिका तथा ।
योगशास्त्रं च योगाष्टकं च योगप्रदीपकम् ॥ १५९ ॥
अध्यात्मसारशास्त्रं च, अध्यात्मोपनिषत्तथा ।
द्वात्रिंशिका च द्वात्रिंशद्योगविषयमुख्यकाः ॥ १६० ॥
जैनसिद्धान्तसर्वस्वं, योगस्य प्रतिपादकम् ।
दशवैकालिकं चैव, आचाराङ्गादि नामकम् ॥ १६१ ॥
लक्षणमपि निर्दोषमतिव्याप्त्यादि शून्यकम् ।
पवित्राचारशास्त्रञ्च, अन्यत्र नैव विद्यते ॥ १६२ ॥
नारचन्द्रमहेन्द्रीयाः, ग्रन्थाः ज्योतिः प्रकाशकाः ।
आरम्भदिनलग्नादिशुद्धयो ग्रन्थका मताः ॥ १६३ ॥
सर्वविषयवैसद्यं, जैनदर्शनमुच्यते ।
तत्त्वार्थसूत्रणं चैव, शुद्धतत्त्वप्रकाशकम् ॥ १६४ ॥
टीका अनेकसद्व्याकाः, विद्यन्ते चाधुना खलु ।
व्यवहारस्य शास्त्राणि, बहूनि जैनदर्शने ॥ १६५ ॥

---

१ सत्यहरिश्चन्द नाटकम्

अर्हन्नीत्यादिका ग्रन्थाः नीतीनां परिपोषकाः ।
लक्षशो जैनग्रन्थाश्च, जैनसाहित्यद्योतकाः ॥ १६६ ॥

एवं च जैनसाहित्यं, विभिन्नविषये किल ।
श्रुत्वा पण्डितवर्गेण, मस्तकं धूनितं बहु ॥ १६७ ॥

शिवकुमारशास्त्री च, चिन्तति मानसे तथा ।
जैनानां चैव साहित्यं, विद्यते न कदाचन ॥ १६८ ॥

भ्रान्तिर्ममेति सञ्जाता, गुरूणामुपदेशतः ।
अद्यैव खलु सा नष्टा, जैनसाहित्यलोकनात् ॥ १६९ ॥

तादृशं जैनसाहित्यं, दृष्ट्वा स्वान्ते च मोदते ।
महात्मना च जैनेन, लिखिता युक्तिबोधकाः ॥ १७० ॥

निर्माणस्यैव कौशल्यं, जैनानां परिवर्तते ।
एवं सर्वत्र जैनानां, साहित्य पुष्टिकारकाः ॥ १७१ ॥

प्रघोषाः परिजायन्ते, भारते नात्र संशयः ।
यूरोपीयाश्च विद्वांसः, जैनसाहित्यपाठने ॥ १७२ ॥

नित्यं समुद्यताश्चैव, अत्यादरत्व पूर्वकम् ।
एवं प्रचारकार्यं च, विपुलं जायते तथा ॥ १७३ ॥

मङ्गलविजयादीनां, साधूनां न्यायतीर्थके ।
परीक्षादानकार्यश्च, अतिवेगेन जायते ॥ १७४ ॥

साध्ववस्थासु तत्कार्यं, दुर्लभं जैनदर्शने ।
आरम्भे कठिनं तच्च, अन्ते च सुखहेतुकम् ॥ १७५ ॥

तदर्थं कालिकातायां, विहारः साधुभिः कृतः ।
गुर्वाशिषं च लब्ध्वैव, साधवो यान्ति तत्क्षणे ॥ १७६ ॥
मङ्गलन्यायसाध्वोश्च, विहारस्तत्र सम्मतः ।
सहायार्थं महेन्द्रश्च, गुरुणा प्रेपितस्तदा ॥ १७७ ॥
स्थानाभावे च तत्रैव, दादावाड्यां च साधवः ।
सम्राडागतिकाले च, स्थानस्याभावता खलु ॥ १७८ ॥
पश्चात्तुलापटीस्थाने, अफीमचोरस्ते खलु ।
श्रीसङ्घस्थानके चैव, आगत्य साधवः स्थिताः ॥ १७९ ॥
रामचन्द्रमहाभागैः, धैर्यौदार्यगुणादिभिः ।
गुरुभक्तिविधानाय, प्रयत्नो विहितो बहु ॥ १८० ॥
ज्येष्ठालालश्च तत्काले, करोति भक्तिभावना ।
गौर्जरातिशिरोरत्नं, सर्वथा स विभाव्यताम् ॥ १८१ ॥
परीक्षार्थश्च न्यायस्य, आगताः साधवस्त्रयः ।
इति वार्तां च श्रुत्वैव, हर्षिताः श्रावकास्तथा ॥ १८२ ॥
व्यवस्था पण्डितानाञ्च, लक्ष्मीचन्द्रेण कारिता ।
न्यायग्रन्थोपहारश्च, रामचन्द्रैः कृतः खलु ॥ १८३ ॥
पण्डिततर्कतीर्थस्य, नियोगः पाठने कृतः ।
नवदासेन शुद्धेन, स्वान्तेन पाठितस्तदा ॥ १८४ ॥
परीक्षा न्यायतीर्थस्य, दत्ता दिनचतुष्टयी ।
मौखिकी पञ्चमी ज्ञेया, विज्ञत्रिकसमीपके ॥ १८५ ॥

सुन्दरं परिणामं च, आगतं पञ्चमे दिने ।
विद्वद्गोष्ठिकाले च, आमन्त्रणं प्रजायते ॥ १८६ ॥

साधवोऽपि गतास्तत्र, धर्मचर्चा कृता तदा ।
मङ्गलन्यायसाधूनां, पृष्टं प्रासङ्गिकं खलु ॥ १८७ ॥

बौद्धजैनस्य को भेदः, भिन्नता च द्वयोः कथम् ।
सर्वथा क्षणिको वादः, बौद्धदर्शनसम्मतः ॥ १८८ ॥

शून्यवादोऽपि तस्यैव, शोभते शून्यवादिनः ।
जैनदर्शनसिद्धान्ते, नैकान्तिकं च सम्मतम् ॥ १८९ ॥

एकान्तशून्यवादे च, स्वीकारे या च दोषता ।
तथैव क्षणिके वादे तत्त्वाख्याने विभाव्यताम् ॥ १९० ॥

दुःखसमुदयौ चैव, मार्गनिरोधकौ तथा ।
चतुस्तत्त्वं प्रमाणे द्वे, प्रत्यक्षमानुमानिकम् ॥ १९१ ॥

जैनदर्शनमन्तव्यं, सप्ततत्त्वं च सम्मतम् ।
प्रत्यक्षं च परोक्षं च, प्रमाणे द्वे च कीर्त्तिते ॥ १९२ ॥

जीवाजीवौ च मन्तव्यौ, आश्रवबन्धनामकौ ।
संवरनिर्जरे मोक्षः, सप्ततत्त्वं च ज्ञायताम् ॥ १९३ ॥

वीतरागश्च सर्वज्ञः, ईश्वरो जैनसम्मतः ।
सप्तनया निक्षेपाश्चत्वारो दार्शनिका मताः ॥ १९४ ॥

तादृशतत्त्वप्रश्नाश्च, अष्टादशैव सम्मताः ।
पञ्चघटिकपर्यन्तं, प्रश्नोत्तरं प्रजायते ॥ १९५ ॥

प्रश्नानामुत्तरं चैव, विशुद्धयुक्तिपूर्वकम् ।
दत्तं तत्रैव संवीक्ष्य, पदवी तयोः समर्पिता ॥ १९६ ॥

न्यायविशारदतायाश्च, उपाधेः परिदापनम् ।
पण्डितैस्तत्र सम्मील्य, हस्ताक्षरं कृतं तथा ॥ १९७ ॥

पदवीं च तादृशीं प्राप्य मुदिताः साधवः खलु ।
स्वस्थानं तैः समागत्य, श्राद्धानां ज्ञापितं तथा ॥ १९८ ॥

मुदिताः श्रावकाः सर्वे, पदवीप्रदानकार्यतः ।
परस्परं च तां वार्तां, कुर्वन्ति बहुप्रेमतः ॥ १९९ ॥

पदवीपत्रे समुल्लेखः, विज्ञैश्च यादृशः कृतः ।
तं च मुद्रापयित्वैव, सङ्घैर्वितरणं कृतम् ॥ २०० ॥

महत्सभां विधायैव, आहूतः पण्डितस्तदा ।
पत्रद्वारैव सर्वेषां, आह्वानं श्रावकैः कृतम् ॥ २०१ ॥

मुन्नालालश्च पारेखः, कर्णावटेन सार्धकम् ।
ज्येष्टालालमहाभागः, निवेदकाश्च सम्मताः ॥ २०२ ॥

कर्णावटीय प्रासादे, सर्वे सभ्याः समागताः ।
गुर्वोरध्यापकं चैवं शंसन्ति चैव पण्डितम् ॥ २०३ ॥

विशुद्धं पाठनेनैव, परीक्षायां परिश्रमः ।
कारितो येन विज्ञेन, ततो ज्ञातौ च पण्डितौ ॥ २०४ ॥

जैनाः कृतोपकारं च, विस्मरन्ति कदापि न ।
सुवर्णघटिकाऽतश्च, वेपेण सहिता खलु ॥ २०५ ॥

क्रियते चोपहारश्च, स्वीक्रियतां च विज्ञ भोः।
इत्युक्त्वा पत्रकं चैकमभिनन्दनरूपकम् ॥ २०६ ॥
तस्मै दत्तं च सङ्घेन, प्रत्युत्तरं च दीयते।
साधूनां पाठनं ज्ञस्य, कर्त्तव्यं परमेव च ॥ २०७ ॥
अधिकं च मया किञ्चिन्न कृतं लेशमात्रकम्।
गृहीत्वा चेतनं सङ्घात्पाठितं नोपकारतः ॥ २०८ ॥
अतो मया न गृह्येत, उपहारश्च किञ्चन।
आशिर्वादश्च साधूनां, प्रार्थ्यते चैव केवलम् ॥ २०९ ॥
विज्ञोत्तरेण सन्तुष्टाः, तत्रत्याः श्रावकाः समे।
अत्याग्रहेण दत्तश्च, उपहारश्च सुन्दरः ॥ २१० ॥
सतीशचन्द्रो महाभागः, विज्ञप्तिं च करोत्यसौ।
द्विवार्षिकी स्थितिश्चेषां, यदि स्यादत्र पत्तने ॥ २११ ॥
तदाऽऽङ्गलीयभाषायां, नैपुण्यं कार्यते मया।
वेदान्तादिकतीर्थस्य, परीक्षादापनं भवेत् ॥ २१२ ॥
साधूनां स्थिरतामावात्कथमत्रैव तिष्ठति।
इत्युक्त्वा ते महाभागाः, सन्तोषिताश्च भावतः ॥ २१३ ॥
रामचन्द्रेण सभ्यानां, उपकारश्च सत्कृतः।
मानितोऽतीव हर्षेण, सभ्याः सर्वे विसर्जिताः ॥ २१४ ॥
व्याख्यानेचप्रकर्त्तव्ये, सङ्घैः प्रबन्धता कृता।
प्रतिदिनं च वक्तव्यं, कथ्यते धर्मयोगतः ॥ २१५ ॥

व्याख्यानं मङ्गलादीनां, श्रुत्वा सर्वे प्रहर्षिताः ।
चातुर्मासाय विज्ञप्तिः, कृतासङ्घेन चैकदा ॥ २१६ ॥

आग्रानगरतः पत्रं, गुरुदेवस्य चागतम् ।
परीक्षां च विधायैव, आगन्तव्यं च शीघ्रतः ॥ २१७ ॥

वाचयित्वा दलं तच्च, गुरूणां प्रार्थना कृता ।
गुरुदेवेन सम्प्रोक्तं, चातुर्मासं च नो भवेत् ॥ २१८ ॥

अवश्यमेव साधूनां, प्रयोजनं च विद्यते ।
जैनसिद्धान्तवादस्य अधुना पाठनं वरम् ॥ २१९ ॥

अतस्तत्र न स्थैर्यं च, साधूनां परिजायते ।
शीघ्रं च विहृतिस्तेषां, येन केनाऽपि कार्यताम् ॥ २२० ॥

प्रत्युत्तरं च तं दृष्ट्वा स्वान्ते शोकः प्रजायते ।
किन्तूपायश्च नास्त्येव, सर्वे मौनं समाश्रिताः ॥ २२१ ॥

साधूनां विहृतिं श्रुत्वा अश्रुपातश्च चक्षुषि ।
सर्वेषां परिजायेत, विहारस्यैकनिर्णयात् ॥ २२२ ॥

चैत्रशुक्लीय पञ्चम्यां, विहृतिश्च कृता ततः ।
सम्पूर्णसङ्घभव्याश्च, आगता बहुभावतः ॥ २२३ ॥

स्वामिवासल्यता सङ्घैराद्यस्थाने कृता खलु ।
साधुभिर्देशना तत्र, दत्ता वैराग्यबोधिका ॥ २२४ ॥

व्यवस्था साधुयोग्या च, विहाराय कृता तदा ।
अनेकश्राद्धसन्दोहः, वर्धमानपुरान्तकम् ॥ २२५ ॥

केचित्सम्मेतशैले च, आगता बहुप्रेमतः ।
तीर्थयात्रा च भावेन, गत्यागत्योः कृता शुभा ॥ २२६ ॥

तत्राऽधिकारिवर्गेण, प्रतिष्ठायै च प्रार्थना ।
हीरसूरिगुरूणां च, दादावाव्यां कृता शुभा ॥ २२७ ॥

वैशाखकृष्णपक्षे च, दशम्यां दिवसे खलु ।
सुधर्मस्वामिपादानां, स्थापनं मूलमन्दिरे ॥ २२८ ॥

तथा च स्थूलिभद्राणां, वज्रस्वामिगुरोश्च वै ।
हेमचन्द्रप्रभूणां च, हरिभद्रगुरोस्तथा ॥ २२९ ॥

हीरविजयसूरीणां, पादुका स्थापिता तदा ।
एवं मङ्गलकार्यं च, आद्यं च मङ्गलैः कृतम् ॥ २३० ॥

ततो विहृतिकार्याय, उद्यमशीलतां भजेत् ।
कृत्वा विहारकं शीघ्रं, वाराणस्यां समागताः ॥ २३१ ॥

वाराणसीय भव्यैश्च, सुन्दरं स्वागतं कृतम् ।
एकमासिकपर्यन्तं, स्थित्वा च विहृतिः कृता ॥ २३२ ॥

कानपुरे गताः सर्वे, तत्रत्य श्रावकैस्तदा ।
प्रवेशोत्सवकार्यं च, कृतं चातीवभक्तितः ॥ २३३ ॥

महेन्द्रमुनिराजस्य, ज्वरस्तत्र समागतः ।
उपचारस्य बाहुल्यं कृतं सङ्घेन तत्क्षणे ॥ २३४ ॥

बिन्दुज्वरस्य सद्भावे, वेदनाऽतीव जायते ।
शान्तिसद्भावना नैव, वैद्येन कथिता तदा ॥ २३५ ॥

डॉक्तरश्च समागत्य, देहं पश्यति सर्वथा ।
व्याधिप्राबल्ययोगेन, तेन स्पष्टं निवेदितम् ॥ २३६ ॥

निहारः शतशोवारं, जायते व्याधियोगतः ।
मङ्गलविजयेनैव, सेवाकार्यं कृतं महत् ॥ २३७ ॥

अत्युपचारकर्तव्ये, न जाता रोगशान्तिता ।
ज्येष्टकृष्णदशम्यां च, तेन प्राणाश्च त्याजिताः ॥ २३८ ॥

तत्रत्य संघमुख्येन, भक्तिभावः प्रदर्शितः ।
भक्तिभावे क्षतिर्नैव, कृता च लेशमात्रतः ॥ २३९ ॥

स्वर्गवासं गते तस्मिन्, पश्चात्क्रिया च भावतः ।
अत्याडम्बरतस्तेन, शिबिका कारिता शुभा ॥ २४० ॥

बहुमूल्येन वस्त्रेण, अलङ्कृता च तत्क्षणे ।
दानपुण्यादिसामग्री, सञ्चिता सन्नियोगतः ॥ २४१ ॥

सम्पूर्णचन्दनकाष्ठैः, घृतकर्पूरवस्तुभिः ।
कृताऽग्निसंस्कृतिश्चैव, श्रावकैः शोकपूर्वकम् ॥ २४२ ॥

पश्चात्क्रियां विधायैव, श्राद्धाः सर्वे समागताः ।
श्रीशांतिपाठपूर्वं च, दत्ता वैराग्यदेशना ॥ २४३ ॥

देववन्दनकार्यश्च, साधुभ्यां च कृतं तदा ।
द्वितीय–दिवसे चैव, विहारो ज्ञापितः खलु ॥ २४४ ॥

चातुर्मासाय सङ्घेन, प्रार्थनाऽतिऽकृता शुभा ।
गुरोराज्ञाप्रभावेन, न मानिता च साधुना ॥ २४५ ॥

तत उग्रपुरे गत्वा, गुरूणां चरणाम्बुजम् ।
नमस्कृत्य च भावेन, धर्मध्वनिं भजेद् ध्रुवं ॥ २४६ ॥

काश्यां हि गुरुदेवं च, मुक्त्वा च विहृतिः कृता ।
यदा ततः परं चैव, यज्जातं तन्निशम्यताम् ॥ २४७ ॥

कम्पनीबागव्याख्यानं, गुरूणां जायते यदा ।
तच्छ्रुत्वा विप्रवर्गेण, आराटिश्च कृता बहु ॥ २४८ ॥

जैनव्याख्यानकर्त्तव्ये, सर्वे धर्मपरिच्युताः ।
भवेयुर्विप्रधर्मेषु, अश्रद्धानं च सर्वथा ॥ २४९ ॥

श्राद्धगङ्गावगाहानां, यज्ञस्यैव निषेधनम् ।
सर्वधर्मविरुद्धं च, युक्तिपूर्वकखण्डनम् ॥ २५० ॥

साधुना क्रियते तेषां, खण्डनं न विधीयते ।
अतः कोलाहलं कृत्वा, व्याख्यानं चेन्निषिध्यते ॥ २५१ ॥

तदा ब्राह्मणधर्मस्य, उन्नतिः परिजायते ।
एवं प्रलापमात्रं च, कृत्वा प्रतारिता जनाः ॥ २५२ ॥

यदा तेषां च धूर्त्तत्वं, प्रकटं परिजायते ।
तदा पात्रप्रकाराश्च, सर्वत्र प्रसृतः खलु ॥ २५३ ॥

कति ब्राह्मणवर्गेण, यज्ञहिंसा च त्याजिता ।
देवीनां बलिदानं च, त्यक्तं विशुद्धमेमतः ॥ २५४ ॥

शङ्कटामातृपार्श्वे च पशुवधो निषेधितः ।
बहूनां विप्रवर्गाणां, मांसभुक्तिर्निवारिता ॥ २५५ ॥

एकस्मिन्दिवसे राजपट्टमार्गेषु गच्छताम् ।
पञ्चाशच्च गवां सङ्ख्या, दृष्ट्वा वधकपार्श्वके ॥ २५६ ॥

गुरुणा वधकः पृष्टः, नयति च पशून् कथम् ?
वधायेति च सम्प्रोक्तं, तेन स्पष्टतया खलु ॥ २५७ ॥

तव तत्रैव को लाभः, तेनोक्तं पञ्चविंशतिः ।
रूप्यकानां च विज्ञेयः द्विशतरूप्यमूल्यकम् ॥ २५८ ॥

गुरुणा तेन साकं च, आपणे श्रेष्ठिवर्गकम् ।
संज्ञाप्य रूप्यकं दत्त्वा, मोचनं च गवां कृतम् ॥ २५९ ॥

तत्काले च सभां भृत्वा, टाउनहालनामके ।
प्रसिद्धस्थानके सर्वे, आहुताः श्रेष्ठिनः समे ॥ २६० ॥

काशिराजः समायातः, अन्ये च सज्जनास्तदा ।
आगता गुरुवर्याणां, देशनालाभहेतवे ॥ २६१ ॥

अहिंसा परमो धर्मः, यतो धर्मस्ततो जयः ।
एवमुक्त्वा गुरूणां च, व्याख्यानं परिजायते ॥ २६२ ॥

मातरं गोश्च मन्तॄणां, धर्मो रसातले गतः ।
एकवत्सरपर्यन्तं, यस्या दुग्धं च पीयते ॥ २६३ ॥

तस्याश्चोपकृतिश्चैव निह्नुते न कदाचन ।
यावज्जीवं च पर्यन्तं, यासां दुग्धं च पीयते ॥ २६४ ॥

ताद्दग्गोजननीनां च, निह्नुय च कथं त्वया ?
येभ्यो गोरसदुग्धानां, सदा प्राप्तिः प्रजायते ॥ २६५ ॥
मलमूत्रादियोगेन, शस्य प्राप्तिश्च सर्वदा ।
उपकारि शिरोरत्ने, विस्मृतिर्जायते कथम् ? ॥ २६६ ॥
स्तोकस्वार्थेन तासां च, विक्रयः क्रियते कथम् ।
तथैव महिषीणां च, अजानां हननं कथम् ? ॥ २६७ ॥
आर्येण क्रियते कस्मादार्यत्वं क गतं तदा ।
अहो दुर्बुद्धिजीवानां, धर्मात्पापं चिकीर्षताम् ॥ २६८ ॥
अन्या गतिर्न जायेत, विनापि नारकीं कदा ।
कुत्र च लिखितं जीवघाते च स्वर्गता भवेत् ॥ २६९ ॥
विना प्रमाणसद्भावं, कथं हिंसा विधीयते ।
येनोपदिष्टकं ताद्दक् तस्य गुरुश्च ताद्दशः ॥ २७० ॥
काकशृगालगृध्राश्च, तेनैव गुरवः कृताः ।
नास्तिकेभ्योऽपि नास्तिका हिंसकाः सर्वथा मताः ॥२७१॥
अनार्यास्ते च विज्ञेयाः, पापा यान्ति च दुर्गतिम् ।
पवित्रकाशिपूर्यां च, सर्वधर्मानुयायिनाम् ॥ २७२ ॥
कथं हिंसोपदेशत्वं, युज्यते चेति चिन्त्यताम् ।
सर्वजीवस्य रक्षार्थं, पशुशाला विधीयताम् ॥ २७३ ॥
विना च पशुशालायाः, जीवरक्षणता कथम् ?
जीवरक्षां विना नैव, अहिंसाधर्मपोषणम् ॥ २७४ ॥

यदि धर्मे च सच्छ्रद्धा, भवतां हृदये सदा ।
तदा जीवस्य रक्षार्थे, प्रयत्नः क्रियतां खलु ॥ २७५ ॥

धर्मात्प्राप्तं च सर्वस्वमार्यत्व शुद्धजातिता ।
पञ्चेन्द्रियमनुष्यत्वं, राजसमृद्धिकं तथा ॥ २७६ ॥

कारणस्य विनाशे च, कथं कार्यं प्रजायते ? ।
मूलं च रक्षणीयं तत्, अतो हि सर्वथा मतम् ॥ २७७ ॥

महाराज ! त्वया पूर्वं, कथ्यतां किं विधीयते ? ।
पश्चादन्यजनानां च, कथने सरलं भवेत् ॥ २७८ ॥

पशुभ्यो भूमिदानं च, सर्वोत्तमं वितन्यते ।
यादृशं सर्वसभ्यानां, रोचते तादृशं मया ॥ २७९ ॥

कोशैकं समायामः, पृथुलस्तादृशो मतः ।
द्विकूपं चाम्रवृक्षाणां, द्विसहस्रं च विद्यते ॥ २८० ॥

विशालं तादृशं स्थानं, क्रीत्वा राज्ञा समर्पितम् ।
पञ्चदशसहस्रं च, तस्य मूल्यं च वर्तते ॥ २८१ ॥

राज्ञा च गुरवे दत्तं, गुरूणां नैव कल्पते ।
गुरुणा तत्र सम्प्रोक्तं, कार्यवाहकताजुषाम् ॥ २८२ ॥

दीयतां भो महाराज ! ततस्तस्मै प्रदापनम् ।
कृतं च गुरुणा तत्र, समर्थितं च सज्जनैः ॥ २८३ ॥

राज्ञा च मोतिचन्द्रेण, द्विसहस्रं च रूप्यकम् ।
भूमिप्रदानपूर्वं च, कृतं च भाग्यशालिनः ॥ २८४ ॥

अन्यैरपि यथाशक्ति, रूप्यकानां प्रदानकम् ।
अन्यैरन्यं च दत्तं वै, पशुशाला हिताय च ॥ २८५ ॥

गायवाटस्य सामीप्ये, क्रीतं चैकं हि स्थानकम् ।
पञ्चसहस्ररूप्येण, गावश्च तत्र रक्षिताः ॥ २८६ ॥

अश्वगर्दभशूनां च प्राणिनां रक्षणं महत् ।
जायते गुरुदेवानामुपदेशेन सर्वथा ॥ २८७ ॥

ग्रन्थमाला च साहित्यप्रचारकारिका मता ।
पाठशाला च विद्यायाः, उन्नतिकारिका खलु ॥ २८८ ॥

पशुशालापशूनां च, प्राणरक्षणकारिका ।
एतत्रयस्य कार्यां च, प्रारम्भः परिजायते ॥ २८९ ॥

गुरुदेवप्रसादेन, विद्यासाहित्यपोषणम् ।
धर्मोद्धारश्च सञ्जातः, जैनानां भारते पुनः ॥ २९० ॥

यूरोपवासि विद्वानामाकर्षितं च मानसम् ।
जैनसाहित्यसेवायां, भवेयुस्ते च तत्पराः ॥ २९१ ॥

यत्र कुत्राऽपि साहित्ये, शङ्का तेषां च जायते ।
तत्समाधानता तेन, गुरुणा च स्फुटा कृता ॥ २९२ ॥

छिन्नसंशयसद्भावे, हर्षातिरेकता भवेत् !
दलेषु हर्षनादेशं लिखन्ति ते महाशयाः ॥ २९३ ॥

भारते जैनसाहित्यं, यदि पृथग्विधीयते ।
हिन्दुधर्मस्य साहित्यं, तदा स्वल्पं च तिष्ठति ॥ २९४ ॥

त्यागवैराग्यधर्मश्च, यादृशो जैनदर्शने ।
तादृशो नत्र चान्यत्र, साहित्ये विद्यते खलु ॥ २९५ ॥

कर्माष्टकस्य साहित्यं, सूक्ष्मबुद्ध्या विचारितम् ।
यथा च जैनयोगीन्द्रैः, नान्यत्र तद्विचारणा ॥ २९६ ॥

तत्र तु नाममात्रेण, कर्मकर्मेति शब्दतः ।
अर्थतश्च विचारस्य, अवकाशो न विद्यते ॥ २९७ ॥

सच्चिदानन्दरूपस्य, जीवस्य च विचारणा ।
मूसलसदृशी बुध्या, अन्यत्र परिदृश्यते ॥ २९८ ॥

जीवस्य भेदभेदत्व, बद्धाबद्धविचारणा ।
नित्यानित्यत्व भिन्नाभिन्नत्वस्यैव च नोदना ॥ २९९ ॥

व्यापकाव्यापकत्वस्य, विचारणा च सर्वथा ।
यादृग्जैनेषु युज्येत, नान्यत्र तादृशी भवेत् ॥ ३०० ॥

यानि च जैनतत्त्वानि, सूक्ष्मबुद्ध्या विचारतः ।
विचारितानि तान्येव, न सन्ति चान्यदर्शने ॥ ३०१ ॥

अहिंसा धर्मसन्तव्ये, हिंसा धर्मस्तु तन्मते ।
जल्पनं यादृशं चैव, कर्त्तव्यं नैव तादृशम् ॥ ३०२ ॥

अल्पज्ञधर्महीनानां, पार्श्वे धर्मः कथं भवेत् ? ।
मनुस्मृत्यादि शास्त्राणां, परस्परं विरुद्धता ॥ ३०३ ॥

न मांसभक्षणे दोषः, न च मद्ये न च मैथुने ।
प्रवृत्तिरेषा भूतानां, निवृत्तिस्तु महाफला ॥ ३०४ ॥

अनुमन्ता विशपिता, निहन्ता क्रयविक्रयी ।
संस्कर्त्ता चोपकर्त्ता च, स्वादकश्चेति घातकाः ॥ ३०५ ॥
पदे पदे विरोधश्च, श्राद्धप्रकरणे यथा ।
दृश्यतां मध्यभावेन, स्पष्टं च लिखितं ततः ॥ ३०६ ॥
एवं विचारकर्त्तव्ये, श्रुतिस्मृतेश्च युक्तितः ।
तत्त्वज्ञानं च नो किञ्चिन्मिथ्यात्ववासना बहु ॥ ३०७ ॥
एवं सर्वं विलोक्यैव, तत्र श्रद्धा च नो भवेत् ।
विशुद्धजैनसिद्धान्तं, मुक्त्वा नान्यत्र रज्यते ॥ ३०८ ॥
असत्यत्याजनमुक्त्वा, विप्राय तद्विधानकम् ।
कीदृशः पक्षपातश्च, दृश्यतां च भवादृशैः ॥ ३०९ ॥
आत्मनो नित्यता कक्षीकारे च दोपता न हि ।
अन्यथा दोपवाहुल्यं, सर्वदैव प्रसज्यते ॥ ३१० ॥
इत्यपि प्रश्नता जैने, अवकाशं च नो भजेत् ।
सर्वथा नित्यपक्षे च, दोपाश्च बहवो मताः ॥ ३११ ॥
जन्ममृतिजराणां च, कथं नित्ये च सङ्घटेत् ।
बाल्ययुवदशायाश्च, व्यवहारो न युज्यते ॥ ३१२ ॥
बद्धमुक्तस्वरूपं च, योगानुष्ठानसत्क्रिया ।
तपश्चर्या च सद्ध्यानं, सर्वं न युज्यते किल ॥ ३१३ ॥
शरीरेणापि सम्बन्धः, एकान्ते घटते न हि ।
अयं बद्धश्च नो मुक्तः, इत्येवं कथ्यते कथम् ? ॥ ३१४ ॥

केनापि रूपतस्तस्य, उत्पादव्ययता न चेत् ।
तदा कथं हि तादृशः, वक्तुं च शक्यते त्वया ?॥ ३१५ ॥
सर्वथा नित्यता जैने, अनित्यताऽपि सर्वथा ।
नैव केष्वपि तत्त्वेषु, मन्यते बुद्धिशालिना ॥ ३१६ ॥
नित्यानित्यत्व युक्तत्वं, सर्ववस्तुषु सम्भवेत् ।
तत्त्वाख्याने परिस्पष्टं, यदुक्तं कथितं च तत् ॥ ३१७ ॥
अतो जैनं परित्यज्य, नान्यत्र तन्निरूपणम् ।
युक्तियुक्तं च विज्ञेयं, प्रस्तुतमनुकथ्यते ॥ ३१८ ॥
विज्ञा आङ्गलदेशीया, अनेके चागतास्तदा ।
धर्मचर्चां विधायैव, प्रश्नोत्तरे च हर्षिताः ॥ ३१९ ॥
तेषां च जैनसाहित्यं, दर्शनार्थं समर्पितम् ।
दृष्ट्वा विज्ञैः समालोकः, कृतोऽतीव सुबुद्धितः ॥ ३२० ॥
एवमनेकविज्ञानां, महाशयविदेशिनाम् ।
समागमोऽपि सञ्जातः, शाला सर्वैर्विलोकिता ॥ ३२१ ॥
राममिश्रमहाभागैः, व्याख्यानं जैनदर्शने ।
कृतं शालां समागत्य, गुरुदेवनियोगतः ॥ ३२२ ॥
मायागोलाश्च लाक्षीयाः, स्याद्वादाभेद्यदुर्गके ।
प्रवेशं न लभन्ते ते, इत्युक्तं शास्त्रिभिस्तदा ॥ ३२३ ॥
जैनदर्शनगाम्भीर्यं, तद्व्याख्यानेन मन्यते ।
दशव्याख्यानकर्तव्ये, प्रतिज्ञा तैः कृता दृढा ॥ ३२४ ॥

एकमेव च सञ्जातं, स्वल्पायुष्कस्य कारणात्
तेषां पुण्यवियोगेन, लाभो न मीलितः खलु ॥ ३२५ ॥

दशव्याख्यानता तेषां, यद्यभूद्दैवयोगतः ।
तदा च सर्वसम्भ्रान्तेः, विनाशः सर्वथाऽभवत् ॥ ३२६ ॥

इतश्च साधुछात्राणां, पाण्डित्यं वीक्ष्य सुन्दरम् ।
सिद्धाचलस्य यात्रार्थं, विहारोत्कटभावना ॥ ३२७ ॥

दर्शितागुरुदेवेन, वार्ता च प्रसृता तथा ।
वाराणसीय वास्तव्याः, सर्वे तत्र समागताः ॥ ३२८ ॥

जैनजैनेतराः सर्वे, कुर्वन्ति प्रार्थनां शुभाम् ।
भवतां स्थिरवासो हि अस्माकं लाभकारणम् ॥ ३२९ ॥

भवत्पुण्येन काश्यां च, रोगशान्तिः प्रजायते ।
अनेकमूकजीवानामाशिर्वादो महान् भवेद् ॥ ३३० ॥

सुन्दरम् जैनसाहित्यं, नास्माकं श्रुतिगोचरम् ।
भवत्पुण्यप्रतापेन, सर्वेषां दृष्टिगोचरम् ॥ ३३१ ॥

कीदृशा जैननिर्ग्रन्थाः, जैनधर्मश्च कीदृशः ।
कीदृक् तेषां समाचारः, जानन्ति न हि मादृशाः ॥ ३३२ ॥

भवदुदारतायोगात्सर्वं ज्ञातं च मादृशैः ।
सर्वोत्तमो भवेद्धर्मः, निर्णीतमिति सर्वथा ॥ ३३३ ॥

---

१. शुद्धाचारः

काशिवासिजनानां च, अपूर्वधर्मलाभता ।
प्रचारोऽधिकभावेन, अग्रेऽपि जायते ततः ॥ ३३४ ॥
काशिराजस्तु कस्यापि, साधुपार्श्वे न गच्छति ।
वशीकरणयोगेन, भवद्भिश्च वशीकृतः ॥ ३३५ ॥
गुरूणां भावनां ज्ञात्वा, औदासीनाः समे तदा ।
सञ्जातास्तीव्रदुःखेन, दुःखिताः सज्जना बहु ॥ ३३६ ॥
काशिनरेशकर्णेषु, विहारभावना गता ।
विन्ध्येश्वरीप्रसादं च, गुरुपार्श्वे स प्रेषयेत् ॥ ३३७ ॥
किं कष्टं भवतामद्य, विहारः क्रियते कथम् ? ।
केषाञ्चिद्यदि वस्तूनामुच्यतां चेत्प्रयोजनम् ॥ ३३८ ॥
प्रोक्तश्च गुरुणा तत्र, न मे किञ्चित्प्रयोजनम् ।
नापि कष्टनिमित्तेन, विहारः परितन्यते ॥ ३३९ ॥
महानुभावस्य राज्येषु, साधूनां सुखशान्तिता ।
कष्टस्य चावकाशत्वं, स्वप्नेऽपि नैव कथ्यते ॥ ३४० ॥
साधूनामयमाचारः, भ्रमणं भृङ्गवत्सदा ।
विद्यायै साधुछात्राणामस्माकमागतिः खलु ॥ ३४१ ॥
जैनदर्शनमन्तव्ये, वाराणसी पवित्रभाक् ।
कल्याणषोडशत्वं च, जिनानां परिजायते ॥ ३४२ ॥
सुपार्श्वस्यैव चत्वारि, चन्द्रप्रभप्रभोश्च वै ।
एकादशजिनेन्द्रस्य, पार्श्वप्रभोस्तथैव च ॥ ३४३ ॥

यत्रैव चैककल्याणं पवित्रं तच्च स्थानकम् ।
यत्र षोडशकल्याणानि तत्र ब्रूमहे किमु ॥ ३४४ ॥

पवित्रकाशिदेशे च, वाराणसी पवित्रभाक् ।
प्राधान्येनैव सम्प्रोक्तं, जैनदर्शनवादिना ॥ ३४५ ॥

स्थितिः पवित्रदेशेषु, उचिता सर्वथा मम ।
विना प्रयोजनं नैव, एकत्र स्थीयते मया ॥ ३४६ ॥

बद्धजलेषु दुर्गन्धिः, समुच्छलति नित्यशः ।
वहमानेषु तेष्वेव, न काचिदपि जायते ॥ ३४७ ॥

विना प्रयोजने चैव, एकत्र स्थिरवासिनि ।
दोषापत्तिर्भवत्येव, शङ्काया न प्रयोजनम् ॥ ३४८ ॥

तीर्थाधिराजराजस्य, सिद्धाचलस्य सर्वथा ।
यात्राकरणभावेन, गमनं युज्यते मम ॥ ३४९ ॥

अतो महानुभावेन, विशुद्धप्रेमयोगतः ।
सम्मतिर्यदि दीयेत, स्वान्ते तोषस्तदा भवेत् ॥ ३५० ॥

गुरूणामाग्रहं ज्ञात्वा, गत्वा प्रोक्तं नराधिपे ।
तेनाऽपि गुरुसद्भाव–रक्षार्थं दर्शिता मतिः ॥ ३५१ ॥

अतीव शोकपूर्वेण, प्रदत्ता नैव तोषतः ।
गुरुकृतोपकारस्य, स्मृत्यर्थं योजना कृता ॥ ३५२ ॥

अभिनन्दनपत्रस्य, दानाय तत्पराः समे ।
गुरुविहारकाले च, एका सभा नियोजिता ॥ ३५३ ॥

राजमौक्तिकचन्द्रस्य, निवासस्थानकाग्रतः ।
गन्तव्ये गुरुदेवानां, काशिवास्तव्यमानुषैः ॥ ३५४ ॥
तस्यैव प्रार्थना योगात्तत्स्थाने गुरवो गताः ।
सभामण्डपमध्ये च, मुख्यासने निवेशिताः ॥ ३५५ ॥
उपविष्टे च साधूनामुपविष्टाश्च ते सदा ।
अन्तिमदेशनां दातुमारभंते च सूरयः ॥ ३५६ ॥
तदा सर्वजनेनैव, मौनमार्गः समाश्रितः ।
देशनामृतधारा च, पुष्करावर्त्त सादृशी ॥ ३५७ ॥
दत्तचित्तेन सर्वे ते, शृण्वन्ति सावधानतः ।
सर्वे श्रोतृकवर्गाश्च, उपस्थिताश्च तत्क्षणे ॥ ३५८ ॥
चत्तारि परमंगाणि, दुल्लहाणीह जन्तुणो ।
मानुसत्तं सुइ सद्धा, संयमंमि य वीरियं ॥ ३५९ ॥
जन्मजरामरणजलनानाविहवाहि जलयरा इन्ने ।
भवसायरे अपारे दुल्लहं खलु माणसं जम्म ॥ ३६० ॥
सोपानभूतं स्वर्गस्य, मानुष्यं प्राप्य दुर्लभम् ।
तथाऽऽत्मानं समादध्याद् भ्रश्यते न पुनर्यथा ॥ ३६१ ॥
तं देहवासं असुइं असासयम्,
सया च ये निच्च हियट्ठि अप्पा ।
छिदन्ति जाइ मरणस्स बंधणं,
उवेइ भिक्खु अपुणागमं गइं ॥ ३६२ ॥

ज्ञानवान् शीलहीनश्च, त्यागवान्धनसंगृही ।
गुणवान्भाग्य हीनश्च, राजन् ! न श्रद्दधाम्यहम् ॥ ३६३ ॥

साधुसेवा सदा भक्त्या, मैत्री सर्वेषु साधयेत् ।
आत्मीयग्रहमोक्षश्च, धर्महेतुप्रसाधनम् ॥ ३६४ ॥

उपदेशः शुभो नित्यं, दर्शनं धर्मचारिणाम् ।
स्थाने विनय इत्येतत्, साधुसेवा फलं महत् ॥ ३६५ ॥

त्वद् ग्रामे सुखपूर्वेण, स्थितिश्च सप्तवार्षिकी ।
अस्माकं खलु सञ्जाता, सर्वदा च सुखाकरी ॥ ३६६ ॥

यत्कार्यं च समुद्दिश्य, वाराणस्यां समागतः ।
तत्कार्यस्यैव संसिद्धिः, जाता सम्पूर्णरूपतः ॥ ३६७ ॥

अतोऽद्य विहृतिश्चैव, अस्माकं परिजायते ।
वाराणसी प्रजायाश्च, रागो विस्मियते कथम् ॥ ३६८ ॥

तुभ्यं च धर्मलाभोऽस्तु, आशीश्च मम तादृशी ।
अतो विहारकार्यं च, जायतेऽग्रे दिने दिने ॥ ३६९ ॥

इति श्रुत्वा च सर्वेषां, स्वान्ते दुःखं प्रजायते ।
अश्रुपूर्णेन नेत्रेण, गङ्गा च कथितं तदा ॥ ३७० ॥

अभिनन्दनपत्रं हि, अस्मदीयं च गृह्यताम् ।
नैकोपकारकर्तॄणां, यद्यपि नैव शोभनम् ॥ ३७१ ॥

तथापि सर्वतोपार्थमिदं च परिज्ञायताम् ।
अन्यथा तोषता नैव, जायते मादृशां खलु ॥ ३७२ ॥

अनिच्छा सर्वथा तत्र, प्रजाजनाग्रहादपि ।
गृहीतं गुरुदेवेन, विहृतिश्च ततः कृता ॥ ३७३ ॥
अयोध्यातीर्थयात्रायै, गन्तुं प्रयाणकं कृतम् ।
प्रतिग्रामं च मार्गेषु, सार्वजनीन देशना ॥ ३७४ ॥
जोनपुरप्रवेशश्च, जनकल्याणहेतवे ।
अधिकारिमहाभागैरागत्य प्रार्थना कृता ॥ ३७५ ॥
राजा मौक्तिकचन्द्रश्च, आगच्छति च तत्क्षणे ।
काशिनरेशपत्रं च, तत्सन्निधौ समर्पयेत् ॥ ३७६ ॥
अस्मद्ग्रामशिरोरत्नमागता जैनसाधवः ।
भक्तिभावश्च कर्त्तव्यः, व्याख्यानश्रवणादितः ॥ ३७७ ॥
तदर्थं चागताः सर्वे, प्रार्थना च कृता वहु ।
दिनाष्टकं समालम्ब्य, स्थिरता क्रियतां प्रभो ! ॥ ३७८ ॥
सर्वप्रजाजनानां च, अतीवाग्रहयोगतः ।
स्वीकृता गुरुणा चैव, प्रारब्धा देशना तथा ॥ ३७९ ॥
सर्वदर्शनमध्ये च, कीदृशं जैनदर्शनम् ।
कानि मन्तव्यतत्त्वानि, ईश्वरः कीदृशो मतः ॥ ३८० ॥
प्राचीनं कति विज्ञेयं, किंवाऽर्वाचीनकं मतम् ।
इत्यादि सर्वशङ्कानां, प्रश्नव्याकरणं महत् ॥ ३८१ ॥
सर्वोत्तमं च सार्वीय, दर्शनं जनदर्शनम् ।
असर्वज्ञीय मूलञ्च, अपरं दर्शनं मतम् ॥ ३८२ ॥

अन्यमते च सर्वज्ञ, सिद्धिश्च जायते न हि ।
प्रमाणविरहेणैव; विरोधश्च पदे पदे ॥ ३८३ ॥

संसारमोक्षहेतूनां, तत्त्वानां च निरूपणम् ।
तत्साधनस्वरूपाणां, पदार्थानां प्रकाशनम् ॥ ३८४ ॥

तत्त्वप्रमाणसिद्धान्तनयनिक्षेपकादीनाम् ।
ईश्वरस्य स्वरूपं च, तत्त्वाख्याने प्रदर्शितम् ॥ ३८५ ॥

आक्षेपस्य परीहारः, युक्तियुक्त्या प्रदर्शितः ।
अनादिकालिकं ज्ञेयं, विशुद्धं जैनदर्शनम् ॥ ३८६ ॥

वेदश्रुतिप्रमाणेन, प्राचीनं साधितं ततः ।
युक्त्यागमेन मानेन, समर्थितं च सर्वथा ॥ ३८७ ॥

प्रमाणेन च तेनैव, तत्त्वाख्याने प्रसाधितम् ।
अतः सर्वं च तत्रैव, विज्ञेयं बुद्धिशालिना ॥ ३८८ ॥

सर्वसज्जनवर्गाश्च, श्रुत्वा च हर्षिता बहु ।
प्रशंसा जैनधर्मस्य, जैनगुरुमहात्मनाम् ॥ ३८९ ॥

वीतरागस्य देवस्य, परिचयोऽपि जायते ।
भूरि भूरि प्रशंसा च, कृता तत्रत्य सज्जनैः ॥ ३९० ॥

ततोऽयोध्या महापूर्यां, प्रवेशो गुरुणा कृतः ।
पवित्रशुद्धभूमीनां, स्पर्शनाऽतीवमोदतः ॥ ३९१ ॥

धन्याश्चैयं महापूरी, सर्वोत्तमा च सा मता ।
पवित्रतीर्थरूपा च, यत्र शक्रावतारता ॥ ३९२ ॥

तीर्थेश्वरादिदेवानां, पादन्यासैः पवित्रता ।
पवित्रं दर्शनं तस्याः, कृतं च भावपूर्वकैः ॥ ३९३ ॥

कनकभुवनाधीशाः, श्रुत्वाऽऽगताश्च तत्र च ।
गुरोश्च कीर्तिकल्लोलाः, सर्वत्र प्रसृताः खलु ॥ ३९४ ॥

आगत्य गुरुपार्श्वे च, देशना प्रार्थना कृता ।
धर्मचर्चा कृता शुद्धा, आत्मानन्दप्रदायिनी ॥ ३९५ ॥

गत्वा स्थाने च तस्यैव, भारतसाधुनामकम् ।
व्याख्यानं च कृतं तत्र, श्रयतां सावधानतः ॥३९६॥

भारते साधु नाम्नैव, भयः सर्वत्र जायते ।
गृहिणां च गृहे साधुः, प्रवेशं लभते न हि ॥ ३९७ ॥

यदि साधुर्गृहे यायात्, तदा किञ्चित्स मार्गयेत् ।
अतो नैव प्रवेष्टव्यः, गृहस्थानां मतिश्च सा ॥ ३९८ ॥

यमादिरहिताः सर्वे, साधवो भारते स्मृताः ।
आरम्भादिकयोगेन, युक्ताश्च रोपता जुषः ॥ ३९९ ॥

मिथ्यात्ववासनायुक्ताः, श्रद्धाधनबहिर्भृताः ।
तपः संयमध्यानस्य, वार्ता तु दुर्लभा सदा ॥ ४०० ॥

साध्वाचारपरिभ्रष्टाः, दृश्यन्ते च पदे पदे ।
जैनेतराश्च विज्ञेयाः, जैनेषु तादृशा न हि ॥ ४०१ ॥

पादतो भ्रमणं चैव, भिक्षा माधुकरी मता ।
एकान्नं नैव भोक्तव्यं, साधुभिः सर्वथा खलु ॥ ४०२ ॥

काञ्चनस्पर्शता नैव, कर्त्तव्या च कदाचन ।
यमे पालयितव्ये च, समागच्छति साधुता ॥ ४०३ ॥

भारते भारभूताश्च, साधवस्तु परिस्मृताः ।
इति कलंकनाशाय, उद्यमः क्रियतां खलु ॥ ४०४ ॥

साधुविषयव्याख्यानं, श्रुत्वा तत्रत्य साधुराट् ।
महात्माधर्मसूरीणां, व्याख्यानं मननीयकम् ॥ ४०५ ॥

एकाक्षरं च नोऽसत्यं, किन्तु सत्यसमन्वितम् ।
सहस्रं धन्यवादाश्च, दीयन्ते मादृशैर्जनैः ॥ ४०६ ॥

प्रमादासनसुप्तानां, जागृतिश्च त्वया कृता ।
गुरुस्त्वमेव बन्धुश्च, अस्माकं सर्वथा खलु ॥ ४०७ ॥

भवदुपकृतिश्चैव, प्राणैः कण्ठगतैरपि ।
विस्मार्यते न केनाऽपि, अस्माभिर्हेतुना कदा ॥ ४०८ ॥

साधूनां च समुद्दिश्य, व्याख्यानं तादृशं कृतम् ।
न रागो न च द्वेषोऽपि, अस्माकं नैव किञ्चन ॥ ४०९ ॥

साधूनां स्वान्तशुद्ध्यर्थं, यदि किञ्चिच कथ्यते ।
तदा भारतभिक्षूणां सर्वेषां निन्दनीयता ॥ ४१० ॥

अतः सर्वत्र साधूनां, योगमार्गे प्रवृत्तिश्चेत् ।
तदा पापप्रवृत्तिस्तु, नश्येव नात्र संशयः ॥ ४११ ॥

आदिदेवप्रभूणां च, अजितादि प्रभोस्तथा ।
जन्मादिस्थानमत्रैव, निर्विवादं निगद्यते ॥ ४१२ ॥

अतः सर्वैश्च सम्मील्य, पूजाभक्तिर्विधायताम् ।
श्रावकैश्च तदा पूजा, कारिता शुभभावतः ॥ ४१३ ॥

रामाऽनुजादि साधूनां, वह्वी संख्या समागता ।
अन्ये तदनुभक्तानां, संख्या च प्रचुरा मता ॥ ४१४ ॥

गीतगानादि सामग्र्या, अध्यात्मभजनादिना ।
सर्वैः सम्मील्य भक्तिश्च, अत्यन्त भावतः कृता ॥ ४१५ ॥

ततो विहृत्य चान्यत्र, लखनौ गुरवो गताः ।
तत्रत्य श्राद्धवर्गेण, भक्तिभावः प्रदर्शितः ॥ ४१६ ॥

रोशनचोकि नाम्ना च, प्रसिद्धवाद्यता युतैः ।
जैनजैनेतरैः सर्वैः, प्रवेशोत्सवता कृता ॥ ४१७ ॥

सर्वमन्दिरभक्त्यर्थं, पूजाविविधभक्तितः ।
सर्वत्र कारिता संघैः, स्वामिवात्सल्यकं तथा ॥ ४१८ ॥

अजितादिक नग्नाटाः, सर्वे तत्र समागताः ।
देशनादानकार्याय, कुर्वन्ति प्रार्थनां तदा ॥ ४१९ ॥

सार्वजनीनबोधाय, तत्र प्रसिद्धभूमिषु ।
व्याख्यानां गुरुदेवानां, भवति वहुलं तदा ॥ ४२० ॥

नगरजनविज्ञप्त्या, मासकल्पं कृतं तथा ।
प्रत्यहं जनवोधाय, व्याख्यानं सर्वदा भवेत् ॥ ४२१ ॥

प्रातः कालोपदेशश्च, पश्चाच साधुपाठनम् ।
मध्याह्ने संशयोच्छेदः, सर्वेषां परिजायते ॥ ४२२ ॥

सम्पूर्णे मासकल्पे च, गुरुणा विहृतिः कृता ।
व्याख्यानं प्रतिग्रामं च, कृत्वा कर्णपुरे गताः ॥ ४२३ ॥

कर्णपुरीयभक्तानां, भक्तिभावस्य का कथा ।
जैनशासनशोभायै, नगरं परिशोभितम् ॥ ४२४ ॥

बाबूमहाशयाः सर्वे, कच्छदेशीय भावुकाः ।
गौर्जराः पत्तने भूताः, सौराष्ट्रीयाः परे मताः ॥ ४२५ ॥

सवश्च सह सम्मील्य, नैकवाद्यादि संयुतैः ।
अहिंसा परमो धर्मादि चित्रपटहस्तगैः ॥ ४२६ ॥

सहस्रजनसङ्ख्याभिः, गुरुदेवसमीपके ।
आगत्य वन्दनाकार्यं, कृतं चातीव भावतः ॥ ४२७ ॥

ततश्च श्राद्धवर्गेण, द्विसम्प्रदायकेन च ।
पुरप्रवेशसद्भावं, प्रदर्श्य मन्दिरे गताः ॥ ४२८ ॥

सुन्दरं मन्दिरं तत्र, भारते नैव दृश्यते ।
निर्मितं शकलानां च, खण्डैर्भावयुतैस्तथा ॥ ४२९ ॥

स्वर्गात्समागतं किं वा, किंवा कैलासभूमितः ।
विमानं किं च साक्षाद् वा, गत्वा सर्वेण तर्कितम् ॥ ४३० ॥

दर्शनं शुभयोगेन, कृतं चातीवभावतः ।
धन्यं तदीयमात्मानं, मन्यन्ते भाग्यशालिनः ॥ ४३१ ॥

पण्डितवर्गमागत्य, प्राश्निकं मार्मिकं कृतम् ।
आत्मसाधनयोगानां, चर्चा विशुद्धभावतः ॥ ४३२ ॥

नित्यत्वगुणयुक्तश्च, जीवात्मा व्यापको मतः ।
ज्ञानादिगुणवस्तूनामात्मतो भिन्नता सदा ॥ ४३३ ॥

व्यापकताऽऽत्मनो नैव, सिध्यति च कदाचन ।
प्रमाणाभावता तत्र, हेतुता परिकथ्यते ॥ ४३४ ॥

आत्माऽऽनन्त्यं च तैरेव, मानितं युक्ति युक्ततः ।
एकस्य व्यापकत्वे च, क्व तिष्ठन्ति परे खलु ॥ ४३५ ॥

अन्येषां जडवस्तुनामवकाशो न विद्यते ।
स्थानस्याभावता तत्र, हेतुतां च प्रवर्तते ॥ ४३६ ॥

नित्यत्वे व्यापकत्वे च, दोषाश्च बहवो मताः ।
तद्व्याख्याने च तत्सर्वं, युक्तियुक्त्या निरूपितम् ॥ ४३७ ॥

ज्ञानस्य भिन्नपक्षोऽपि, युज्यते न कदाचन ।
सर्वथाऽभिन्नपक्षोऽपि, दुष्टत्वान्मन्यते न हि ॥ ४३८ ॥

कथंचिद्भिन्नताऽभिन्नत्व पक्षः प्रतिपादितः ।
शास्त्रार्थश्च प्रमाणेन, कृतस्ततो विचार्यताम् ॥ ४३९ ॥

उत्तरं सर्वशङ्कानां, श्रुत्वा तेऽपि प्रहर्षिताः ।
सार्वजनीन सद्व्याख्या, गुरुपार्श्वे च कारितः ॥ ४४० ॥

जैनदर्शननामाख्यं, व्याख्यानं च कृतं मुदा ।
अपूर्वां देशनां श्रुत्वा, सन्तोषः प्रकटीकृतः ॥ ४४१ ॥

धर्मविषयशङ्कायाः, समाधानं कृतं तदा ।
विच्छिन्नसंशयाः सर्वे, सञ्जाता गुरुयोगतः ॥ ४४२ ॥
अभिनन्दनपत्राणि, अर्पितानि जनैस्तथा ।
लोकप्रेमोपहारं च, मत्वा तैः स्वीकृतानि च ॥ ४४३ ॥
अत्याग्रहं परिजत्य, श्रावकानां ततः परम् ।
मैनपुर्यां समायाताः, तत्रत्य श्रावकैः सह ॥ ४४४ ॥
झमकलालनग्नाद्याः, तिष्ठन्ति तत्र मुख्यकाः ।
तेषां च प्रार्थना योगात्तत्स्थाने गुरवो गताः ॥ ४४५ ॥
प्रजावर्गेण सर्वेण, सम्मील्य प्रार्थना कृता ।
व्याख्यानं च कृतं तत्र, जीवदया निबन्धनम् ॥ ४४६ ॥
गोरक्षार्थं च तत्रैव, गौशाला परिविद्यते ।
अपरेषां च जन्तूनां, रक्षास्थानं न किञ्चन ॥ ४४७ ॥
अहिंसा परमो धर्मः, मन्यते च भवादृशैः ।
तदा च सर्वजीवानां, रक्षणं प्रविधीयताम् ॥ ४४८ ॥
महिष्यजागवादीनां, दुग्धं च पीयते न वा ।
यदि च पीयते तेषां, रक्षणं सम्मतं तदा ॥ ४४९ ॥
गौर्माता यदि कथ्येत, मातृष्वसा च माहिषी ।
अजा च भगिनी तुल्या, तदा कथं न मन्यते ॥ ४५० ॥
तान्प्रतिबोध्य तत्रैव, पशुशाला च कारिता ॥
अद्यापि जीवरक्षा च, मैनपुर्यां प्रजायते ॥ ४५१ ॥

प्रजाजनग्रहात्तत्र, सप्ताहं स्थिरतां भजेत् ।
ततो भोगपुरे गत्वा, कन्हौजे गुरवो गताः ॥ ४५२ ॥

नग्नाटश्राद्धविज्ञप्त्यै, तत्स्थाने स्थिरता कृता ।
आर्यसमाजिनश्चैव चर्चार्थमागताः समे ॥ ४५३ ॥

जगत्कर्तृत्वमुद्दिश्य, प्रश्नाश्च बहवः कृता ।
ईश्वरविषयाश्चापि, ज्ञातव्या ज्ञानमिच्छुभिः ॥ ४५४ ॥

भवन्मतेश्च तत्सिद्धिः, जायते न कदाचन ।
प्रमाणस्यैव शून्येन, कर्तृत्वं नैव सिद्ध्यति ॥ ४५५ ॥

अक्षसम्बन्धराहित्यात्प्रत्यक्षं न भवेत्कदा ।
रूपिद्रव्यं समालम्ब्य, प्रत्यक्षं जायते किल ॥ ४५६ ॥

रूपादि गुणशून्येन, प्रत्यक्षं चेश्वरे न हि ।
लिंगस्य नैव प्रत्यक्षं ततोऽनुमानता कथम् ? ॥ ४५७ ॥

विना च लिङ्गप्रत्यक्षं, नानुमानं प्रजायते ।
इत्येवं सर्वसिद्धान्तः; प्रसिद्धः सर्वदा खलु ॥ ४५८ ॥

अतोऽनुमानता नैव, ईशसिद्धौ भवेत्कदा ।
सादृश्यं तादृशं नैव, उपमानं कथं भवेत् ॥ ४५९ ॥

गुणाधिक्यं च नो यत्र, उपमा तत्र भवेत्कथम् ।
ईश सादृश वस्तूनां, संसारेऽभावता सदा ॥ ४६० ॥

तदा कथं हि चान्यस्य, अन्यस्मिन्नुपमा भवेत् ।
तदभावे कथं तर्हि, उपमानं प्रवर्त्तते ॥ ४६१ ॥

आगमस्यापि तत्कार्ये, प्रवृत्ति नैवजायते ।
आगमं च कृतं केन, ईशेन चापेरण वा ॥ ४६२॥
ईश्वरेण कृतं तर्हि, सदेहो वाऽन्यथा मतः।
सदेहे चेश्वरे चैव मन्तव्ये दोषता बहु ॥ ४६३ ॥
अनादीश्वरमन्तव्ये, सदेहत्वं कथं भवेत् ।
यदि सदेहता तत्र अनादित्वं तदा कथम् ॥ ४६४ ॥
अनादित्वं सदेहत्वं, माता वन्ध्या समं मतम् ।
विना जन्म सदेहत्वं, कदापि नैव सम्भवेत् ॥ ४६५ ॥
जन्मत्वे यदि मन्तव्ये, अनादित्वं तदा न हि ।
कथं तर्हि कर्त्तव्यं, उच्यतां वदतां वर ॥ ४६६ ॥
किञ्च धर्मादिकं नाना, अङ्गत्वं नैव सिध्यति ।
विनाङ्ग चास्यता नैव, वक्तृत्वं च कथं भवेत ॥ ४६७ ॥
वक्तृत्वं च विना नैव, वाक्यता सम्भवेत्खलु ।
वाक्यता पदसन्दोहः, पदं च वर्णसंभृतम् ॥ ४६८ ॥
वर्णाः ताल्वादि सम्भृताः, तैर्विना चागमं कथम् ।
सदेहत्वस्य संसिद्धिः, ईश्वरे नैव जायते ॥ ४६९ ॥
अदेहे चेश्वरे सिद्धे तत्कर्तृत्वं न संभवेत् ।
आगम च विना नैव, ईश्वरत्वं प्रसिध्यति ॥ ४७० ॥
ईश्वरकर्तृता तत्र, न सिध्यति कदाचन ।
अन्यकर्तृत्व पक्षे च, तत्र प्रश्नद्वयी भवेत् ॥ ४७१ ॥

अन्यश्चागमकर्त्ता चेद्यदि त्वया निगद्यते ।
स सर्वज्ञोऽन्यथा चैव, किं त्वया प्रणिगद्यते ॥ ४७२ ॥

तत्र सर्वज्ञसिद्धिश्च, केनाऽपि हेतुना भवेत् ।
प्रमाणं चागमं नैव, तद्विषयस्य साधकम् ॥ ४७३ ॥

अन्य प्रमाणता नैव, आगमस्य प्रसाधिका ।
अतो हि चागमं तत्र, सर्वज्ञसाधकं न हि ॥ ४७४ ॥

तत्कर्त्तृत्वस्य सन्देहे, कथं तत्र प्रमाणता ।
सार्वसिद्धिं विना चैव, प्रामाण्यं चागमे कथम् ॥ ४७५ ॥

असर्वज्ञस्य कर्त्तृत्वे, तत्र प्रमाणता कथम् ॥
अप्रमाणस्वरूपं च, आगमं नैव मन्यते ॥ ४७६ ॥

जगत्कर्त्तृत्वसिद्धिश्च, अतः केन विधीयते ।
प्रमाणं च विना नैव, कर्त्तृत्वं साध्यते कथम् ॥ ४७७ ॥

जगत्कर्त्तृत्व शून्यत्वं, ईश्वरे परिसाधितम् ।
तत्त्वाख्याने च द्रष्टव्यं, युक्तिप्रमाणता बहु ॥ ४७८ ॥

इत्यादि शास्त्रयुक्त्या च, प्रश्नोत्तरं प्रसाधितम् ।
तच्छ्रुत्वा हर्षिताः सर्वे, सञ्जाता गुरुभक्तकाः ॥ ४७९ ॥

जैनपुरी च प्राचीना, अधुना नैव विद्यते ।
रञ्जनकार्यकर्त्तारः, नग्नाद्याः सन्ति केचन ॥ ४८० ॥

जैनधर्मस्य श्रेष्ठत्वं, सर्वतः साधितं खलु ।
प्रभावना च जैनानां, जायते गुरुयोगतः ॥ ४८१ ॥

वीरजन्मोत्सवं चैव, कर्त्तुमिच्छा प्रवर्तते ।
गतो विहृत्य सर्वैश्च, कायमगञ्जके पुरे । ॥ ४८२ ॥
आगता गुरुदेवाश्च, कुर्वन्ति देशनां तदा ।
तत्रत्य पण्डिताः सर्वे, जैनधर्मस्य द्वेषिणः ॥ ४८३ ॥
व्याख्यानं गुरुदेवानां, श्रुत्वा तेऽपि चमत्कृताः ॥
शास्त्रार्थश्च कृतस्तैश्च उत्तरं च विधापितम् ॥ ४८४ ॥
ततो धर्मपुरीग्रामे, वीरजन्मोत्सवः कृतः ।
व्याख्यानं वर्धमानस्य, स्वामिनो जीवनोपरि ॥ ४८५ ॥
प्रतिग्रामे च विज्ञप्तिपत्रं च पाठितं तदा ।
जैनेतराश्च विद्वांसः, सर्वे तत्र समागताः ॥ ४८६ ॥
यूरोपीयनप्राज्ञश्च, विदेशिपत्रकं बहु ।
दृष्ट्वा च गुरुदेवानामग्रे गत्वा स पृच्छति ॥ ४८७ ॥
कति ज्ञानं च विद्येत, भवतां भाग्यशालिनाम् ।
अस्मद्देशे च तादृक्ष, ज्ञानी चान्यसमीपके ॥ ४८८ ॥
किंचिद्वदति नो कस्य, अभिमानरसानुगः ।
भवन्तः सरलाः प्राज्ञाः, जल्पन्ति च मया सह ॥४८९॥
भारते ज्ञानगाम्भीर्य, विद्यते सर्वदा खलु ।
भवदादेशकर्त्तव्ये, सङ्कोचो नैव विद्यते ॥ ४९० ॥
अतः किञ्चिद् वक्तव्यं, मम कल्याणहेतवे ।
भगवन्मन्दिरे पार्श्वे, एकं स्थानञ्च विद्यते ॥ ४९१ ॥

प्रतिसप्ताहकं तत्र, पशुवधो विधीयते ।
तं दृष्ट्वा सर्वजैनानां, हृदयं कम्पते बहु ॥ ४९२ ॥

यदीच्छा भवतां तस्य, दूरीकारे प्रजायते ।
तदा शीघ्रं च कर्त्तव्यं, विलम्बो न विधीयताम् ॥ ४९३ ॥

आज्ञां च गुरुदेवानां, प्राप्य सर्वनिषेधितम् ।
अन्यदिक्षु च हट्टानां, परिवर्त्तनता कृता ॥ ४९४ ॥

व्याख्यानं गुरुदेवानामतीव हर्षदायकम् ।
आत्माऽऽनन्दविधातृत्वं, वीरचरित्ररूपकम् ॥ ४९५ ॥

भगवतां महावीरदेवानां जीवनं च क्व ।
मादृशैः पामरैर्नैव, वर्ण्यते च यथास्थितम् ॥ ४९६ ॥

तदेकगुणवक्तव्ये, सामर्थ्यं मादृशां न हि ।
सर्वेषां चैव वक्तव्ये, केषां न हि समर्थता ॥ ४९७ ॥

भारते यज्ञहिंसानां, प्राबल्यं च यदा भवेत् ।
रुधिराणां नदी चैव, वहतेऽनेकधारया ॥ ४९८ ॥

अनेकपशुरक्तैश्च, जाता पापमया धरा ।
पुण्यप्रतापसंक्षीणे, जगत्याकुलता बहु ॥ ४९९ ॥

गौमेधनरमेधानां, प्राचुर्यं यत्र सम्भवेत् ।
पशुपक्ष्यादि जीवानां, यज्ञे वधस्य का कथा ॥ ५०० ॥

भारते पापबाहुल्यं, प्रवर्त्तते च यत्क्षणे ।
तदा च पुण्यमूर्त्तीनां, महावीराऽवतारता ॥ ५०१ ॥

पवित्रक्षत्रिये वंशे, ज्ञातवंशे नभोमणिः ।
सहस्रभानुसंकाशः, यस्य तेजोऽत्रतंशता ॥ ५०२ ॥
सिद्धार्थकुलसञ्जातः, महावीरप्रभुः किल ।
राज्यादिकं परित्यज्य, गृहीतं संयमं शुभम् ॥ ५०३ ॥
द्वादशवार्षिकीं घोरां, तपस्यां प्रतिपद्य वै ।
ऋजुवालुनदीतीरे, सम्प्राप्तं ज्ञानकेवलम् ॥ ५०४ ॥
तत्काले विहृतिं कृत्वा, अपापायां गतास्तदा ।
महायज्ञस्य कर्त्तारः, विप्राश्च मीलिता बहु ॥ ५०५ ॥
दशसहस्रसंख्याकाः, यज्ञादिकर्मकारकाः ।
तेषां हिंसा निषेधाय, सञ्जाता देशना प्रभोः ॥ ५०६ ॥
पुष्करावर्त्तमेघाऽऽभा, सर्वभाषाऽनुगामिनी ।
गम्भीरा वीरदेवानां, देशनाऽमृतनिर्झरा ॥ ५०७ ॥
देवानामागतिं श्रुत्वा, हर्षिताः सर्वे ब्राह्मणाः ।
साक्षाद्यज्ञवलीनां च, ग्रहणाय सुराः समे ॥ ५०८ ॥
समागच्छन्ति भो लोकाः! आश्चर्यं पश्यतां खलु ।
हिंसा यज्ञं परित्यज्य, गच्छन्ति सत्वरं ततः ॥ ५०९ ॥
दृष्ट्वा च ब्राह्मणाः सर्वे, हृदये परिकम्पिताः ।
एते देवाश्च सम्भ्रान्ताः, अन्यत्र यान्ति ते कथम्?॥ ५१० ॥
भगवद्वीरदेवानां, समवसरणे गताः ।
श्रुत्वा च धर्मचर्चायें, गताः सर्वे च ब्राह्मणाः ॥ ५११ ॥

भगवद्देशनां श्रुत्वा, सञ्जाताः च्छिन्नसंशयाः ।
जीवादिसंशयानां च, प्रकाशः प्रभुणा कृतः ॥ ५१२ ॥
प्रश्नोत्तरं विधायैव, शङ्काशङ्कुविवर्जिताः ।
सञ्जाता ब्राह्मणाः सर्वे, दीक्षिताः प्रभुणा तदा ॥ ५१३ ॥
गणधरपदं प्राप्य, एकादशैव ब्राह्मणाः ।
त्रिपदीं प्राप्य श्रीवीराद् द्वादशाङ्गी चकार ते ॥ ५१४ ॥
सहस्रशो द्विजाश्चान्ये, दीक्षिताः प्रभुणा परे ।
चन्दनादि सुशीलाश्च, साध्व्यश्च परिकीर्त्तिताः ॥ ५१५ ॥
आनन्दादिकसुश्राद्धाः, सुलशाद्याश्च श्राविकाः ।
चतुर्विधस्य संघस्य, स्थापना प्रभुणा कृता ॥ ५१६ ॥
गणधरीयशास्त्रार्थः, षट् सहस्रप्रमाणकः ।
ग्रन्थो विनिर्मितश्चैव, गणभृद्वादनामतः ॥ ५१७ ॥
विशेषावश्यकीयायां, टीकायां परिवर्त्तते ।
विलोकनं विशुद्धेन, भावेन क्रियतां खलु ॥ ५१८ ॥
प्रभोश्च जीवनं चैव, कथितं गुरुणा तदा ।
श्रुत्वा सर्वे गृहस्थाश्च, जाता विभाववर्जिनः ॥ ५१९ ॥
गुरुदेवं प्रणिपत्य, तैरेव कथितं मुदा ।
अस्माकं जैनधर्मस्योपरिघृणा सदैव च ॥ ५२० ॥
बहुकालाच्च सञ्जाता, नष्टा चाद्यैव सा खलु ।
सद्भावस्तत्र सञ्जातः, गुरुदेवप्रभावतः ॥ ५२१ ॥

धन्याश्च गुरुदेवास्ते, ये सुसम्पस्य कारकाः ।
भवादृशां गुरूणां च, विषये किमु कथ्यते ॥ ५२५ ॥

सर्वैस्तत्रैव सम्मीलय, अभिनन्दनपत्रकम् ।
समर्प्य गुरुदेवानां, भावना भाविता बहु ॥ ५२३ ॥

जयन्तीं वीरदेवानां, कृत्वा च भक्तिभावतः ।
उग्रपुरे समायाताः, गुरवो धर्मसूरयः ॥ ५२४ ॥

उग्रपुरीयभव्याश्च, गुरुदेवस्य सम्मुखे ।
वाद्यादिसर्वसामग्रीं, गृहीत्वा चागताः समे ॥ ५२५ ॥

लक्ष्मीचन्द्रमहाभागाः पुत्रश्रीसमन्विता ।
वेजकरणसुश्राद्धाः, वेलनगंजवासिनः ॥ ५२६ ॥

भवानीदास सच्छ्राद्धाः, इन्द्रचन्द्रादयः खलु ।
लवणमंडिवास्तव्याः, आगता गुरुनैकटे ॥ ५२७ ॥

गुलाबचन्द्रकाद्याश्च, मानपाटकवासिनः ।
हिंगमंडिसमायाताः, मुक्ताकटरवासिनः ॥ ५२८ ॥

रोशनपाटकाश्चैव, अन्येऽपि श्रावकाः समे ।
नग्नाद्याः परिज्ञातव्याः, सम्मुखे चागताश्चवै ॥ ५२९ ॥

अतीव भक्तिभावेन, समानीताश्च मन्दिरे ।
चिन्तामणिप्रभूणां च, दर्शनं तैः कृतं शुभम् ॥ ५३० ॥

भगवद्वीरसूरीणामुपाश्रये समे गताः ।
सद्वाज्ञां च परिप्राप्य, गुरवश्च स्थितास्तदा ॥ ५३१ ॥

श्रावितं मङ्गलं तत्र, गुरुदेवेन सुन्दरम् ।
गम्भीरार्थं च ज्ञातव्यं, सर्वप्रबोधकारणम् ॥ ५३२ ॥

व्याख्यानं गुरुदेवानां, विहारपरिसूचकम् ।
श्रुत्वा च श्रावकाः सर्वे, कुर्वन्ति प्रार्थनां शुभाम् ॥ ५३३ ॥

अत्याग्रहेण योगेन, सङ्घस्य भक्तिभावतः ।
चातुर्मासीय विज्ञप्तिः, स्वीकृता गुरुणा तदा ॥ ५३४ ॥

दादा श्रीहीरसूरीणामुपाश्रये स्थिताः समे ।
मङ्गलन्यायसाधू च, कर्णपुरात्समागतौ ॥ ५३५ ॥

वेलनगंजवास्तव्य, लक्ष्मीचन्द्रस्य भावतः ।
सोरावालीय कोठीसु, स्थिरता गुरुणा कृता ॥५३६ ॥

व्याख्यानं ज्ञातसूत्रस्य, प्रतिदिनं प्रजायते ।
जैनजैनेतरास्तत्र, आगच्छन्ति सुयोगतः ॥ ५३७ ॥

दिगम्बरीय विद्वांसः, उग्रपुरे समागताः ।
दिग्विजयकुमाराद्याः, स्वकीयधर्महेतवे ॥ ५३८ ॥

व्याख्यानाय दलं तैश्च, निष्कासितं च सुन्दरम् ।
प्रौढविज्ञाऽऽगतिं श्रुत्वा, सर्वे ततः पलायिताः ॥ ५३९ ॥

उग्रपुरीय नग्नाटाः,तच्छुत्वा दुःखिताः समे ।
विज्ञैरागत्य पृष्टं च, व्याख्यानं जायते कदा ॥ ५४० ॥

दुःखदावानलेनैव, दग्धा काष्ठांबरास्तदा ।
गुरुदेवस्य पार्श्वे ते, याञ्चां कुर्वन्ति सर्वथा ॥ ५४१ ॥

व्याख्यानपत्रिका तैश्च, किमर्थं दापिता पुरे ।
दापिता यदि भावेन, प्रयाताश्च ततः कथम् ? ॥ ५४२ ॥

हेलना जैनधर्मस्य, जायतेऽद्य पुरे वरे ।
इति निश्चित्य तत्रैव, व्याख्यानाय गताः खलु ॥ ५४३ ॥

प्रारब्धा देशना तत्र, जैनधर्मप्रवर्धनी ।
सार्वजनीनबोधाय, दत्ता विशुद्धभावतः ॥ ५४४ ॥

देवपूजा गुरूपास्तिः, स्वाध्यायः संयमस्तपः ।
दानं चेति गृहस्थानां, षट्कर्माणि दिने दिने ॥ ५४५ ॥

देवगुर्वादि तत्त्वानां, स्वाध्यायसंयमादीनाम् ।
युक्तिप्रमाणपूर्वेण, स्वरूपं प्रतिपादितम् ॥ ५४६ ॥

सर्वज्ञवीतरागत्वं, यत्रैव परिसिध्यति ।
तस्यैव पूजनं न्याय्यं, द्रव्यभावप्रभेदतः ॥ ५४७ ॥

महाव्रतधरा ये च, समित्यादि समन्विताः ।
विशुद्धा भावना युक्ताः, गुरवस्ते उदाहृताः ॥ ५४८ ॥

विशुद्धाऽऽहारपानादि, दातव्यं श्रावकैः सदा ।
उपकरणदानं च, भैषज्यादि प्रदापनम् ॥ ५४९ ॥

कञ्चनकामिनीनां च, सर्वथा त्यागता खलु ।
तेषामुपास्ति कर्त्तव्या, आत्मकल्याणहेतवे ॥ ५५० ॥

स्वाध्यायः पञ्चधा प्रोक्तः, वाचनादि विभेदतः ।
सप्तदशप्रकाराश्च, संयमस्य प्रकीर्त्तिताः ॥ ५५१ ॥
द्वादशधा तपः प्रोक्तं, बाह्याभ्यन्तरभेदतः ।
दानं च पञ्चधा ज्ञेयं, सुपात्रादि प्रकारतः ॥ ५५२ ॥
नैकदृष्टान्तपूर्वेण, सर्वं च तत्समर्थितम् ।
श्रुत्वा सभ्यजनाः सर्वे, सन्तुष्टा हृदये तदा ॥ ५५३ ॥
जैनधर्मप्रभावश्च, सर्वत्र प्रसृतस्ततः ।
तच्छ्रुत्वा सर्वनग्राटाः, प्रशंसन्ति मुहुर्मुहुः ॥ ५५४ ॥
त्वत्प्रसादेन जैनानां, गौरवं परिजायते ।
गुरुदेवोपकारं च, मन्यते सर्वदा किल ॥ ५५५ ॥
यदि श्वेताम्बरः साधुः, उग्रपुरे च नो भवेत् ।
तदा तु जैनधर्मस्य, हास्यता परिजायते ॥ ५५६ ॥
जैनेतरीय साधूनां, सर्वथा भ्रष्टता मता ।
आचारेण विहीनानां, का कथा कथ्यते खलु? ॥ ५५७ ॥
मैनकादि परिभ्रष्टाः, केचिच्चाण्डालसम्भवाः ।
तेषां सन्तानसद्भावः, तन्नाम्ना गोत्रता मता ॥ ५५८ ॥
गार्हस्थ्यं च परित्यज्य, येन सन्यासता धृता ।
कथं तेषां च सन्तानोत्पत्तिश्च परिजायते ॥ ५५९ ॥
नाम ब्राह्मणसद्भावे, तत्र ब्राह्मणता मता ।
गुणस्य लवलेशोऽपि, विद्यते न कदाचन ॥ ५६० ॥

ब्रह्मतत्त्वं न जानाति, ब्रह्मसूत्रेण गर्वितः ।
स च तेनैव पापेन, विप्रः पशुरुदाहृतः ॥ ५६१ ॥
ब्राह्मणो ब्रह्मचर्येण, यथा शिल्पेन शिल्पिनः ।
अन्यथा नाममात्रः स्यादिन्द्रगोपस्य कीटवत् ॥ ५६२ ॥
जन्मना जायते शूद्रः, संस्काराद्विज उच्यते ।
वेदपाठी भवेद्विप्रः, ब्रह्म जानाति ब्राह्मणः ॥ ॥ ५६३ ॥
वज्रसूच्याख्यग्रन्थेषु, शङ्कराचार्यभिक्षुणा ।
ब्राह्मणत्वस्य संसिद्धौ, दशविकल्पना कृता ॥ ५६४ ॥
जातिदेहादिवैकल्पे, ब्राह्मणत्वं न तिष्ठति ।
सर्वान् तांश्च परित्यज्य, ब्रह्मवित्त्वं समादृतम् ॥ ५६५ ॥
अधुना विप्रवर्गेषु, ब्राह्मणत्वं न विद्यते ।
ब्राह्मणत्वेन सम्भ्रष्टाः, ब्राह्मणाः परिकीर्त्तिताः ॥ ५६६ ॥
भ्रष्टसन्यासिजत्वेन, क्षत्रियेष्वपि नादरः ।
नादरो वैश्यशूद्रेषु, अत उपरि रक्षिताः ॥ ५६७ ॥
तेषां शापभयेनैव, जल्पितं नैव केनचित् ।
तद्दिनादेव तेषां हि, स्थानं तत्रैव रक्षितम् ॥ ५६८ ॥
विजयसिंहक्षत्रीयैः, उग्रपुरे कथा कृता ।
यदि सत्या च सा तर्हि, महद्दुःखप्रदायिनी ॥ ५६९ ॥
सर्वोपरि स्थितत्वेन, सर्वेषां भ्रष्टता कृता ।
भिक्षुकर्त्ताधर्मिणः सर्वैः, सर्वं जगद्विडम्बितम् ॥ ५७० ॥

ना सत्या यदि सा वार्ता, तदाऽपि च महद्दुःखम् ।
ब्राह्मणत्वस्य लेशोऽपि, विद्यते न कदाचन ॥ ५७१ ॥
ब्राह्मणत्वस्य राहित्याद्, ब्राह्मणत्वं कथं भवेत् ।
आचारपरिभ्रष्टेषु, नहि तत्त्वं निगद्यते ॥ ५७२ ॥
कन्हैयालाल मुन्श्याद्या, महाभ्रष्टाश्च ब्राह्मणाः ।
भार्गवकुलता तैश्च, अङ्गारसदृशी कृता ॥ ५७३ ॥
तेषां नामाऽपि पापाय, दृष्टिपातस्य का कथा ?।
असत्यजल्पकानां च, का गतिर्भाविनी खलु ॥ ५७४ ॥
सर्वविप्रैश्च सम्मील्य, शुद्धाचारो विधीयताम् ।
यज्ञहिंसादि पापानां, वलिदानस्य सर्वथा ॥ ५७५ ॥
क्रियतां च निषेधोऽपि, सर्वदा विप्रसत्तमैः ।
यत्र तमो गुणत्वं स्यात्तत्त्यागश्च विधीयताम् ॥ ५७६ ॥
प्राधान्यं यत्र सत्त्वस्य, तस्यादरो वितन्यताम् ।
एवं च कार्यकर्त्तव्ये, कथंचिद्विप्रता भवेत् ? ॥ ५७७ ॥
प्रासङ्गिकं च सम्प्रोच्य, तत्कथनानुसारतः ।
प्रकृतं प्रतिपाद्येत, उग्रपुरीयवर्णनम् ॥ ५७८ ॥
सङ्घात्याग्रहयोगेन, व्याख्याप्रज्ञप्तिसूत्रकम् ।
पठ्यते देशनाकाले, गुरुणा विधिपूर्वकम् ॥ ५७९ ॥
भावनाऽधिकृते शान्तिनाथप्रभोश्च जीवनम् ।
कथ्यते जनबोधाय, वैराग्यरसपोषकम् ॥ ५८० ॥

श्राद्धानां गणना बह्वी, प्रतिदिनं प्रवर्धते ।
लक्ष्मीचन्द्राद्यः सर्वे, आगच्छन्ति च सत्वरम् ॥ ५८१ ॥

सूत्राभ्यासो गुरुपार्श्वे, मङ्गलाद्यैर्विधीयते ।
कर्मग्रन्थादिशास्त्राणामध्ययनं वितन्यते ॥ ५८२ ॥

सर्वे साधुमहाराजाः, भक्तिं कुर्वन्ति भावतः ।
गुरुदेवेन सद्भावपूर्वकं परिपाल्यते ॥ ५८३ ॥

अधीत सूत्रन्यायादि, सर्वदर्शनपण्डिताः ।
सञ्जाताः साधवः सर्वे, व्याख्याने कुशलाः समे ॥ ५८४ ॥

सार्वजनीनवक्तव्यं, गुरुणा प्रविधीयते ।
उग्रपुरे च सर्वत्र, प्रसिद्धिः प्राप्यते शुभा ॥ ५८५ ॥

केचिद्दिगम्बराः श्राद्धाः, चर्चार्थं च समागताः ।
तेषां च शांतिपूर्वेण, गुरुणा तोषितास्तदा ॥ ५८६ ॥

चतुर्दशकपूर्वाणामारब्धं च तपः खलु ।
आबालवृद्धभव्यैश्च, श्राद्धैश्च श्राविकाजनैः ॥ ५८७ ॥

महोत्सवो भवानीदासेन कृतोऽपि भावतः ।
अनेकपार्श्वग्रामस्थाः, श्राद्धाः सर्वे समागताः ॥ ५८८ ॥

पर्युषणामहापर्व, आराधितं च भावतः ।
साधर्मिकं च वात्सल्यं, जातं बहुप्रकारतः ॥ ५८९ ॥

एकदा लक्ष्मीचन्द्रेण, सपुत्रेण तदा खलु ।
आगत्य गुरुदेवानां, समीपे प्रार्थना कृता ॥ ५९० ॥

एकादशी तपश्चर्योद्यापनं विधिपूर्वकम् ।
क्रियते भवतामाज्ञा, चेदिच्छा सफलीभवेत् ॥ ५९१ ॥

गुरुणा तत्र सम्प्रोक्तं, यथासुखं विधीयताम् ।
धर्मप्रभावनाकार्ये, अनुमतिश्च सर्वथा ॥ ५९२ ॥

निष्कासितं मुहूर्त्तं च, आश्विनमासिकं शुभम् ।
विशुद्धकार्यकर्त्तव्ये, विशुद्धभावना सदा ॥ ५९३ ॥

पंचतीर्थिकनिर्माणं, कुशलशिल्पिना कृता ।
समवसरणं मध्ये, रचितं दिव्यवस्तुजम् ॥ ५९४ ॥

पत्रिका सर्वदेशेषु, प्रेपिता बहुभावतः ।
सहस्रशो जनानां च, आगमनं प्रजायते ॥ ५९५ ॥

स्वामिवात्सल्यकं तत्र, दिनाऽष्टकं च कीर्तितम् ।
पूजा भिन्नप्रकाराश्च, लक्ष्मीचन्द्रेण कारिता ॥ ५९६ ॥

रथः पाञ्चालदेशस्थो, राजतस्तत्र चागतः ।
महान् शोभाकरः शुभ्रो, जनप्रमोदकारकः ॥ ५९७ ॥

धवलपुरराज्ञश्च, भरतपुरवासितः ।
राज्ञोऽपि वाद्यसामग्री, विपुला तत्र चागता ॥ ५९८ ॥

मण्डपरचना तत्र, कारिता बहुमूल्यतः ।
पताकातोरणाद्यं च, बद्धं विविधरूपतः ॥ ५९९ ॥

अतीव भक्तिभावेन, रथयात्रा कृता शुभा ।
समग्रनगरे भ्रान्त्वा, बेलनगंजमण्डपे ॥ ६०० ॥

यत्रोद्यापन कार्यं स्यात्तत्रैव सा समागता ।
सुगुणा श्राविका तत्र, कृतव्रती च पुंक्षणम्  ॥ ६०१ ॥
पालीताणीयशालायाः, मोहमय्याश्च मण्डली ।
भक्तिरसप्रधानं च, गीतगानं प्रकुर्वती  ॥ ६०२ ॥
वैराग्यरसता यत्र, प्रचुरा परिज्ञायते ।
अध्यात्मभजनादीनां, प्रघोषः प्रविधीयते  ॥ ६०३ ॥
धन्यवादस्य घोषाश्च, प्रजाजनैः प्रकीर्त्तिताः ।
गुरवे श्रेष्ठिने सर्वैः, कृता धर्मानुमोदना  ॥ ६०४ ॥
उग्रपुरे न तादृक्षः, सञ्जातश्च महोत्सवः ।
अपूर्वोत्सवदृष्टव्ये, सर्वेषां भावना समा  ॥ ६०५ ॥
श्वेताम्बरीय भव्याश्च, दिगम्बरीय भावुका ।
भेदभावं परित्यज्य, सर्वे तत्र समागताः  ॥ ६०६ ॥
उदारवृत्तिता येषां, जायते मानसे शुभा ।
तत्र तेषां च कार्याणि, जायन्ते चाविलम्बतः ॥ ६०७ ॥
गुणानुरागगाम्भीर्य–धैर्यादिका गुणाः समे ॥
विद्यते पक्षपातो न, ते महाभाग्यशालिनः  ॥ ६०८ ॥
लक्ष्मीचन्द्राश्च तादृक्षाः, गुरोराज्ञानुवर्त्तिनः ।
दम्भस्य लवलेशो न, तेषां स्यान्त कदा च न ॥ ६०९ ॥
स्वभावसरलेनैव, कुर्वन्ति धर्मकार्यताम् ।
अमरचन्द्रपुत्रश्च, पैतृकं पदतां श्रयेत्  ॥ ६१० ॥

वाराणस्याः स्थिते काले, षट्षष्टि विक्रमाब्दके ।
एकदा गुरुदेवानां, विचारो मानसे भवेत् ॥ ६११ ॥

यादृशी चात्र शालाऽस्ति, पादलिप्ते च तादृशी ,
संस्कृतपाठशाला स्यात्तदा लाभो महान्भवेत् ॥ ६१२ ॥

मूर्खछात्राश्च काश्यां वै, आगत्य न पठन्ति ते ।
अयोग्यछात्रपाठे च, परिश्रमो महान्भवेत् ॥ ६१३ ॥

यदि च तत्र शाला स्यात्स्तोकमधीत्य तत्र वै ।
पश्चादत्र समायाते, लाभश्च सर्वथा भवेत् ॥ ६१४ ॥

साधूनां पठनं चैव, तत्रत्यानां प्रजायते ।
अतश्च महती शाला, तत्रैव परिशोभते ॥ ६१५ ।

एवं विचिन्त्य काश्याश्च, प्रेषितः पण्डितः खलु ।
सलोताऽमृतलालाख्यः, गतः स्वनगरे तदा ॥ ६१६ ॥

नैकदलानि तत्सार्धं, शालोद्घाटनहेतुके ।
दत्तानि सान्त्वनार्थं च, सर्वेषामधिकारिणाम् ॥ ६१७ ॥

कार्त्तिकशुक्लपञ्चम्यां, गत्वा शाला प्रकाशिता ।
साधुछात्राश्च तत्रैव, पठन्ति भावपूर्वकम् ॥ ६१८ ॥

संस्कृतप्राकृतानां च, अध्ययनं प्रजायते ।
काशितः सर्वद्रव्यं च, शालार्थं प्रेष्यते तदा ॥ ६१९ ॥

यशोविजयपूर्वं च, पश्चाच्छालाऽभिधानकम् ।
गुर्वाज्ञया च दत्तं तत्कार्यं सुचारुरूपतः ॥ ६२० ॥

चारित्रविजयेनैव, चातुर्मासं त्रयं कृतम् ।
मन्दबुद्धिप्रभावेन, वार्त्तालापविनोदिना ॥ ६२१ ॥

लघुवृत्त्याख्यग्रन्थस्य, द्वयध्यायी पठिता तदा ।
यत्ने बहुकृतत्वेऽपि, मुखे चटति चाल्पकम् ॥ ६२२ ॥

ज्ञानावरणदोषेण, श्रमोऽपि निष्फलो भवेद् ।
मङ्गलैश्चिन्तितं चैव, गुरूणां कथितं तदा ॥ ६२३ ॥

संक्लेशकार्यकर्त्तव्ये, कौशल्यं वर्त्तते बहु ।
साधुछात्रस्य सामीप्ये, प्रत्यहं सकषायता ॥ ६२४ ॥

विहारकार्यकर्त्तव्ये, गुरुणा ज्ञापितस्तदा ।
सामग्री परिपूर्णेन, विहारे च नियोजितः ॥ ६२५ ॥

गत्वा च पादलिप्ते वै, शालायां याति नित्यशः ।
गुरुदेवसमीपे च, पत्रकं तेन पाठितम् ॥ ६२६ ॥

ममाऽपि पठनेच्छाऽस्ति, पण्डितः परिज्ञाप्यताम् ।
भवदाज्ञाप्रभावेन, पठनं सुलभं भवेत् ॥ ६२७ ॥

दयाऽऽर्द्रचित्तरूपेण, गुरुणा प्रेषितं दलम् ।
चारित्राऽध्ययने चैव, दृष्टिपातो विधीयताम् ॥ ६२८ ॥

पाठारम्भः कृतस्तेन, परन्तु पठ्यते न हि ।
क्रीडाकुतूहलेनैव, समयः परिगाल्यते ॥ ६२९ ॥

शान्तस्वभावता शुद्धा, पण्डिते परिवर्त्तते ।
किञ्चिन्न कथितं तेन, ततः शालाऽधिपो भवेत् ॥ ६३० ॥

भद्रिक परिणामेन, ज्ञापिता गुरवो न हि ।
पण्डितेन तदा तत्र, शोचितं नैव किञ्चन ॥ ६३१ ॥

न ज्ञातं गुरुणा किञ्चिच्छात्राणां नैव ज्ञापितम् ।
शालोन्नतिश्च बाह्येन, रूपेण परिदर्शिता ॥ ६३२ ॥

शालोन्नतिं परिदृश्य, छात्राणां मुखतस्तदा ।
त्रिंशतीरूपकानां च, प्रतिमासं द्विमातृकैः ॥ ६३३ ॥

लक्ष्मीचन्द्राऽभिधानैश्च, तेजकरणश्रेष्ठिभिः ।
दानार्थं वचनं दत्तं, तद्दिनाद्दीयते खलु ॥ ६३४ ॥

पञ्चशतकरूप्याणां, प्रतिमासं सहायता ।
दीयते चोपदेशेन, शासनोन्नतिभावतः ॥ ६३५ ॥

विज्ञत्रिकं च पाठार्थं, गुरुणा हि नियोजितम् ।
सर्वेषां पाठकार्यं च, सम्यग्रीत्या प्रजायते ॥ ६३६ ॥

गायनकर्तृछात्राणां, दत्तं च पारितोषिकम् ।
याचकानां च दानं तु, प्रदत्तं बहुभावतः ॥ ६३७ ॥

श्रेष्ठिना ज्ञानपञ्चम्यां, भक्तिभावपुरःसरम् ।
शिष्यत्वप्राप्तिहेतोश्च, गृहीतं वासक्षेपकम् ॥ ६३८ ॥

सकुटुम्बेन तत्रैव, शिष्यत्वं परिधारितम् ।
ततश्च विहृतिं कृत्वा, हीरसूरेश्च वाटिकाम् ॥ ६३९ ॥

गताः सङ्घेन सार्धं च, स्वामिवात्सल्यता कृता ।
पूजा प्रभावना कार्यं, सर्वं तच्छ्रेष्ठिना कृतम् ॥ ६४० ॥

मथुरायां ततो गत्वा, घीमण्ड्याश्च समीपके ।
आशाम्बरस्य शालायां, निवासो गुरुणा कृतः ॥ ६४१ ॥

मूलचन्द्रमहाभागैः, व्याख्यानं कारितं तदा ।
जैनेतराश्च तत्रैव, आगता भावपूर्वतः ॥ ६४२ ॥

देशनां तत्र दत्त्वैव, वृन्दरावनतां गताः ।
चन्दनमलश्राद्धस्य, गृहे स्थितास्तदा खलु ॥ ६४३ ॥

मन्दिरप्रेक्षणे कार्ये, साधवश्च गतास्तदा ।
रङ्गजीमन्दिरे चैव, सुदर्शनाख्यपण्डितः ॥ ६४४ ॥

मीलितः शान्ततायुक्तः, षड्दर्शनस्य ज्ञापकः ।
वेदादि शास्त्रज्ञाता च, भक्तिभावं करोति सः ॥ ६४५ ॥

चर्चा श्रीजैनधर्मस्य, विषये परिजायते ।
गुणज्ञत्वाच जैनानां, युक्तिस्तुतिं करोत्यसौ ॥ ६४६ ॥

मधुसूदन गोस्वामी, तदा करोति याचनाम् ।
अस्मत्स्थाने समागत्य, देशनां विदधातु भो ॥ ६४७ ॥

तदर्थं पत्रिकां चैकां, निष्कासयति भावतः ।
विज्ञापनदलं श्रुत्वा, तत्रत्याः सर्ववैष्णवाः ॥ ६४८ ॥

आगत्य तं प्रति प्रोक्तमत्र स्याद्देशना कथम् ? ।
तेषां च देशनां श्रुत्वा, भवन्ति धर्मविमुखाः ॥ ६४९ ॥

तदा किं क्रियते तत्र, भवता ज्ञानवर्जिना ।
अतश्च देशना तेषां, त्वया चात्र निषेध्यताम् ॥ ६५० ॥

परस्परं च संक्लेशः, गोस्वामिनां प्रजायते ।
ततश्चान्यत्र सद्व्याख्या, संजाता दैवयोगतः ॥ ६५१ ॥

इन्द्रियवशकर्त्तारः, सर्वे ते वैष्णवा मताः ।
अन्यथा नाममात्रत्वं, वैष्णवे परितिष्ठति ॥ ६५२ ॥

इदं वृन्दावनं विद्धि, मां विद्धि मधुसूदनम् ।
आत्मानं राधिकां विद्धि, यथेष्टं भो समाचरेः ॥ ६५३ ॥

तादृशकार्यकर्त्तारः, वैष्णवा नैव सर्वथा ।
किन्तु ते भोगकीटाः स्युर्दुर्गतिगर्त्तगामिनः ॥ ६५४ ॥

योगमार्गं परित्यज्य, भोगमार्गावलम्बिनः ।
योगामृतरसाऽऽस्वादं, कुर्वन्ति न कदाचन ॥ ६५५ ॥

प्रासङ्गिकं च सम्प्रोच्य, विषये परिगच्छति ।
मनुष्यकार्यकर्त्तव्यं, विवेचयति मुख्यतः ॥ ६५६ ॥

जानाति मनुते तत्त्वं, मनुष्यो यः स कीर्त्तितः ।
न तु मनोरपत्यत्वं, मनुष्यत्वमुदाहृतम् ॥ ६५७ ॥

तस्य कर्त्तव्यकार्यत्व—विषयोऽत्र निगद्यते ।
पूर्णसाधकसामग्री, अन्यत्र नैव विद्यते ॥ ६५८ ॥

नरतिर्यक्त्व हेतुत्वं, देवनारकयोनिषु ।
चतुर्गतिर्निमित्तत्वं, तिर्यक्षु परिविद्यते ॥ ६५९ ॥

चतुर्गतिकमोक्षत्वं, मनुष्यस्य गतिं विना ।
प्राप्नोति नैव चान्यत्र, इति सर्वं विचार्यताम् ॥ ६६० ॥

चतुर्गतिक संसारे, भ्रमणं भूरिशः कृतम् ।
अक्षयसुखसम्प्राप्तिः, दुर्लभा परिजायते ॥ ६६१ ॥
मार्गानुसरिता चाद्या, ततो मिथ्यात्वभेदनम् ।
शुद्धसम्यक्त्वसम्प्राप्तिः, पुण्योदयेन जायते ॥ ६६२ ॥
मानुष्यमार्यदेशादि, सुकुलोत्पत्तिता ततः ।
पञ्चेन्द्रियत्वसम्प्राप्तिरायुषः परिपूर्णता ॥ ६६३ ॥
धर्मश्रवणजिज्ञासा, धर्मप्राप्तिस्ततः परम् ।
तत्त्वज्ञानं च चारित्रं, सर्वदा सुखसाधनम् ॥ ६६४ ॥
रत्नत्रयस्य सम्प्राप्तिः, विना योगेन नो भवेत् ।
अष्टधा योगता ज्ञेया, सद्ध्यानं मुक्तिसाधनम् ॥ ६६५ ॥
परमपदतां प्राप्य, नागच्छति ततो ध्रुवम् ।
यदा वंध्या सुतोत्पत्तिः, पुनरागमनं तदा ॥ ६६६ ॥
दग्धे बीजे यथाङ्कुरो, जायते न कदाचन ।
कर्मबीजे तथा दग्धे, न रोहति भवाङ्कुरः ॥ ६६७ ॥
विनाकारण सामग्रीं, कार्यं नैव प्रजायते ।
कार्यकारणसद्भावः, स्वीकृतः सर्वसज्जनैः ॥ ६६८ ॥
आगतिरूपकार्यस्य, कारणं कथ्यतां त्वया ।
यदि चेत्कर्मसामग्री, दग्धा सा तर्हि सर्वथा ॥ ६६९ ॥
अन्या कारणसामग्री, नैवात्र चोपयोगिनी ।
उच्यतां तर्हि संसारे, आगतिर्जायते कथम् ॥ ६७० ॥

विनाकारणसामग्रीं, कार्योत्पत्तिश्च कथ्यते ।
नभसः कुसुमोत्पत्तिः, शृङ्गोत्पत्तिश्च गर्दभात् ॥ ६७१ ॥
वन्ध्यातश्च सुतोत्पत्तिः, जायते च कथं नहि ।
अतः कारणसामग्री, कार्यस्य साधिका मता ॥ ६७२ ॥
सानुकूला च यत्रैव, सामग्री परिविद्यते ।
तत्रैव कार्यसद्भावः, अन्यत्र न कदाचन ॥ ६७३ ॥
मुक्तेरागमनं नैव, युज्यते सर्वथा खलु ।
अतो मुक्तेः प्रवक्तव्या, साद्यनन्तस्वभावता ॥ ६७४ ॥
मध्ये केनाऽपि सम्प्रोक्तं, वैष्णवेन तदा किल ।
आर्यसमाजिनश्चात्र, आगताः श्रुतिहेतवे ॥ ६७५ ॥
मूर्त्तिपूजाविधानञ्च, विधीयतां प्रसङ्गतः ।
युक्तिप्रमाणपूर्वेण, इत्येषा प्रार्थना मम ॥ ६७६ ॥
मङ्गलविजयेनैव, मूर्त्तिपूजा प्रदर्शिता ।
वेदश्रुतिप्रमाणेन, युक्तिप्रमाणवादतः ॥ ६७७ ॥
मूर्त्तिपूजा विधातव्ये, सर्वं तत्प्रतिपादितम् ।
योगप्रदीपग्रन्थे च, युक्तियुक्त्या विचारितम् ॥ ६७८ ॥
व्याख्यानं च समाप्यैव, वार्त्तालापो विनिर्मितः ।
वैष्णवमन्दिराण्येव, विलोकितानि तत्र वै ॥ ६७९ ॥
रङ्गजीमन्दिरं चाद्यं, वक्रस्तम्भाद्वितीयकम् ।
लालमन्दिरनामाख्यं, तृतीयं परिकीर्त्तितम् ॥ ६८० ॥

जयपुरीयं तूर्यं स्यात्पञ्चमं जीर्णप्रायिकम् ।
अन्यमन्दिराण्येव शतशः कीर्त्तितानि च ॥ ६८१ ॥

महाविद्यालयं चैकं, प्रेमाख्यं परिवर्त्तते ।
व्याख्यानं तत्र सञ्जातं, छात्रशिक्षा प्रदर्शकम् ॥ ६८२ ॥

त्रिश्रावकगृहाण्येव, विद्यन्ते वृन्दरावने ।
ओशवालस्य चैकं स्यात्पल्लिवालद्वयं तथा ॥ ६८३ ॥

मथुरायां समागत्य, सुपार्श्वप्रभुदर्शनम् ।
प्राचीनवस्तुतत्त्वानां, सङ्ग्रहो यत्र विद्यते ॥ ६८४ ॥

तत्स्थान दर्शनार्थं च, गताश्च तत्र साधवः ।
गुरुदेवेन सार्कं च, तदधिपेन तत्र वै ॥ ६८५ ॥

वार्त्तालाप कृतस्तेन, श्रवतां सावधानतः ।
अतिप्राचीनलेखाश्च, प्रभूणां मूर्त्तयस्तथा ॥ ६८६ ॥

अन्या प्राचीनसामग्री, जैनानामेव विद्यते ।
त्रिविंशतिः शतानां च, प्राचीना जैनमूर्त्तयः ॥ ६८७ ॥

ततः परं च बौद्धानां, प्राचीनपरिसूचकम् ।
शिलालेखादिकं सर्वं, विद्यते सङ्ग्रहालये ॥ ६८८ ॥

वैष्णवानां च तत्पश्चात्प्राच्यसाधनता भवेत् ।
प्राधम्यं जैनधर्मस्य, बौद्धानां च ततः परम् ॥ ६८९ ॥

तृतीय नम्बरो ज्ञेयः, वैष्णवानां च माथुरे ।
गर्भापहारचित्रं च, देवेनेव यथा कृतम् ॥ ६९० ॥

तादृशं चिन्हितं तत्र, प्रस्तरे प्राच्यबोधकम् ।
कङ्कालीनामटीलायां, गत्वा सर्वं विलोकितम् ॥ ६९१ ॥

सङ्ग्रहालयकं स्थानं, विशालं परिदृश्यते ।
ततश्चोरासिस्थानेषु, दर्शनार्थं गतास्तदा ॥ ६९२ ॥

चोरासिवर्णनं चैव, मथुराकल्पग्रन्थके ।
चोरासिनामहेतुश्च, स्पष्टरूपेण दर्शितः ॥ ६९३ ॥

सुपार्श्वनाथतीर्थे च, द्वौ मुनी चागतौ खलु ।
चातुर्मासिकस्थैर्याय, कायोत्सर्गे स्थितौ च तौ ॥ ६९४ ॥

चातुर्मासिकसद्ध्यानं, कृत्वा विहारभावनाम् ।
ज्ञात्वा देव्या च तत्रैव, आगत्य प्रार्थना कृता ॥ ६९५ ॥

असदुद्यानमध्ये च, भवन्निवासयोगतः ।
निर्विघ्नं परिपूर्णं च, संजातध्यानमुत्तमम् ॥ ६९६ ॥

भवत्तपोबलेनैव, सन्तुष्टाऽहं सदा प्रभो ! ।
वद किञ्च मया कार्यं, भवत्सेवाऽनुरूपकम् ॥ ६९७ ॥

कथितं मुनिराजाभ्यां, किञ्चित्प्रयोजनं न हि ।
देव्या प्रोक्तं च नास्माकं, वचनं निष्फलं भवेत् ॥ ६९८ ॥

मुनिभ्यां च तदा प्रोक्तमाग्रहो यदि तेऽस्ति चेत् ।
सुमेरोर्दर्शनं चैव, श्रीसङ्घस्यैव कार्यताम् ॥ ६९९ ॥

तत्क्षणे च तया प्रोक्तं, तत्सामर्थ्यं न विद्यते ।
यदि चेत्भवतामिच्छा, दर्शनं कारयाम्यहम् ॥ ७०० ॥

भवतामेव चान्यस्य, कारणे थामनोभवेत् ।
अतो वदत किं कार्यं, प्रभो ! चादिश्यतां मम ॥ ७०१ ॥
श्रीसङ्घदर्शने कार्ये, सामर्थ्यं यदि नो तव ।
अस्माभिश्च तदा नैव, कर्त्तव्यं कर्हिचिन्मतम् ॥ ७०२ ॥
तदा देव्या च सम्प्रोक्तं, मेरुः सुवर्ण रत्नजः ।
स्थापनारूपसम्पूर्णः, आनीयते मया खलु ॥ ७०३ ॥
सर्वेषां दृष्टिलाभाय, एतन्मया विधीयते ।
साधुभ्यां च तदा प्रोक्तमेवमस्तु च सर्वथा ॥ ७०४ ॥
मथुरायाः समुद्याने, मेरुरत्नमयस्तदा ।
देवीविनिर्मितो रात्रौ, दृष्टो माथुरसज्जनैः ॥ ७०५ ॥
सर्वदर्शनकारेण, सम्मील्य कलहः कृतः ।
प्रोक्तं चैकेन ब्रह्माऽयमागतश्च क्षमातले ॥ ७०६ ॥
प्रोक्तं परेण विष्णोश्च, देवेन स्थापना कृता ।
अपरेण च सम्प्रोक्तं, रामावतारता भुवि ॥ ७०७ ॥
जैनदर्शनकारैश्च, प्रोक्तं सुमेरुदर्शनम् ।
सञ्जातं भाग्ययोगेन, जैनानामयमुच्यते ॥ ७०८ ॥
एवं विवादसंजाते, व्योम्नो वाणी तदाऽभवद् ।
सर्वदर्शनकारैश्च, स्वकीयदेवचित्रकम् ॥ ७०९ ॥

१. दर्शनकारपितव्ये.

कृत्वा चित्रपटं चैव, अत्रैव परिमुच्यताम् ।
चित्रपटं तु यस्यैव, स्थास्यति चात्र स्थानके ॥ ७१० ॥

अधिकारी स तस्यैव, मन्तव्यो नापरो नरः ।
इत्येवं ध्वनिसंजाते, सर्वचित्रपटं तदा ॥ ७११ ॥

तत्स्थाने सर्वैरागत्य, रक्षितं तच्च भावतः ।
प्रचण्डवायुवेगश्च, मध्यरात्रौ समागतः ॥ ७१२ ॥

सर्वेषां चित्रमुड्डीय, अन्यस्थाने गतं तदा ।
जैनचित्रपटं तत्र, स्थितं दैवनियोगतः ॥ ७१३ ॥

तदधिकारिजैनाश्च, संजाता गुरुयोगतः ।
ततश्चित्रपटं जैनैः, तत्पुरे परिभ्रामितम् ॥ ७१४ ॥

पटयात्रा तदादितः, चलिता जैनशासने ।
अद्यावधि च जायेत, ज्ञातव्यं तन्मनीषिभिः ॥ ७१५ ॥

सुमेरोरभिषेकश्च, आद्यः केन विधीयते ।
कलहस्तत्र संजातः मुख्येन कथितं तदा ॥ ७१६ ॥

सङ्गीय सर्वभव्यानां, नामाङ्कितं दलं तथा ।
कृत्वा घटेषु प्रक्षिप्य, कुमारी हस्ततः खलु ॥ ७१७ ॥

निष्कासनं दलस्यैव, सर्वाऽध्यक्षं विधीयताम् ।
आद्य निष्कासनं यस्य, अभिषेकं करोत्यसौ ॥ ७१८ ॥

अन्यैः पश्चाच्च कर्त्तव्यः, इति न्यायः प्रदर्शितः ।
तदनुसारेण सर्वैश्च, स्वीकृतं तत्र भावतः ॥ ७१९ ॥

पार्श्वप्रभोश्च तीर्थेषु, देव्यादेशेन तत्क्षणे ।
वज्रमय्या विनिर्मिताः, इष्टिकास्तस्य रक्षणे ॥ ७२० ॥

चतुरशीतिराकाराः, धराणां निर्मितास्तथा ।
भाविनि कलिकालेऽपि, भेत्तुं शक्यं न मानवैः ॥ ७२१ ॥

वार्त्तां तादृक् च संश्रुत्य, राजवर्गीय मानुषैः ।
भेत्तुमारभ्यते तं च, आश्चर्यं च तदाऽभवत् ॥ ७२२ ॥

पश्चादिशस्त्रद्वारैश्च, यदा तु भिद्यते तदा ।
पट्टराज्ञी शिरोभेदः, जायते तत्क्षणे खलु ॥ ७२३ ॥

शब्दाऽद्वैते च संजाते, अवरोधे महत्तदा ।
राज्ञा तत्र समागत्य, दृष्टं तत्सविशेषतः ॥ ७२४ ॥

यावन्तश्च समाघाताः, जायन्ते च सुदर्शने ।
तावन्तस्तत्र राज्ञीनां, पतन्ति मस्तकोपरि ॥ ७२५ ॥

तदाश्चर्यं च विज्ञाय, निषिद्धं मेरुभेदनम् ।
तदुपरि पुनः श्राद्धैः, इष्टिकावेष्टनं कृतम् ॥ ७२६ ॥

तत्प्रमाणधरादानें, चोरासी नाम सम्मतम् ।
तन्नाम्नैव प्रसिद्धिश्च, सञ्जाता भारते खलु ॥ ७२७ ॥

दिव्यतादृशां मेरूणामवतारो न कुत्रचित् ।
तत्रावतारजातत्वाज्जाता पुण्यवती च सा ॥ ७२८ ॥

दिव्यमेरोश्च दृष्टयर्थं, गताश्च गुरवस्तदा ।
दृष्ट्वा चाल्हादतां प्राप्य, कृता स्तुतिश्च भावतः ॥ ७२९ ॥

मथुरातीर्थसंजातं, तद्दिनादेव भारते ।
अतः पवित्ररूपेयं, मथुरा परिकीर्त्तिता ॥ ७३० ॥

मथुराकल्पशास्त्रे च, विशेषेण निरूपितम् ।
सर्वं तत्रैव ज्ञातव्यमत्र तु नाममात्रकम् ॥ ७३१ ॥

ततो विहृत्य चान्यत्र, भरतपुरनामके ।
नगरे च समायाताः, गुरवो गुणशालिनः ॥ ७३२ ॥

तत्रत्य श्राद्धवर्गेण, भक्तिभावः प्रदर्शितः ।
व्रतनियमकर्त्तव्ये, सर्वे जाताः परायणाः ॥ ७३३ ॥

चतुर्थं च व्रतं कैश्चित्कैश्चिद्विंशतिस्थानकम् ।
ज्ञानाराधनरूपा च, पञ्चमी स्वीकृता तदा ॥ ७३४ ॥

प्रतिदिनं जिनेन्द्राणां, मन्दिरे भक्तिभावना ।
विशेषतश्च संजाता, उपदेशानुसारतः ॥ ७३५ ॥

दर्शनं मन्दिराणां च, सङ्घेन सह कृतं तदा ।
श्रीमालाः पल्लिवालाश्च, ओशवालाश्च भावुकाः ॥७३६॥

प्रजावर्गेण तत्रापि, आगत्य गुरुसामीपे ।
व्याख्यानाय च विज्ञप्तिः, कृत्वा बहुप्रमोदतः ॥ ७३७ ॥

सप्तदिवसपर्यन्तं, व्याख्यानं परिजायते ।
सर्वजनहितार्थाय, प्रवृत्तिर्महतां खलु ॥ ७३८ ॥

पुरुषार्थाख्यमेकं स्यान्मोक्षसाधननामकम् ।
धर्मसाधनसामग्री, नामकं च तृतीयकम् ॥ ७३९ ॥

मोक्षस्य किं स्वरूपं च, स्याच्चतुर्थं तु भाव्यताम् ।
मार्गाऽनुसारिरूपं वै, पञ्चमं परिज्ञायताम् ॥ ७४० ॥
सर्वधर्मस्वरूपं किं, जैनधर्मः कदाऽभवत् ।
इति सप्तकव्याख्यानं, राजवाट्यां कृतं तदा ॥ ७४१ ॥
प्रजाजनेन संश्रुत्य, अपूर्वां धर्मदेशनाम् ।
कृतं च गुरुसन्मानमभिनन्दनरूपकम् ॥ ७४२ ॥
राजोपदेशलाभाय, गुरुपार्श्वे समागतः ।
योगधर्माख्यशास्त्रेण, बोधितः सुखहेतवे ॥ ७४३ ॥
राज्ञीनां देशनालाभे, राज्ञा च प्रार्थना कृता ।
प्रतिबोधविधानाय, अवरोधे गतास्तदा ॥ ७४४ ॥
मद्यमांसादि वस्तूनामभक्ष्याणां च नाशने ।
हृदयशुद्धिकार्याय, प्रदत्ता देशना खलु ॥ ७४५ ॥
राज्ञीवर्गेण सम्मील्य, त्यागभावः प्रदर्शितः ।
गुर्वाज्ञा मानिता सर्वा, भक्तिभावश्च दर्शितः ॥ ७४६॥
दासदासीगणाश्चैव, त्यजन्ति तादृशं तथा ।
तथा प्रजा यथा राजा, इति न्यायोऽत्र चागतः ॥७४७॥
भरतपुरवास्तव्यान्, प्रतिबोध्यजनांस्तथा ।
विहारो विहितस्तस्माज्जयपुरे गताः किल ॥ ७४८ ॥
जयपुरीय जैनाश्च, पञ्चस्थाने समागताः ।
डोसाग्रामस्य पर्यन्तं, भरतपुरमागताः ॥ ७४९ ॥

पुरप्रवेशकर्त्तव्ये, भक्तिश्च बहु दर्शिता ।
वांठीआमन्दिरस्यैव, पार्श्वे च गुरवः स्थिताः ॥ ७५० ॥
शिवजीरामसाधुश्च, गुरुपार्श्वे समागतः ।
श्रद्धया परिभ्रष्टश्च, कुतर्कपरिपूर्णभाक् ॥ ७५१ ॥
तीर्थश्रद्धानहीनश्च, नैवमन्दिरदर्शकः ।
तपोगच्छीय साधूनां, निन्दकः परिकीर्तितः ॥ ७५२ ॥
कमलविजयाऽऽख्यानां, साधूनां त्रासकारकः ।
चातुर्मासिकमध्ये च, विहारस्तेन कारितः ॥ ७५३ ॥
जयपुराच्च पाल्यां ते, आगतास्तस्य त्रासतः ।
चातुर्मासिककालश्च, शेषस्तत्र समापितः ॥ ७५४ ॥
कमलविजयं ज्ञात्वा, आगतो गुरुपार्श्वके ।
दृष्ट्वा च धर्मसूरीन्द्रं, मानसे चिन्तितं तथा ॥ ७५५ ॥
पण्डितप्रवराश्चैते, काश्यां पठनकारिणः ।
अनेकवादिजेतारः, सर्वदर्शनपारगाः ॥ ७५६ ॥
प्रतिदिनं च व्याख्यानं, श्रोतुमायाति सर्वदा ।
प्रश्नकरणजिज्ञासा, एकदा तेन दर्शिता ॥ ७५७ ॥
सिद्धाचलादि तीर्थस्य, यात्रायाः करणे खलु ।
लाभस्तु नैव दृश्येत, किमर्थं क्रियते ननु ॥ ७५८ ॥
गणधरमुनीनां च, अनन्तानां च मुक्तिता ।
आदिदेवप्रभूणां च, आगतिर्बहुशोभता ॥ ७५९ ॥

पवित्रचरणन्यासैः, पवित्रा धरणीमता।
तस्याः स्पर्शनमात्रेण, तेषां स्मृतिस्तदा भवेत् ॥ ७६० ॥

तस्य तीर्थस्य सद्ध्यानाद्येषां शिवसुखं मतम्।
तद्रजः स्पर्शमात्रेण, स्वान्ते कथं न शान्तिता ॥ ७६१ ॥

शाश्वतिकं सुखं यैश्च, सम्प्राप्तं तीर्थयोगतः।
तत्तीर्थध्यानमात्रेण, कल्याणं न कथं भवेत् ॥ ७६२ ॥

मिथ्यात्वध्वान्तसम्पूर्णं, येषां दृष्टिपथे भवेत्।
तेषां पवित्रतीर्थत्वं, नायाति हृत्पटे खलु ॥ ७६३ ॥

यदि मिथ्यात्वसद्भावः, तव स्वान्ते भवेन्नहि।
तदा कथं च गीतायाः, पाठस्त्वया विधीयते ॥ ७६४ ॥

जैनत्वं तव हृत्पद्मे, मया च नावलोकितम्।
तदा कथं च मन्येऽहं, तदस्ति मानसे तव ॥ ७६५ ॥

इत्यादि प्रश्नचर्चा वै, कृता चातीव तत्त्वज्ञा।
ततोऽनु गुरुदेवेन, तद्भण्डारो विलोकितः ॥ ७६६ ॥

तत्रत्य मन्दिराणां च, दर्शनं भावतः कृतम्।
व्याख्यानं सार्वदेशीयं, कारितं पुरसज्जनैः ॥ ७६७ ॥

पण्डितास्तत्र सम्मील्य, आगता गुरुसन्निकटे।
माध्यस्थ्यां देशनां श्रुत्वा, सर्वे तत्रैव हर्षिताः ॥ ७६८ ॥

जैनधर्मविशङ्कायाः, समाधिः प्रश्नयोगतः।
यथा काश्यां कृतः पूर्वं, तथा चात्रैव भावताम् ॥ ७६९ ॥

राजमन्त्र्यादि वर्गोऽपि, दर्शनार्थं समागतः ।
जैनयोगस्य चर्चाऽपि, तेन तत्र कृता बहु ॥ ७७० ॥

गुरूणामुत्तरं श्रुत्वा, आनन्दितास्तदा समे ।
योगविषयसद्व्याख्या, कारिता तैश्च तत्क्षणे ॥ ७७१ ॥

प्राबल्यं जैनयोगस्य, यादृशं खलु विद्यते ।
तादृशं नैव चान्यत्र, दृश्यते च कदाचन ॥ ७७२ ॥

तच्छ्रुत्वा तत्र वास्तव्याः, जनाः सर्वे प्रहर्षिताः ।
योगलक्षणभेदत्वं, कथितं सविशेषतः ॥ ७७३ ॥

गुलाबचन्द्रनामाख्यः, तेरापन्थिमताऽनुगः ।
चर्चावार्त्ताविधानाय, आगतो गुरुसन्निधौ ॥ ७७४ ॥

प्रतिमापूजने प्रश्नाः, कृता युक्तिविहीनतः ।
उत्तरा युक्तिपूर्वेण, प्रदत्ताः शास्त्रयोगतः ॥ ७७५ ॥

दयादानादिकाश्चैव, प्रश्ना विचित्ररूपतः ।
हास्यादि पोषकाः, सर्वे कृता निर्दययोगतः ॥ ७७६ ॥

हितशिक्षां विनिर्माय, शिक्षाशतकतादिकम् ।
दयादानादि प्रश्नानां, समाधानं कृतं बहु ॥ ७७७ ॥

संस्कृतपाठशालायाः, राजकीयस्य दर्शनम् ।
प्रतिबिंबं च काशीनां, विद्यते नात्र संशयः ॥ ७७८ ॥

न्यायव्याकृतिग्रन्थानां, साहित्यानां तथैव च ।
पठनं पाठनं सर्वं, विद्यते चारुरूपतः ॥ ७७९ ॥

परीक्षायाश्च तत्रैव, स्वातन्त्र्यं परिविद्यते ।
उपाधीनां प्रदानं हि, स्वतंत्रं परिजायते ॥ ७८० ॥
निरीक्ष्य तत्र सर्वं, तद्विज्ञैश्च सह तत्क्षणे ।
शिक्षाप्रदानकार्यं च, विज्ञप्त्या गुरुणा कृतम् ॥ ७८१ ॥
सर्वदेशीयवस्तूनां, सङ्ग्रहो यत्र विद्यते ।
सङ्ग्रहालयनामाख्यं, स्थानं तत्र विलोकितम् ॥७८२॥
सर्वजन्तुगणानां च, संग्रहो यत्र विद्यते ।
चिड़ियागृह नामाख्यं, गृहं सर्वैश्च दर्शितम् ॥ ७८३ ॥
ढुंढको वृद्धिचन्द्राख्यः आर्या शीलविनाशकः ।
आर्या सहैव तद्ग्रामे, वसति धूर्तराट् खलु ॥ ७८४ ॥
ढुंढकसम्प्रदायेषु, सङ्क्लेशस्तेन रोपितः ।
तपागच्छीयभव्यानां, गृहीतं स्थानकं महत् ॥ ७८५ ॥
खरतरतपोगच्छानां च, तत्स्थानकं मतम् ।
तपोगच्छीय साधूनां, विहारः स्वल्पमात्रकः ॥ ७८६ ॥
खरतरीयः साध्वीभिः, श्राविका हृदये किल ।
गच्छनिन्दादिशिक्षायाः पाठश्च पाठितस्ततः ॥ ७८७ ॥
तपोगच्छीय धर्मस्य, विधिविधानकादिकम् ।
श्राविकानां च स्वान्ताद्धि, गतं तु चैकहेलया ॥ ७८८ ॥
निरीक्ष्य तत्र सर्वं, तत्पादलिप्तोपदेशनम् ।
तत्रत्यसंघमुख्याय, दत्तं तु सविशेषतः ॥ ७८९ ॥

१. यशोविजयगुरुकुलस्य सहायार्थं.

उपदेशप्रभावेन, साहाय्यं प्रबलं भवेद् ।
पुनरपि क्रियायां च, सद्भावास्ते दृढाः खलु ॥७९०॥
तपोगच्छीयवर्गेषु, साधूनां पक्षपाततः ।
भिन्नभिन्नाऽनुरागाश्च, संजातास्तत्र भावुकाः ॥ ७९१ ॥
उपदेशेन ते सर्वे, धर्मकार्येषु तत्पराः ।
एकत्रीभूय सांगठ्यं, कुर्वन्ति तत्र प्रेमतः ॥ ७९२ ॥
खरतरतपोगच्छानां, मध्ये चैकता कृता ।
मूर्तिपूजकभव्यानामैक्यं च कारितं तदा ॥ ७९३ ॥
स्थानकवासिजैनाश्च, आहूय चैकता कृता ।
श्वेताम्बरीयता तत्र, सर्वेषु विद्यते खलु ॥ ७९४ ॥
परस्परं किमर्थं च, संक्लेशः क्रियते त्वया ।
श्वेताम्बरीय कार्यं च, सम्मील्यं प्रवितन्यताम् ॥ ७९५ ॥
पश्चाद् दिगम्बरीयानां, संगठनं दृढं कृतम् ।
सर्वजैनगृहस्थाना–मैक्यं च स्थापितं तदा ॥ ७९६ ॥
दुलीचन्द्रगृहीत्यागी, तत्कार्ये कुशलो भवेत् ।
स्थानकवासिसाहाय्यं, स्थानकवासिकार्यके ॥ ७९७ ॥
एवं रीत्या च सर्वत्र, जैनानामेकता कृता ।
सर्वकार्यं च संसाध्य, कुर्वन्ति विहृतिं ततः ॥ ७९८ ॥
कृष्णदुर्गाख्यसद्ग्रामे, गुरवश्च समागताः ।
धनरूपादि भव्याश्च, सम्मुखे चागताः समे ॥ ७९९ ॥

तत्रत्य राजसामग्रीं, संयोज्य राजयोगतः ।
पुरप्रवेशकार्यं च, कारितं सर्वसज्जनैः ॥ ८०० ॥

चिन्तामणिप्रभूणां च, पार्श्वेशानां च दर्शनम् ।
अतीव दुर्लभं तत्र, सञ्जातं भाग्ययोगतः ॥ ८०१ ॥

त्रिशतमोशवालानां, गृहसंख्या च विद्यते ।
वैष्णवाः कतिचित्तत्र, जैनाश्च कतिचिन्मताः ॥ ८०२ ॥

चत्वारि मन्दिराण्येव, उपाश्रयास्त्वनेकशः ।
नैकपुस्तकभण्डाराः, प्राचीनतरकाः खलु ॥ ८०३ ॥

तत्रत्य राजमन्त्री च, प्राक्काले जैनधर्मजः ।
देवपूजादिपट्कर्म, कृत्वा न्यायालये गतः ॥ ८०४ ॥

एकदा च नृपेणैव, कृताऽऽज्ञा मंत्रिणः किल ।
वैष्णवं तिलकं कृत्वा, आगन्तव्यं त्वया सदा ॥ ८०५ ॥

मन्त्रिणा कथितं तत्र, श्वः करिष्यामि सर्वथा ।
भाले च तिलकं जैनं, पेट्टोपरि च तत्कृतम् ॥ ८०६ ॥

न्यायालये च मध्याह्ने, यदा मंत्री समागतः ।
भाले न तिलकं दृष्टं, तदा राज्ञा च कोपितम् ॥८०७॥

मदीयं तिलकं कुत्र, जैनं कथं कृतं त्वया ।
मन्त्रिणा शान्तभावेन, तदा पेट्टं तु दर्शितम् ॥ ८०८ ॥

आत्मीयं तिलकं भाले, कृतं मया तु भावतः ।
पेट्टार्थं तिलकं पेट्टे, कृतं तद् दृश्यतां खलु ॥ ८०९ ॥

पेट्टाय तव, भृत्यत्वमात्मीयायैव नो मतम् ।
पेट्टे चातः कृतं ज्ञेयं, इति सर्वं व्यवस्थितम् ॥ ८१० ॥

तच्छ्रुत्वा राजवर्गेण, हसितं तस्य नैपुणात् ।
दृढधर्मानुरागाणां, धर्मः प्राणसमो मतः ॥ ८११ ॥

प्राणान्त्यजति नो धर्मं, धन्यास्ते सत्त्वशालिनः ।
धनार्थं यस्त्यजेत्प्राणान्, स नरोऽधमतां भजेत् ॥ ८१२ ॥

प्रासङ्गेनैव सा वार्ता, कथिता बोधहेतवे ।
प्रकृतं परिकथ्येत, धर्मोद्योतविवृद्धये ॥ ८१३ ॥

शान्तिनाथप्रभूणां च, प्रतिष्ठाकार्यहेतवे ।
श्रीसङ्घैः प्रार्थना तत्र, कृत्वा चातीव भावतः ॥ ८१४ ॥

सद्भावनति बाहुल्यं, सञ्जातं कालयोगतः ।
गुरुदेवस्य हस्तेन, इदं कार्यं भवेद्यदि ॥ ८१५ ॥

तदोन्नतेश्च सन्मार्गः, परिस्फुटः प्रकाशते ।
प्रार्थना गुरुदेवेन, स्वीकृता चातिप्रेमतः ॥ ८१६ ॥

माघकृष्णस्य सप्तम्यां, लग्नं शुभं समागतम् ।
अष्टाह्निकोत्सवाद्यं च, प्रारब्धं भक्तिभावतः ॥ ८१७ ॥

प्रभुभक्तिविधातॄणामाकारितं च मण्डलम् ।
पादलिप्तपुराच्चैव, विद्यार्थिदशकं तदा ॥ ८१८ ॥

अजमेरुपुरात्तत्र, सामग्रीवाद्यवादिका ।
आगतास्तत्क्षणे चान्ये, श्रावका धर्मभावतः ॥ ८१९ ॥

विविधाः प्रभुपूजाश्च, जायन्ते च दिने दिने ।
ढुंढका वैष्णवास्तत्र, आयान्ति धर्मयोगतः ॥ ८२० ॥

रथयात्रादि कृत्यं च, कारितं संघसज्जनैः ।
लोढाकुटुम्बभव्येन, मुख्यतो विहितं खलु ॥ ८२१ ॥

शुभे मुहूर्त्तसद्योगे, प्रतिष्ठा कारिता तदा ।
स्वामिवात्सल्यकृत्यं च, श्रीसंघेन कृतं बहु ॥ ८२२ ॥

जैनगायनमण्डल्याः, नृत्यादि भक्तिभावनाम् ।
दृष्ट्वा जैनेतरास्तत्र, केचिद्धर्मानुयायिनः ॥ ८२३ ॥

केचिन्माध्यस्थभावं च, केचिद्विचारजैनताम् ।
गुरुणामुपदेशेन, धारयन्ति च तत्क्षणे ॥ ८२४ ॥

कुर्वन्ति धर्मसद्रागं, श्रावकहृदये तदा ।
सार्वजनीन सद्व्याख्या, सम्पर्क तत्र जायते ॥ ८२५ ॥

राजकुटुम्बकाः सर्वे, शृण्वन्ति देशनां सदा ।
प्रजावर्गो गुरूणां च, प्रभावेन समागतः ॥ ८२६ ॥

ढुंढकनन्दलालश्च, पूज्यस्तत्र समागतम् ।
लुम्पकागमनं श्रुत्वा, लुम्पकादर्पिता बहु ॥ ८२७ ॥

नैकलुम्पकभव्याश्च, जाता मन्दिरमार्गिणः ।
प्रभुभक्तिं प्रकुर्वन्ति, शुद्धधर्मानुरागतः ॥ ८२८ ॥

रणजिद् मल्लकर्भावादेकदा गुरुसम्मुखे ।
आगत्य लिखितं हस्तैः, महामाप्यं प्रदर्शितम् ॥ ८२९ ॥

सुन्दरलिपिसम्बद्धं, सम्पूर्णं च समर्पितम् ।
द्वितीयदिवसे सिद्धहेमटीका प्रदर्शिता ॥ ८३० ॥

गुरुणा कथितं तत्र, कीयदस्तीति कथ्यताम् ।
तेनोक्तं मम पार्श्वे च, हस्तलिखितपुस्तकम् ॥ ८३१ ॥

बहुसंख्यं च विद्येत, आगत्य परिदृश्यताम् ।
यदि च भवतां तत्र, प्रयोजनं प्रजायते ॥ ८३२ ॥

तदा पुस्तकसर्वस्वं, तुभ्यं दास्यामि सर्वथा ।
गुरुणा तत्र गत्वैव, भाण्डागारं विलोकितम् ॥ ८३३ ॥

प्राचीनजीर्णप्रायं च, दृष्ट्वा स्वान्ते विचारितम् ।
द्वादशलक्षश्लोकानां, परिमाणं च विद्यते ॥ ८३४ ॥

तादृशानेकभण्डाराः, कीटकैः कवलीकृताः ।
अयं सुश्रावको ज्ञेयः, भवभीरुश्च सर्वथा ॥ ८३५ ॥

अन्यथा ग्रन्थभण्डारं, कथं च दर्शयेत्खलु ।
समर्प्य गुरुदेवानां, प्रार्थना च कृता तदा ॥ ८३६ ॥

ढुंढकत्वं परित्यक्तं, प्रभो ! तवोपदेशतः ।
त्वच्चरणस्य सेवाऽपि, सम्प्राप्ता पुण्ययोगतः ॥ ८३७ ॥

अद्य मे सफलं जन्म, अद्य मे सफला क्रिया ।
गुरुदेवप्रसादेन, सर्वं भद्रं भविष्यति ॥ ८३८ ॥

सम्पूर्णग्रन्थभण्डारः, गृहीतो गुरुणा तदा ।
शिष्यरूपेण स्वीकारः, तस्यापि गुरुणा कृतः ॥ ८३९ ॥

ढुंढकसाधुना सार्कं, शास्त्रार्थो मङ्गलेन वै ।
कृतस्तस्यैव सत्स्थाने, विशुद्धयुक्तिपूर्वतः ॥ ८४० ॥

मुहपत्तेश्च चर्चाऽपि, बन्धनविषये खलु ।
सूत्रे न लिखितं किञ्चित्कथं त्वया च बध्यते ॥८४१॥

बन्धविरुद्धपाठाश्च, आचाराङ्गे प्रदर्शिताः ।
बन्धनविधिपाठाश्च, दृश्यन्ते न कदाचन ॥ ८४२ ॥

दशवैकालिके सूत्रे, पञ्चमाध्ययने खलु ।
निषेधपाठता ज्ञेया, न तु बन्धविधानके ॥ ८४३ ॥

मूर्त्तिपूजाप्रकाराश्च, सूत्रेषु च पदे पदे ।
कथं भगवतां चैव, दर्शनं न विधीयते ॥ ८४४ ॥

चौर्यकार्यविधाता यः, स्वास्यं स नैव दर्शयेत् ।
स्वास्यं त्वयाऽपि नो चैव दर्शितं येनकल्प्येत ॥ ८४५ ॥

ईशपूजा विधानादि, त्वया सर्वं विलुम्पितम् ।
अतस्त्वमपि चौरोऽसि, कथं स्वास्यं प्रदर्शयेत् ॥ ८४६ ॥

इत्यादि सर्ववार्त्ताऽपि, सञ्जाता जनसम्मुखे ।
पलायितं ततस्तेन, उत्तराऽभावतस्तदा ॥ ८४७ ॥

सत्यस्य विजयस्तत्र, असत्यस्य प्रहानिता ।
संजाता कृष्णदुर्गेषु, राज्ञा चानुमतं तथा ॥ ८४८ ॥

गुरुकुलस्य साहाय्यं, तत्रापि च कृतं बहु ।
ततो विहृत्य गच्छन्ति, गुरवोऽन्यत्र भावतः ॥ ८४९ ॥

द्वापञ्चाशल्लिपीनां च, विधानं परिदर्शितम् ।
प्राक्काले यादृशी चासीत्तादृग् लिपिर्विलोकिता ॥८६८॥

ब्राह्मीलिपिप्रकारश्च, तथैव परिदर्शितः ।
शिलालेखादिसामग्री, दर्शिता बहुप्रेमतः ॥ ८६९ ॥

गुरुबुद्धिं च कृत्वैव, गुरुषु धर्मयोगतः ।
विशुद्धहृदयेनैव, सर्वं तत्रैव दर्शितम् ॥ ८७० ॥

हस्तिकुण्ड्याश्च सम्प्राप्तः लेखः प्रत्नतमः खलु ।
वीरनिर्वाणतः पश्चाच्चतुरशीति वत्सरे ॥ ८७१ ॥

लिखितस्तत्र विद्येत मुद्रितो जैनशासने ।
ऊहापोहश्च तत्पत्रे कृतश्चातीव प्रेमतः ॥ ८७२ ॥

कोल्वीनो राजपूतानाऽधीशस्तत्र समागतः ।
डोक्टरस्टोमसानां च दलं चैकं समागतम् ॥ ८७३ ॥

अर्बुदगिरियात्रायै करणेच्छा विवर्धते ।
किन्तु तत्र विदेशीयाः उपानहौ विधाय च ॥ ८७४ ॥

गच्छन्ति जैनचैत्येषु, आशातना ततो भवेत् ।
भवन्मन्दिरमध्ये च, शिरस्त्राणं विधाय च ॥ ८७५ ॥

गन्तव्ये च यथा युष्मद्दोषापत्तिः प्रजायते ।
तथैव जैनचैत्येषु, उपानहि च दोषता ॥ ८७६ ॥

अतो भो ! मित्रः केनापि, उपायेन निषिध्यताम् ।
यतोऽपि मानसे शांतिः, सर्वथा परिजायते ॥ ८७७ ॥

इति विलिख्य पत्रं च, लन्दने परिप्रेषितम् ।
उत्तरं चागतं तत्र, सर्वं भद्रं भविष्यति ॥ ८७८ ॥
कोल्बीनसाहबाग्रे च, गत्वा सर्वं निवेद्यताम् ।
ततश्च कार्यसिद्धिश्च, क्षिप्रं हि परिजायते ॥ ८७९ ॥
गुरुदेवादिश्राद्धाश्च, मीलनाय समागताः ।
गुरूणामागतिं श्रुत्वा, आनीता निजवेश्मनि ॥ ८८० ॥
वेत्रासनोपविश्यैव, कुर्वन्ति च कथां शुभाम् ।
अर्बुदगिरिवार्त्ता च, चर्चिता साहबेन च ॥ ८८१ ॥
युक्तिपूर्वं च संज्ञाप्य, उत्तरं मार्गितं तदा ।
महाशयेन सम्प्रोक्तं, यात्रा सुखेन तन्यताम् ॥ ८८२ ॥
निष्कण्टकं च सर्वं तत्सञ्जातं भवतां खलु ।
भवतां गमनात्प्राक् च, आदेशश्चागमिष्यति ॥ ८८३ ॥
धन्यवादं च दत्त्वैव, ततश्च गुरवो गताः ।
सर्वश्रावकवर्गाणां, मानसे तोषता बहु ॥ ८८४ ॥
गुरूणां बुद्धिचातुर्यं, संवीक्ष्य तत्र भावुकाः ।
चातुर्मासाय विज्ञप्तिः, कृता चातीव भक्तितः ॥ ८८५ ॥
नयानगरवास्तव्याः, श्राद्धास्तत्र समागताः ।
प्रतिष्ठादि विधानाय, विज्ञप्ता गुरवश्च तैः ॥ ८८६ ॥
अजयमेरुसङ्घेन, सम्मतिस्तत्र दर्शिता ।
स्वीकृत्य प्रार्थना तेषां, ब्यावरे गुरवो गताः ॥ ८८७ ॥

अजयमेरुसद्ग्रामाच्छ्रावकास्तत्र चागताः ।
तदर्थं प्रार्थना तैश्च, कृता विनम्रगात्रतः ॥ ८५० ॥

हीराचन्द्रादि सूचन्त्यः, ढड्ढा मुत्तादिकास्तथा ।
भटंगतिकल्लूणीयाः, इत्यादि श्रावका मताः ॥ ८५१ ॥

अतीव प्रेमपूर्वेण गुरुं, नयन्ति तत्स्थले ।
लाखिणकोटडीमध्ये, प्रवेशयन्ति भावुकाः ॥ ८५२ ॥

पुरप्रवेशकर्त्तव्यं, कुर्वन्ति भक्तिभावतः ।
नगरं भूषितं तैश्च, वाद्यादिघोषपूर्वकम् ॥ ८५३ ॥

मन्दिरदर्शनं तत्र, गत्वा कृतं च प्रेमतः ।
देशनादानपूर्वं च, मङ्गलं श्रावितं तदा ॥ ८५४ ॥

सार्वजनीन सद्व्याख्या, याचना चान्यसज्जनैः ।
कृता च गुरुदेवानां, निकटे बोधहेतवे ॥ ८५५ ॥

जगत्केन कृतं चेति, आरेका सर्वमानसे ।
श्रुतिस्मृतिप्रमाणेन, समाधानं विधीयताम् ॥ ८५६ ॥

आर्यसमाजिभिः सर्वैः, ईश्वरेण जगत्कृतम् ।
इत्येवं घोषितं तैश्च, श्रुत्वा शङ्का च मानसे ॥ ८५७ ॥

सर्वेषां तत्र सञ्जाता, व्याख्याने स्पष्टताभवेद् ।
सार्वजनीनव्याख्याने, समाधानं कृतं बहु ॥ ८५८ ॥

---

१. भडगतीया ।

तत्त्वाख्याने च पूर्वार्द्धे, नैयायिकस्य दर्शने ।
पूर्वपक्षः कृतस्तैश्च, उत्तरं युक्तिपूर्वकम् ॥ ८५९ ॥
साङ्ख्या वेदान्तिका बौद्धाः, जैना मिमांसकास्तथा ।
जगत्कर्त्तृत्वरूपेण, मन्यन्ते चेश्वरं न हि ॥ ८६० ॥
नैयायिकाश्च वैशेपिकाश्च कर्तृत्ववादिनः ।
अन्ये लपोरशङ्काश्च, वावदुकाश्च केवलाः ॥ ८६१ ॥
मनुस्मृत्यादिशास्त्रेपु, यः प्रकारः प्रदर्शितः ।
तस्यैव प्रतिकारश्च, गुरुकर्त्तृकपुस्तके ॥ ८६२ ॥
तच्छ्रुत्वा श्रावकाः सर्वे, जैनेतराश्च भावुकाः ।
निःशङ्कमीश्वरं चव, मन्यन्ते ध्यानहेतवे ॥ ८६३ ॥
ध्याता ध्यानं तथा ध्येयं, त्रिपुटी चैकरूपतः ।
सञ्जाता यस्य भव्यस्य, तस्य दुःखं न विद्यते ॥ ८६४ ॥
मूर्त्तिविपयशङ्कायाः, समाधानं कृतं तथा ।
अवश्यं प्रभुमूर्त्तिश्च, मन्तव्या ध्यानकांक्षिणा ॥ ८६५ ॥
प्राच्यलिप्यादि विज्ञेन, हीराचन्द्रेण[2] तत्क्षणे ।
आगत्य गुरुदेवाश्च, सङ्ग्रहालयेः प्रार्थिताः ॥ ८६६ ॥
गुरवः साधुना सार्कं, श्राद्धवर्गेण संयुताः ।
गताश्च संग्रहस्थाने, क्रमशः दर्शितं तथा ॥ ८६७ ॥

१. धर्मदेशनायाम् । २. हीराचंद गौरीशंकर ओझा.

॥ इति श्रीशास्त्रविशारद जैनाचार्य जगत्पूज्य जङ्गम
युगप्रधान पूज्यपाद गुरुदेव श्रीविजयधर्मसूरीश्वर-
चरणारविन्देन न्यायविशारद-न्यायतीर्थोपा-
ध्याय मङ्गलविजयेन विरचिते धर्मजीवन-
प्रदीपेऽवशिष्ट काशिप्रकरणायोध्या-
लखनौकानपुराग्रामथुरावृन्दारावन-
भरतपुर जयपुर कृष्णदुर्गाजयमेरु-
प्रभृति नगरविहारवर्णन-
नामा चतुर्थः परिच्छेदः
समाप्तः ॥

## पञ्चम परिच्छेदः प्रारभ्यते

आदिदेवं नमस्कृत्य, धर्मजीवनदीपकम् ।
अवशिष्टं निगद्येत, भव्यानां बोधहेतवे ॥ १ ॥

उदयचन्द्रमुख्याश्च, धूलचन्द्रादयः खलु ।
ओघडभाइसच्छ्राद्धाः, कुन्दनमल्लभावुकः ॥ २ ॥

सर्वेषां श्रावकानां च, प्रतिष्ठा हेतुयाचना ।
स्वीकृता गुरुदेवेन, जनकल्याणहेतवे ॥ ३ ॥

वैशाखशुक्लपञ्चम्या, दिनोनिर्द्धारितस्तदा ।
प्रतिष्ठा सर्वसामग्री, श्रावकैस्तत्र संचिता ॥ ४ ॥

राजधन्यपुरात्रैका, मण्डली तत्र चागता ।
शुद्धविधिविधानादि, कार्यं तया च कारितम् ॥५॥

पादलिप्तपुराच्चैव, गीतगायनमण्डली ।
अपरा च समायाता, पूजायां रसदा किल ॥ ६ ॥

मरुदेशीय भव्याना—मागतिस्तत्र जायते ।
नूतननगरं जात—मागन्तुकसुयोगतः ॥ ७ ॥

अष्टाह्निकोत्सवार्थं च, प्रारब्धं शुभयोगतः ।
समवसरणं तत्र, कोठारिणोपदीकृतम् ॥ ८ ॥

सौवर्णं राजतं शुभ्रं, मनोहरं विराजते ।
मण्डपमध्यभागे च, क्रियाकाण्डं नियोजितम् ॥ ९ ॥
चतुःषष्टिप्रकारा च, द्वादशव्रतपूजनम् ॥
सप्तदशप्रकाराऽपि, पूजाविधिर्विधीयते ॥ १० ॥
अष्टदिवसपर्यन्तं, स्वामिवात्सल्यता भवेत् ।
भक्तिभावविधानं च, सर्वं संघेन कारितम् ॥ ११ ॥
भेदभावस्य नामापि, तदा किंचिन्न विद्यते ॥
सर्वैश्च जैनधर्मज्ञैः, प्रतिष्ठा कारिता शुभा ॥ १२ ॥
स्थानकवासिनः श्राद्धाः, दिगम्बराश्च श्रावकाः ।
सर्वे च तत्र सम्मील्य, कार्यं कुर्वन्ति सादरम् ॥ १३ ॥
रात्रौ च भावना भक्तिः, प्रभूणां निकटे खलु ।
प्रतिदिनं प्रजायेत, सर्वेषां सुखहेतवे ॥ १४ ॥
गुरुकुलाय साहाय्यं, पादलिप्तस्थिताय च ।
सप्तसहस्रसंख्याकं, रूप्यकानां प्रदापितम् ॥ १५ ॥
पशुशालासु साहाय्यं, पञ्चसहस्रमानकम् ॥
नयानगरवास्तव्यैः, श्रावकैश्च कृतं तदा ॥ १६ ॥
अतिवृष्टयादि कार्याय, पादलिप्तनिवासिनां ।
पञ्चसहस्रसंख्याकाः, रूप्यकाः प्रेषितास्तदा ॥ १७ ॥
तत्रत्य पाठशालायाः, कृते साहाय्यपुष्कलम् ॥
भावुकैः श्रावकैर्दत्तं, कुन्दनादि महाशयैः ॥ १८ ॥

धूलचन्द्रेण सत्स्थानं, स्वकीयं च समर्पितम् ।
इत्यादि बहुकार्याणि, जातानि व्यावरे खलु ॥ १९ ॥

नग्नाटो म्होरिलालाख्यः, कतिभिः श्रावकैः सह ।
धर्मचर्चाविधानाय, आगतो गुरुसन्निधौ ॥ २० ॥

सप्तभंग्यां च शङ्कायाः, स्थानं तेन प्रदर्शितम् ।
न्यूनाधिकत्वभंगानां, आशंका तेन तत्क्षणे ॥ २१ ॥

समाधानं च तस्याश्च, गुरुणा प्रेमपूर्वकम् ।
परिस्फुटत्व रूपेण, कृतं श्रुत्वा प्रहर्षितम् ॥ २२ ॥

लविजयैः सर्वे, सप्तभङ्गी प्रदीपके ।
गुरुनिदेशतां प्राप्य, चर्चितं धर्मयोगतः ॥ २३ ॥

सम्पूर्णनगरे वार्त्ता, प्रसृता चातिवेगतः ।
विद्वांसः साधवश्चात्र, नगरेषु समागताः ॥ २४ ॥

सार्वजनीन व्याख्यानं, सनातनिप्रबन्धतः ।
दामोदरमहामादिकैः श्रुतं च शुद्धप्रेमतः ॥ २५ ॥

व्याख्यानं जैनधर्मस्य, श्रुत्वा केचित्समाजिनः ।
ओशवालाश्च संजाताः, तेषां च जैनधर्मके ॥ २६ ॥

पुनर्दीक्षां विधायैव, आनीता जैनशासने ।
जैनधर्मप्रभावश्च, प्रसृतो व्यावरे तदा, ॥ २७ ॥

आलमचन्द्रलोढाख्यः, मिथ्याभिमानिकः सदा ।
खरतरीय साध्वीनामध्यापकश्च सर्वदा ॥ २८ ॥

सोऽपि तत्र समागत्य, करोति प्रश्नचर्चिकाम् ।
गुरुदेवस्य सौभाग्यं, दृष्ट्वा त्यजति दर्पकम् ॥ २९ ॥
म्होरीलालो यदा पार्श्वे, मङ्गलविजयस्य च ।
पाठाय च समायाति, सोऽपि गच्छति तत्क्षणे ॥३०॥
राजवार्तिकशास्त्रस्य, पाठश्चलति सर्वदा ।
शङ्का समाधिता चैव, क्रियते प्रेमपूर्वकम् ॥ ३१ ॥
मध्याह्ने घटिका तिस्रः, जायन्ते शुद्धपाठने ।
राजवर्त्तिकपाठे च, एकादशजिने तथा ॥ ३२ ॥
अङ्गप्रविष्टकं चैव, बाह्यमनेकभेदकम् ।
सर्वेषांद्रव्यवस्तुनामवकाशः प्रदर्शितः ॥ ३३ ॥
कालाणुसावकासश्च, सूत्रे कथं न दर्शितः ॥
बाह्यमनेकधा प्रोक्तं, कथं त्वया न मन्यते ॥ ३४ ॥
एकादशजिने प्रोक्ताः, मन्यन्ते च त्वया नहि ।
न सन्तीति च सम्प्रोच्य,सूत्रार्थौ लोपितस्तथा ॥ ३५ ॥
अध्याहारस्तु सूत्रे न, कथं त्वया प्रकल्पितः ।
परिषहे क्षुधादीनां, सद्भावे न निषेधता ॥ ३६ ॥
सद्भावे च क्षुधा तेषां, कथं न परिजायते ।
वेदनीयस्य सद्भावे, क्षुधाद्यं जायते खलु ॥ ३७ ॥
क्षुधाद्यं च विलोप्यैव, परमौदार्यदेहकम् ।
कल्पयित्वा च नग्नाटैः नैकासत्यं प्रसेवितम् ॥ ३८ ॥

इत्यादिशास्त्रशङ्काचः, प्रसङ्गे परिदर्शिता ।
तेषां स्वान्ते च सञ्जाता, श्वेताम्बरीयभावना ॥ ३९ ॥

प्रातर्मध्याह्नि सद्बोधः, द्विकालिकं प्रजायते ।
जैनजैनेतरास्तत्र, शृण्वन्ति धर्महेतवे ॥ ४० ॥

ढुंढका ढुंढकत्वं च, केचित्त्यजन्ति भावतः ।
शुद्धश्रद्धां च सम्प्राप्य जाता मन्दिरमार्गिणः ॥ ४१ ॥

धनजीभाइर्शार्शिश्च, मंगलमुनियोगतः ।
धर्मश्रद्धां परिप्राप्य, हिंसां त्यज्यति सर्वथा ॥ ४२ ॥

जैनव्रतादिकं प्राप्य, सचित्तत्यागवान् खलु ।
पीबति जलमुष्णं तत, नमस्कारं न मुञ्चति ॥ ४३ ॥

चातुर्मासिकसम्पूर्णे, सञ्जाते गुरुणा तदा ।
विहृतिर्ज्ञापिता सङ्घे, शोको जातो महान् हृदि ॥ ४४ ॥

परावर्त्य च सम्पूर्णे, चातुर्मासे च तत्रैव ।
दीक्षार्थं चैव विज्ञप्तिः, कृता च वृद्धिचन्द्रकैः ॥ ४५ ॥

सङ्घेन गुरुपार्श्वे च, गत्वा च प्रार्थना कृता ।
गुरुणा शुभयोगेन, निष्कासितं शुलग्नकम् ॥ ४६ ॥

मृगशिरसिशुक्ला च, ततः षष्ठी समुज्ज्वला ।
दीक्षादिनं समायातं, सच्चेन स्वीकृतं तदा ॥ ४७ ॥

इन्द्रमङ्गलसाधूनां, पदवीदानमहोत्सवः ।
अकृत सङ्घमार्येन, अष्टाह्निकः कृतस्तदा ॥ ४८ ॥

अजयमेरुग्रामाश्च, सामग्रीवाद्यवादिका ।
आगता गीतगानादि, मंडली पादलिप्ततः ॥ ४९ ॥

अतीवानन्दपूर्वेण, पञ्चम्या दिवसे खलु ।
उपाध्यायप्रदानं च, इन्द्रस्य कारितं तदा ॥ ५० ॥

प्रवर्त्तकप्रदानं च, मङ्गलस्य कृतं च तैः ।
विधिविधानकार्यं च, गुरुदेवेन कारितम् ॥ ५१ ॥

वस्त्रकम्बलवस्तूनामुपहारोऽति वेगतः ।
आगतो गुरुदेवेन, स्वल्पकं स्वीकृतं तदा ॥ ५२ ॥

अपरेषां निषेधोऽपि, कृतः सम्यक्तया च तैः ।
उपदेशप्रदानं च, साधूनुद्दिश्य सर्वथा ॥ ५३ ॥

भवतां यादृशी पदवी, दत्ता सङ्घेन प्रेमतः ।
योग्यस्य योग्यतांमत्वा, गुरुणाऽप्यनुमोदिता ॥ ५४ ॥

भवच्छिरसि तादृक्षी, धर्मरक्षा समागता ।
हस्तिभिर्हस्तिभारो हि, उह्यते नापरैस्तथा ॥ ५५ ॥

तथा शासनभारोऽपि, शासनहितकांक्षिभिः ।
उह्यते नापरै जीवैः, इति मनसि चिन्त्यताम् ॥ ५६ ॥

केवलिविरहे धर्मभार, आचार्यपुङ्गवैः ।
ऊहृयते खलु तद्भारः, तद्विरहे च पाठकैः ॥ ५७ ॥

शिष्याणां पाठकत्वेन, पाठकता च शोभते ।
धर्मप्रवर्तकत्वेन, प्रवर्त्तको निगद्यते ॥ ५८ ॥

तित्थयरो समो सूरि, पाठके तस्य योग्यता ।
अन्यथा पाठको नैव, कथ्यते धर्मयोगतः ॥ ५९ ॥
श्रावकानां च धर्मोपदेशो ऽपिगुरुणा कृतः ।
प्रभावनां गृहीत्वैव, सर्वे स्वस्वगृहे गताः ॥ ६० ॥
प्रातःकाले च वार्षिक-दानमहोत्सवः कृतः ।
सकलसङ्घभव्यैश्च, रूप्यानां संचयः कृतः ॥ ६१ ॥
त्रिकमलालक श्राद्धः, राजवन्यात्समागतः ।
अतीव हर्षयोगेन, उत्साहस्तेन वर्धितः ॥ ६२ ॥
दादावाटीसमीपे च, मण्डपो योजितस्तदा ।
तन्मध्ये तत्प्रदानस्य, कार्यं च क्रियते खलु ॥ ६३ ॥
दीक्षायात्रा यदाऽऽयाता, मण्डपनिकटे तदा ।
जयभद्रेति घोषाणां, ध्वनिस्तत्र प्रजायते ॥ ६४ ॥
सिंहासनोपविश्यैव, दीक्षादानादि सत्क्रिया ।
प्रारब्धा विधियोगेन, वृद्धिचन्द्रस्य हेतवे ॥ ६५ ॥
धर्मध्वजसमादाने, त्रिकमलालनर्त्तनम् ।
दृष्ट्वा सर्वैश्च सम्प्रोक्तं, धन्यस्तस्यैव जन्मनः ॥ ६६ ॥
पुत्रदीक्षा प्रदाने च, पितृणां नर्त्तनं खलु ।
अद्यैव मरुदेशेषु, सञ्जातं भाग्ययोगतः ॥ ६७ ॥
पितृणा शोचितं तत्र, सोऽयं मत्सुत उच्यते ।
यस्य कल्याणमार्गोऽपि, मम दृष्टौ समागतः ॥ ६८ ॥

नैकजन्मनि वैवाहकृत्यं च कारितं मया ।
दीक्षाकृत्यं च वृद्धीनां, मद्धस्ते प्रथमं मतम् ॥ ६९ ॥

पितुर्हर्षाच्च पुत्राणामानन्दो, नैव मायते ।
नर्तनं तेन तत्रैव, कृतं चातीव भावतः ॥ ७० ॥

स्नानादिकां क्रियां कृत्वा, साधुवेषो धृतस्तथा ।
गुरुपार्श्वे समागत्य, प्रारब्धा च क्रिया तदा ॥ ७१ ॥

नामनिक्षेपकर्त्तव्ये, विशालविजयेति च ।
अभिधा गुरुदेवेन, कृता विशालभावतः ॥ ७२ ॥

वासक्षेपादिकं सर्वं, कृतं सङ्घेन तत्क्षणे ।
धूलचन्द्रेण तत्रैव, आगत्य गुरुपार्श्वके ॥ ७३ ॥

वासक्षेपस्तु चास्मभ्यं, दीयतां गुरुनामतः ।
मङ्गलविजयः साधुः, गुरुत्वेन कृतो मया ॥ ७४ ॥

तद्धस्ताद्वासक्षेपश्च, क्रियते संघसामीपे ।
गुरोराज्ञां च सम्प्राप्य, सर्वभद्रं भविष्यति ॥ ७५ ॥

गुरुनिदेशतस्तत्र, मङ्गलविजयेन वै ।
वासक्षेपः कृतस्तस्य, धूलचन्द्रस्य मस्तके ॥ ७६ ॥

नालिकेरादि वस्तूनां, प्रभावना प्रजायते ।
उपदेशादिदानेन, कार्यं सर्वं समापितम् ॥ ७७ ॥

ततो विहृत्य चम्पालालस्यैव वाटिकां गताः ।
नयानगरवास्तव्याः, प्रजाः सर्वाः समागताः ॥ ७८ ॥

अन्तिमदेशनां दत्त्वा, गुरवो मौनमाश्रिताः ।
राज्यादिकमहाभागैः, उत्थाय परिजल्पितम् ॥ ७९ ॥

गुरुदेवप्रसादेन, नैककार्यं प्रजायते ।
जैनेतरीय वर्गेषु, जाता चापूर्वलाभता ॥ ८० ॥

भेदभावश्च त्वत्स्वान्ते, मनाग् नैव प्रदृश्यते ।
भवादृशां च साधूनां, पुण्येन दर्शनं भवेत् ॥ ८१ ॥

परोपकारकर्तृणां, जैनेतरीय वर्गके ।
भेदभावं विना चैव, कर्त्तव्यं क्रियते खलु ॥ ८२ ॥

योग्यानां योग्यपदवीनां, दानं यदा विधीयते ।
इति विचारसंवीय, सज्जनानां प्रजायते ॥ ८३ ॥

अनुमतं च तत्सर्वैरारब्धं शुभयोगतः ।
दानवीरस्य पदवी सा, कोठारिणे प्रदीयते ॥ ८४ ॥

धर्मरत्नस्य पदवी च, धूलचन्द्राय मन्यते ।
धर्मभूषणपदव्याश्च, ओवदस्य प्रदापनम् ॥ ८५ ॥

भारतभूषणं चैव, राठिने च समर्प्यते ।
वैद्यभूषणपदवी च, तनसुखाय दीयते ॥ ८६ ॥

सोजतग्रामपर्यन्तं, श्रावकाः सर्वे चागताः ।
मुंडारातीर्थस्थानेषु, यात्रा कृता च भावतः ॥ ८७ ॥

त्रिदयदिनपर्यन्तं, सम्मीलनं प्रजायते ।
ततश्चण्डावरं गत्वा, सोजतं च समागताः ॥ ८८ ॥

गणेशीलालसिंध्याद्याः, श्रावका गुरुसम्मुखे ।
अमृतसिंहसार्धं च, अग्रे कृत्वा समागताः ॥ ८९ ॥

अतीव भक्तिपूर्वेण, पुरप्रवेशनं कृतम् ।
तत्रत्य मन्दिराणां च, दर्शनं भावतः कृतम् ॥ ९० ॥

नीलवर्णमयी पार्श्वप्रभूणां मूर्त्तिदर्शनम् ।
अद्यैव सर्वसाधूनां, संजातं भाग्ययोग्यतः ॥ ९१ ॥

साहित्यमीलनं चात्र, कर्त्तव्यमिति याचना ।
सङ्घस्य गुरुदेवेन, स्वीकार्या सर्वथा मता ॥ ९२ ॥

अत्याग्रहस्य पूर्वेण, यदा कृता च याचना ।
तदा च गुरुवर्येण, स्वीकृता लाभदृष्टितः ॥ ९३ ॥

साहित्यपत्रकार्यादि, प्रारब्धं तत्र भावुकैः ।
निबन्धनादिकं सर्वं, याचितं विज्ञयोगतः ॥ ९४ ॥

याकोबीनां च प्रामुख्ये, सम्मेलनं प्रजायते ।
इति वार्ता च सर्वत्र, प्रसृता जगती तले ॥ ९५ ॥

अमृतविजयस्यैव, रोगोत्पत्तिः प्रजायते ।
अधोमार्गेण रक्तानां, पतनं वहुशो भवेत् ॥ ९६ ॥

उपचारप्रयोगश्च, सङ्घेन कारितो बहु ।
तथापि तस्य शान्तिश्च, न जाता दैवयोगतः ॥ ९७ ॥

स्वर्गवासश्च तस्यापि, तत्रैव परिजायते ।
गुरुदेवप्रभावेन, समाधिपूर्वकः खलु ॥ ९८ ॥

रत्नविजयसाधूनां, तदा ज्वरः प्रजायते।
अतीव कष्टता तत्र, सञ्जाता वैद्यकर्मतः ॥ ९९ ॥
वैयावृत्यकरः साधुः, मङ्गलस्तत्र योजितः।
वैद्यस्य चोपचारेण, सातोदयस्य योगतः ॥ १०० ॥
सञ्जाता रोगशान्तिश्च, अशक्तिबहुलं तदा।
योद्धपुरीय सङ्घस्य[1], नेतारस्तत्र चागताः ॥ १०१ ॥
साहित्यमेलनं चात्र, जायते न कदाचन।
यादृशी सर्वसामग्री, योद्धपुरेषु युज्यते ॥ १०२ ॥
तादृशी मरुदेशेषु, नान्यत्र मील्यते क्वचिद् ॥
राज्ञां च संमतिर्योद्धपुरे च सर्वथा खलु ॥ १०३ ॥
अतोऽत्र नैव कर्त्तव्यं, साहित्यमेलनं प्रभो !।
आगन्तव्यं च मद्ग्रामे, इत्येवं प्रार्थना मम ॥ १०४ ॥
गुरुणा तत्र सम्प्रोक्तं, यद्यत्रत्यस्य सम्मतिः।
योद्धपुरे च कर्त्तव्ये, अस्ति चेत्सर्वथा शुभम् ॥ १०५ ॥
सोजतग्रामवास्तव्याः, श्राद्धाश्च प्रार्थितास्तदा।
लाभालाभौ परिज्ञाय, दत्ता तैः सम्मतिः किल ॥१०६॥
अत्युत्साहप्रपूर्वेण, सम्मतिमीलने खलु।
योद्धपुरे समानन्दः, सर्वत्र परिजायते ॥ १०७ ॥
अष्टादशैव साधूनां, विहारो योद्धपुरे भवेत्।
पुरप्रवेशकार्यं च, प्रजाजनेन कारितम् ॥ १०८ ॥

१ स्थानीक संघस्य.

राज्ञां च वाद्यसामग्री, अन्यापि तत्र योजिता ।
अपूर्वाऽऽनन्दपूर्वेण, कृतं प्रवेशकार्यकम् ॥ १०९ ॥

उपाश्रये च माङ्गल्यं, श्रावितं गुरुणा तदा ।
आगत्युद्देशता तेषां, कथिता देशनाक्षणे ॥ ११० ॥

सर्वेषां हितकार्याय, एका सभा कृता खलु ।
सार्वजनीन व्याख्यानं, तद्द्वारा परिजायते ॥ १११ ॥

वैष्णवा लुम्पकाः सर्वे, मन्दिरमार्गिणस्तथा ।
ओशवालाश्च तत्रैव, कार्यकरणतत्पराः ॥ ११२ ॥

भेदभावं च विस्मृत्य, साहित्यकार्यसेविनः ।
संजाता गुरुयोगेन, ऐक्यं च तत्र स्थापितम् ॥ ११३ ॥

साहित्यकार्यसेवायां, साहाय्यं भवतां यदि ।
मील्यते च तदा तत्र, सुचारु रूपता भवेत् ॥ ११४ ॥

मनोवाक्कायसम्पत्तिः, सर्वं तव समर्पितम् ।
तवाऽधीना वयं सर्वे, संजाता गुणरागतः ॥ ११५ ॥

सर्वेषां जैनभव्यानामानन्दः परिवर्धते ।
अष्टाह्निकोत्सवश्चैव, तत्रैव योजितस्तदा ॥ ११६ ॥

सम्मेतशिखरस्यैव, रचना कारिता शुभा ।
आमंत्रणं च सर्वत्र, प्रेषितं शुभभावतः ॥ ११७ ॥

प्राघुर्णकस्य सत्कारः, अतीव परिजायते ।
दशसहस्रसङ्ख्यस्याका, आगता स्तत्रप्रेक्षकाः ॥ ११८ ॥

योधपुरस्य बाह्येषु, भूभागेषु निरीक्षितम् ।
सभायोग्यं च सत्स्थानं, दर्शितं तत्र सज्जनैः ॥ ११९ ॥
दलबादलनामाख्यं, पटगृहं च याचितम् ।
उत्थाने तस्य साहस्रं, रूप्यानां व्ययता भवेत् ॥ १२० ॥
दशसहस्रसंख्याकं, चैत्रासनं च योजितम् ।
नूतननगरं तत्र, जायते नात्र संशयः ॥ १२१ ॥
महाशयश्च याकोबी, अजमेरे यदाऽऽगतः ।
तदा तत्रत्य लुम्पाकाः, समाजिनश्च मीलिताः ॥१२२॥
व्याख्यानं तैश्च सम्मील्य, तस्यैव तत्र योजितम् ।
दशवैकालिकं सूत्रमाचाराङ्गं च दर्शितम् ॥ १२३ ॥
प्रदर्श्य तन्मुखात्तैश्च, भाषणं कारितं तदा ।
जैनसूत्रस्य मध्ये च, मूर्तिपूजा न दृश्यते ॥ १२४ ॥
अतएव च तत्पूजा, मन्तव्या नैव कथ्यते ।
साहित्यस्य शुभा व्याख्या, कारिता सर्वसंनिधौ ॥१२५॥
इत्येवं भाषणं श्रुत्वा, लुम्पाकाश्च प्रहर्षिताः ।
सर्वत्र घोषितं तैश्च, मूर्तिर्जैनेषु नो मता ॥ १२६ ॥
योद्धपुरीय भव्यानां, पार्श्वे तारः समागतः ।
गृहीत्वा तारपत्रादि, गुर्वग्रे कथितं तदा ॥ १२७ ॥
याकोबीनां च सत्कारः, जैनेन विधीयते ।
अस्माकं खण्डनं तेन, सभामध्ये कृतं खलु ॥ १२८ ॥

गुरुणा तत्र सम्प्रोक्तं, सत्कारश्च विधीयताम् ।
उत्तरस्य विधानं च, अस्माभिः क्रियते बहु ॥ १२९ ॥

त्रिंशत्सूत्रीय पाठाश्च, मूर्त्तिपूजा विधानकाः ।
निष्कासिताश्च तत्रैव, पट्टकोपरिरक्षिताः ॥ १३० ॥

यदा समागतस्तत्र, गुरूणां निकटे खलु ।
विनयानम्रगात्रेण, दर्शनं विहितं गुरोः ॥ १३१ ॥

पट्टकोपरिसूत्राणां, समूहं परिदृश्य च ।
किमिदमिति तेनैव, सम्प्रोक्तं गुरुसम्मुखे ॥ १३२ ॥

गुरुणा तत्र सम्प्रोक्तं, प्रदत्तं भाषणं त्वया ।
तस्यैव प्रतिकारश्च, अत्रैव परिविद्यते ॥ १३३ ॥

जैनसूत्रावलोकं च, विना कृत्वा कथं त्वया ।
जल्पितं जैनसूत्रेषु, मूर्तिपूजा न विद्यते ॥ १३४ ॥

दृश्यतां मूर्तिपूजायाः, पाठाश्च स्थिरचित्ततः ।
पुष्कला मूर्तिपूजायाः, पाठाश्च तत्र दर्शिताः ॥ १३५ ॥

तदा तेनैव सम्प्रोक्तं, मम दोषः समागतः ।
विना सूत्रविलोकं च, सहसा भाषितं तदा ॥ १३६ ॥

गुरुणा तत्र सम्प्रोक्तं, दोषकथनवाक्यतः ।
कार्यसिद्धिर्न जायेत, तारस्तत्र विधीयताम् ॥ १३७ ॥

अपूर्णं मम व्याख्यानं, मुद्रणं नैव तन्यताम् ।
जैनसूत्रेषु मूर्त्तीनां, पूजापाठाश्च पुष्कलाः ॥ १३८ ॥

दर्शिता गुरुवर्येण, तत्रत्यैः छलनं कृतम् ।
दशवैकालिके सूत्रे, आचाराङ्गे तथैव च ॥ १३९ ॥
मूर्तिपूजा न मन्येत, सूत्र द्वयीसु सर्वथा ।
आचारग्रन्थकौतौ च, तत्र पूजा कथं भवेत् ॥ १४० ॥
अन्येषु जैन शास्त्रेषु, पाठाश्च वहवो मताः ।
मदीयं भाषणं नैव, मुद्रीयतां च सर्वथा ॥ १४१ ॥
इत्येवं तारकर्त्तव्ये, लुम्पाका ज्वलिता वहु ।
सर्वा कपटवार्त्ता च, प्रसृता जगतीतले ॥ १४२ ॥
ग्रावाणं च समादाय, शिरः कुटन्ति ढुंढकाः ।
कोलाहलं वृथा कृत्वा, कुर्वन्ति कर्मवन्धनम् ॥ १४३ ॥
मूर्तिपूजकभव्यानां, विजयस्तत्र जायते ।
प्रतिदिनं च भाषायां व्याख्यानं प्रविधीयते ॥ १४४ ॥
संख्या वन्ध, निवन्धाश्च देशान्तरात्समागताः ।
जैनसाहित्य पावित्र्य, पोषका धर्मपोषकाः ॥ १४५ ॥
सतीश्चन्द्रादि विद्वांसः, आगता वंगदेशीयाः ।
गौर्जरा मरुदेशीया, काशीयाः पण्डितास्तदा ॥ १४६ ॥
सर्वेषां भाषणं तत्र, संजातं धर्म हेतवे ।
अन्तिमं गुरुदेवानां, भाषणं तत्र जायते ॥ १४७ ॥
योद्धपुरे वरे तत्र, पारापतादि जन्तूनाम् ।
आपणे मारणं नैषां, क्रियते कर्मचारिभिः ॥ १४९ ॥

निरपराधि जीवानां, हिन्दुराज्ये वधो भवेत् ।
रसातलं च गच्छन्ति, सामर्थ्यानि च सर्वथा ॥ १५० ॥

धिगस्तु ज्ञातृतां तेषां धिगस्तु पौरुषं तथा ।
पारापतादिजीवानां, कुर्वन्ति ये विनाशतां ॥ १५१ ॥

प्रोक्तं ग्रन्थान्तरेः—

रसातलं यातु यदत्र पौरुषं
क्व नीतिरेषाऽशरणोह्यदोषवान् ।
निहन्यते यत्र वलिनाऽति दुर्वलः
ह हा ! महाकष्टमराजकं जगत् ॥ १५२ ॥

क्षत्रियत्वं परिभ्रष्टं, क्लिवत्वं च समागतम् ।
क्षताद्भयाच्च त्राणेन, क्षत्रियत्वं निगद्यते ॥ १५३ ॥

अनाथ नाथता, येषांमशरण्यशरण्यकम् ।
तेषां च हृदि क्षात्रत्वं, विद्यते च सनातनम् ॥

दुर्वलपालनेनैव, अनीतिध्वान्त नाशनात् ।
क्षत्रियत्वं समायाति, अन्यथा न कदाचन ॥ १५४ ॥

फतेसिंहादि राज्ञाश्च, समीपे भाषणं कृतम् ।
श्रुत्वा च कौशलं भूत्वा, निषिद्धं जीवमारणम् ॥ १५५ ॥

अन्येन प्रोक्तं चः—

यवनानां च राज्येषु, षण्मासावधिवर्षके ।
अमारिघोषणं सर्वं, जन्तूनां च हितावहम् ॥ १५६ ॥

हीरसूरीश्वराणां च, उपदेशेन जायते ।
आर्यराजस्य सद्भावे, अहो चित्रं महज्जगत् ॥ १५७ ॥
लज्जास्पदं च तत्स्थान्ते, संजातं धर्मयोगतः ।
मृगयाकरणं सर्वैः निषिद्धं धर्मनोधतः ॥ १५८ ॥
प्रतापसिंहराजाऽपि, लज्जितश्च तथा खलु ।
राजाऽनुपायिभिः सर्वैः, बोधपाठस्तु शिक्षितः ॥ १५९ ॥
जैनसाधुं विना नैव, सत्योपदेशता भवेत् ।
इत्येवं सर्वचित्तेषु, सञ्जातं च दृढं बहु ॥ १६० ॥
गुरूणां भाषणं श्रुत्वा, सर्वे प्रहर्षिताः किल ।
आमन्त्रणं गुरूणां च, राजवाट्या समागमे ॥ १६१ ॥
फतेसिंहादिकैः सर्वैः, मीलित्वा शुद्ध भावतः ।
रावट्यां नयनार्थं च, क्रियते याचना बहु ॥ १६२ ॥
स्वीकृता याचना तेषां, गुरवश्च समागताः ।
सर्वसाधुजनैः सार्धं, रावट्यां चागमत्तदा ॥ १६३ ॥
गुरूणामागतिं श्रुत्वा, कुर्वन्ति शस्त्रशब्दकम् ।
गुरुणा कथितं तादृक्, साधूनां नैव शोभते ॥ १६४ ॥
यच्छब्देनान्यजीवानां, परित्रासः प्रजायते ।
तत्साधूनां न सन्मानं, गण्यते सज्जनैर्जनैः ॥ १६५ ॥
इत्यादि जल्पनं कृत्वा, प्रारब्धा धर्मदेशना ।
राजरागी जनाः सर्वे, शृण्वन्ति बहु भावतः ॥ १६६ ॥

मध्याह्ने देशनां चैव, कुर्वन्ति लाभ योगतः ।
श्रुत्वा सर्वे च हिंसानां तन्वन्ति त्याग भावनाम् ॥ १६७ ॥

मांसाहारमदीराणां, त्यागश्च वार्षिकः कृतः ।
पंचदशदिनानां च, मासे च त्यागता खलु ॥ १६८ ॥

शतशो राजपुत्राश्च, हिंसां त्यजन्ति भावतः ।
राज्ञीवर्गेषु हिंसानां, प्रवेशो नैव विद्यते ॥ १६९ ॥

मांसाहारीय पात्राणां, तद्गृहे न प्रवेशता ।
अतस्ताभिः परं चैव, ब्रह्मचर्यं च याचितम् ॥ १७० ॥

परपुरुषसङ्गो न, अस्माभिः क्रियते कदा ।
लसूनादिकवस्तूनां, त्यागः कृतश्च भावतः ॥ १७१ ॥

महीषहननं तैश्च, निषिद्धं गुरुयोगतः ।
राज्ञां चान्तिमबोधश्च, प्रदत्तः सर्वसन्निधौ ॥ १७२ ॥

दिन द्वयीं च तत्रैव, स्थिरता गुरुणा कृता ।
लाभालाभौ परिज्ञाय आगता गुरवस्तदा ॥ १७३ ॥

गुरुमुखाच्च संश्रुत्य, श्रावका हर्षिता बहु ।
शतशो वर्षपूर्वं च न जातं तादृशं कृतम् ॥ १७४ ॥

वत्सराज महाभागाः आगत्य गुरुदेवकम् ।
व्याख्यानायैव विज्ञप्तिं, कुर्वन्ति स्वगृहाय वै ॥ १७५ ॥

आमन्त्रणं च सर्वेभ्यः, प्रदत्तं तेन तत्क्षणे ॥
श्राद्धाः सर्वे समायाताः तद्गृहे बोधहेतवे ॥ १७६ ॥

विशुद्धजैनरूपत्वं, गतं धर्मवियोगतः ।
अनार्यत्वं समायातं, क्षत्रियाणां कुले खलु ॥ १७७ ॥

रत्नप्रभमुनीनां च, उपदेशात्समागतम् ।
जैनत्वं शुद्धभावेन, प्रापितं सूरिणा तदा ॥ १७८ ॥

राज्ञां च सहवासे वै, नष्टं तत् पापयोगतः ।
उदरार्थं हृतं तद्धि, हा हा ! चित्रं महन्मतम् ॥ १७९ ॥

आत्मीयशुद्धधर्मत्वं, कथं त्वया विनाश्यते ।
त्वत्पूर्वजैश्च यत्नेन, प्रापितं गुरुयोगतः ॥ १८० ॥

वत्सराजैश्च तच्छ्रुत्वा, चिन्तितं मानसे बहु ।
नमस्कारादि मंत्रं च, सम्प्राप्तं गुरुदेवतः ॥ १८१ ॥

पादलिप्तीय शालातः, मण्डल्येका समागता ।
पूजादिसर्वकार्येषु, कुर्वन्ति गीतगानकम् ॥ १८२ ॥

गिरधराख्य छात्रस्य, वक्तृत्वे प्रौढिमा महान् ।
दृष्ट्वा च सर्वसभ्यैश्च, दत्तं च पारितोषिकम् ॥ १८३ ॥

शालायै चागतैः सर्वैः, साहाय्यं च कृतं बहु ।
पञ्चसहस्रसंख्याकं, द्रव्यं समर्पितं तदा ॥ १८४ ॥

निबन्धस्य परीक्षार्थं, सभा चैका नियोजिता ।
यस्य प्रमाणयुक्तः, स्याच्छुद्धः स एव सम्मतः ॥ १८५ ॥

सवकार्यं व्यवस्थापूर्वकं, कृतं च सर्वथा ।
ओसियापुरयात्रायै, तदा हि गुरवो गताः ॥ १८६ ॥

तिवरी ग्राम वास्तव्याः, श्रावका गुरुसन्निधौ ।
आगताः प्रार्थनायैव, कुर्वन्ति याचनां तदा ॥ १८७ ॥

मादृशां पामराणां च, त्वत्समागमकारणात् ।
सम्यग्ज्ञानं प्रजायेत, सद्गुरुणां च बोधतः ॥ १८८ ॥

तेलीवाटकऊकेशनगर्याश्च, महन्मतः ।
प्राचीनं मन्दिरं चात्र, भूमितः प्रकटं भवेद् ॥ १८९ ॥

अतीव सुन्दरं ज्ञेयं, वीरविभोश्च ज्ञायताम् ।
एकं च ग्रामबाह्येषु, दृश्यतेसुमनोहरम् ॥ १९० ॥

प्राक् सर्वमूर्तिपूजायाः, कारकाः श्रावकाः बहु ।
लुम्पकस्योपदेशेन, सञ्जाता–लुम्पकाः कति ॥ १९१ ॥

तेषां सदुपदेशेन, सन्मार्गः परिदृश्यताम् ।
इत्येवं प्रार्थनाऽस्माकं, स्वीक्रियतां च भो गुरो ॥१९२॥

तत्प्रार्थनाऽनुरोधेन, तीवर्यां गुरवो गताः ।
व्याख्यानमण्डपस्तत्र, श्रावकैः परियोजताः ॥ १९३ ॥

जैनजैनेतराः सर्वे, शृण्वन्ति गुरुदेशनाम् ।
समागच्छन्ति लुम्पाकाः, दोषदृष्टित्व धारकाः ॥ १९४ ॥

आगत्य प्रश्न चर्चां च, कुर्वन्ति गुरुसन्निधौ ।
योग्योत्तरं च सम्प्राप्य, हर्षिताः कतिसज्जनाः ॥ १९५ ॥

सूत्रपाठं च निष्कास्य, दर्शयन्ति सुस्पष्टतः ।
येषां मिथ्यात्वबाहुल्यं, ते जना ढुण्ढके स्थिताः ॥१९६॥

अन्ये विशुद्धमार्गेषु, गुरवोऽत्र समागताः।
रत्नविजयसत्साधुः संयमी योगनिष्ठकः ॥ १९७ ॥

ओसियापुरयात्रातः, आगामिष्यति सत्वरम्।
कतिचिद्दिनस्थैर्यं च, करिष्यति च निश्चितम् ॥ १९८ ॥

ततोऽनु सर्वे चोशीया, नगर्यां च समागताः।
वीरविमोश्च मूर्तीनां, दर्शनं च कृतं तदा ॥ १९९ ॥

रत्नप्रभमुनीन्द्राणां, प्रतिष्ठा हस्ततः कृता।
एकस्मिंश्च मुहूर्तेषु, ओशीयाकोरटे तथा ॥ २०० ॥

प्रतिष्ठा द्वयस्थानेषु, एका च मूलरूपतः।
परा वैक्रिय लब्ध्या च, कृता चातीव शुद्धितः ॥ २०१ ॥

प्रभावशालिना तेन, कार्यद्वयी कृता तदा।
तद्धस्तेन कृता ज्ञेया, पावित्र्ये नाऽत्रसंशयः ॥ २०२ ॥

ओशीयानगरीस्था ये, मनुष्या भिन्नधर्मकाः।
उपदेशप्रभावेन, जैनत्वे दीक्षिताः समे ॥ २०३ ॥

द्वादशयोजनायामा, नगरी प्रसृता तदा।
शुद्धचारित्रयोगेन, जैना भवन्ति सर्वथा ॥ २०४ ॥

ओसवालाश्च ज्ञातव्याः, तत्प्रभृतिश्च ते जनाः।
अद्यावधि च तन्नाम्ना, प्रसिद्धिं च भजन्ति ते ॥ २०५ ॥

विभिन्नकुलगोत्रं च, सूरिणा स्थापित तदा।
कुलदेवी च तत्रैव, विद्यते स्वीय स्थानके ॥ २०६ ॥

तत्रस्थराजपुत्रेण, अधुना तत्समीपके ।
क्रियते चाजघातश्च, निर्दयरूपतः खलु ॥ २०७ ॥

गुरूपदेशतः सोऽपि, निषिद्धो राजपुत्रकैः ।
गुर्वाज्ञा च शिरोधार्य, सर्वं तेनैव मानितम् ॥ २०८ ॥

तत्रैव पाठशाला च, रत्नविजयबोधतः ।
गुर्वाज्ञया च पश्चाद्धि, स्थापिता ज्ञानहेतवे ॥ २०९ ॥

गयवराख्यसाधुभिः योगिपार्श्वे तदा खलु ।
शुद्धजैनत्वदीक्षायै, रत्नाख्यः प्रार्थितो गुरुः ॥ २१० ॥

शिष्यत्व मोहहीनत्वाद्दीक्षितो, योगिना नहि ।
रत्नप्रभमुनीन्द्राश्च, गुरवो धारिताश्च तैः ॥ २११ ॥

तादृक्कार्यं च केनाऽपि, कृतं नाद्यावधिः कदा ।
ज्ञानसुन्दरनामापि, धारितं स्वप्रयोगतः ॥ २१२ ॥

चातुर्मासं च रत्नेन, सह कृतं च तत्र वै ।
ततः फलोधिग्रामेषु, कृतं च ज्ञानसुन्दरैः ॥ २१३ ॥

विवेचनं च तादृक्षं, प्रसङ्गतः कृतं तथा ।
गुरवो रत्नसाधुं च, पाल्यां विमुच्य यान्ति च ॥ २१४ ॥

पालिनगरवास्तव्यैः, चान्दमल्लादि भावुकैः ।
स्वागतं धर्मबोधाय, कारितं भक्तिभावतः ॥ २१५ ॥

सिरेमल्लादिलुम्पाकाः तेरापन्थिदृढाः किल ।
द्वाविंशतिश्च तैः प्रश्नाः कृता चाज्ञानभावतः ॥ २१६ ॥

तेरापन्थित्वनाम्नैव, द्वाविंशतेः समुत्तरम् ।
समीक्षा रूपतो ग्रन्थः लिखितो गुरुदेवतः ॥ २१७ ॥
अन्यासामपि शङ्कानां, समाधानं कृतं तदा ।
सार्वजनीनव्याख्यानपञ्चकं, तत्र जायते ॥ २१८ ॥
नवलक्षाख्य चैत्यं च, विद्यते मुख्यरूपतः ।
दर्शनेन जिनेन्द्राणां, पावित्र्यं जन्मनो भवेत् ॥ २१९ ॥
मन्दिराणां च सौन्दर्यं अपूर्वं तत्र विद्यते ।
पालिनिकटभूम्यां, च सुन्दरं मन्दिरं खलु ॥ २२० ॥
नैकानि मन्दिराण्येव, हस्तलिखितपुस्तकम् ।
तत्समूहोऽपि चात्रैव विद्यते ज्ञानबोधदः ॥ २२१ ॥
तेजमल्लादिभव्यानां, हस्ते च ग्रन्थरक्षणम् ।
मन्दिररक्षणं चैव, चान्दमल्लस्य हस्तके ॥ २२२ ॥
धैर्यौदार्यत्वगाम्भीर्यं, तत्रश्राद्धेषु विद्यते ।
धर्मश्रद्धानभावत्वं, विद्यते च मनोहरम् ॥ २२३ ॥
चतुःशती च श्रद्धानां, गृहाणि पालिग्रामके ।
त्रिशती लुम्पकानां च, ज्ञातव्यानि गृहाणि च ॥ २२४ ॥
मन्दिर नव संख्याकं, विद्यते स्वान्तशान्तिदम् ।
ततोऽनुगोडवाडस्य, भूमिषु स्पर्शना भवेद् ॥ २२५ ॥
लुम्पकानां च नो तत्र, प्राबल्यं लेशमात्रकम् ।
मूर्त्तिपूजकभव्यानां, भक्तिभावः समर्गलः ॥ २२६ ॥

शिवगंजाख्य ग्रामेषु, ततो विहृत्य चागताः ।
सप्तशती गृहाणां च, जैनानां तत्र कथ्यते ॥ २२७ ॥

मन्दिर सप्तकं धर्मशालानां सप्तकं तथा ।
ओशवालाऽऽख्य जातीनां, प्राग्वाटानां तथैव च ॥२२८॥

धर्मध्यानेषु प्राचुर्यं, प्राग्वाटानां च विद्यते ।
धर्मे द्रव्यव्ययं चैव, कुर्वन्ति ते च सज्जनाः ॥ २२९ ॥

गुरुदेवस्य सामीप्ये, आगत्य प्रार्थनां तथा ।
वितन्वन्ति च भावेन, सर्वे सम्मील्य सत्वरम् ॥ २३० ॥

चातुर्मासाय विज्ञप्तिः, कृता च धर्मयोगतः ।
वायुप्रभृतिवस्तूनां, सुखदत्वं निगद्यते ॥ २३१ ॥

सर्वेषां धर्मरागस्तु, हृदये चाति सुन्दरः ।
लाभालाभौ च विज्ञाय, चातुर्मासं च निर्णीतम् ॥२३२॥

क्षमानन्द्यां च इन्द्रादेः, सादृयां च मङ्गलादीनाम् ।
न्यायलाभस्य वालीषु, पाल्यां च भक्तिसाधूनाम् ॥२३३॥

योद्धपुरे च रत्नानां, साधूनां प्रणिगद्यते ।
गुरुदेवादिसाधूनां, शिवगञ्जे च सम्मतम् ॥ २३४ ॥

स्वास्थ्यं च गुरुदेवानां, तत्रैव सुन्दरं मतम् ।
सप्तर्षीणां निवासेन, ग्रामेषु सुखशान्तिता ॥ २३५ ॥

यशोराजाख्यभव्येन, विहिता भक्तिभावना ।
रचना पञ्चतीर्थीया, कृता चापूर्वयोगतः ॥ २३६ ॥

योगोद्वहनकार्यं च, साधूनां कारितं तदा ।
सूत्रसिद्धान्तस्वाध्यायः, प्रयत्नो विहितस्तथा ॥ २३७ ॥
द्विवारं देशना तत्र श्रावकेभ्यः प्रदीयते ।
व्रतनियमकार्यं च, बहुधा तत्र जायते ॥ २३८ ॥
सप्तशती गृहाणां च, साद्रयां श्राद्ध कुलस्य वै ।
मन्दिर त्रितयं भव्यं, विद्यते चात्र ग्रामके ॥ २३९ ॥
त्रिलोकदीपकं तस्य, समीपे राणके पुरे ।
मन्दिरं विद्यते, तस्य दर्शनं प्रथमं कृतम् ॥ २४० ॥
चातुर्मासिकमध्ये च, बालिनामाख्यग्रामके ॥
सार्वजनीन सद्व्याख्या, कृता न्यायाख्य साधुना ॥२४१॥
प्रौढव्याख्यानकं, तस्य अहिंसा धर्मपोषकम् ।
श्रुतिस्मृतिकुग्रन्थेषु, हिंसात्वं परिदर्शितम् ॥ २४२ ॥
विना च जैनशास्त्रेषु, नान्यत्र शुद्ध देशना ।
पूर्णरूपेण चाहिंसायाः पोषणं च विद्यते ॥ २४३ ॥
वेदविहित हिंसायाः अहिंसा प्रतिपादनम् ।
महामृषात्व वादोऽयं, कथं मया न कथ्यते ॥ २४४ ॥
नरकहेतुका हिंसा, तत स्वर्गः कथं भवेत् ।
इत्यादि शुद्धरूपेण, कथितं, न्यायसाधुना ॥ २४५ ॥
संन्यासिना च तत्रैव, आगत्य क्रोधपूर्वकम् ।
न्यायस्य मारणार्थेन, प्रयत्नो विहितः खलु ॥ २४६ ॥

श्रीमाला ब्राह्मणाः सर्वे, कुर्वन्ति च सहायताम् ।
वालिस्थाः श्रावकाः सर्वे, भीताः स्वीय गृहेगताः ॥२४७॥

धर्मसङ्कटतां श्रुत्वा, मङ्गलेनैव तत्र वै ।
सादीवास्तव्य भव्याश्च, आहूता स्वीय सन्निधौ॥ २४८ ॥

वालीग्रामस्य वार्त्ताऽपि, सम्पूर्णा कथिता तदा ।
उपदेशस्य वाहुल्याद्वीरत्वं, धारितं तथा ॥ २४९ ॥

श्रावकानां शतं तत्र, गत्वा वाल्याख्यपत्तने ।
वालिस्थ श्रावकानां च, ऐक्यं तैरेव कारितम् ॥ २५० ॥

समस्त गोडवाडस्य, पञ्चकं तत्र मीलितम् ।
मीलित्वा ब्राह्मणानां वै, बहिष्कारश्च कारितः ॥ २५१ ॥

श्रीमाला स्तत्र सम्मील्य सादीग्रामे समागताः ।
मङ्गलविजयानां च, समीपे समुपस्थिताः ॥ २५२ ॥

बहिष्कारश्च नास्माकं, तुभ्यं हि परिशोभते ।
संन्यासिपक्षत्यागश्च, अस्माभिः क्रियते सदा ॥ २५३ ॥

संन्यासि बोधसद्भावे, साधूनां मारणाय च ।
यं उद्यमः कृतस्तस्य, प्रायश्चित्तं विधीयताम् ॥ २५४ ॥

अन्यथा तस्य न्यायार्थं, योद्धपुरे च गम्यते ।
तदास्माकं धनानां च, प्रचुरा व्ययता भवेत ॥ २५५ ॥

वयं त्वदीय गावश्च, उद्धारस्तन्यतां ततः ।
भवद्धस्ते च कल्याणं, नान्यत्र परिजायते ॥ २५६ ॥

मंगलैः शोचितं तत्र, विचार्य कथितं तदा।
जैनविध्यनुसारेण, सर्वा क्रिया च कार्यताम् ॥ २५७ ॥
त्वदीय ज्ञातिपश्चात्तां, प्रायश्चित्तं च दीयते।
गृहीतुं यदि चेच्छा, चेदागम्यतां तदा खलु ॥ २५८ ॥
गोडवाडीय भव्यैश्च सम्मील्य दोषशुद्धिजम्।
प्रायश्चित्तं च शूनां वै शतरूप्यकधान्यकम् ॥ २६० ॥
प्रतिपद्य च तत्सर्वं लिखितं संघपुस्तके।
हस्ताक्षरं च सर्वेषां श्रीमालानां च कारितम् ॥ २६१ ॥
तदा प्रभृति विप्राणां प्राबल्यं च गतं सदा।
संन्यासी च परिभ्रष्टः स्वस्थाने गतवान् खलु ॥ २६२ ॥
मङ्गलस्योपदेशेन सर्वं विघ्नविनिर्गतम्।
सर्वत्र सुखशान्तिश्च सञ्जाता धर्मयोगतः ॥ २६३ ॥
गुरुदेवस्य पत्रेण ज्ञापितं मङ्गलैस्तथा।
अन्यान्यपि च कार्याणि जातानि गोडवाडके ॥ २६४ ॥
होलिकादिकपर्वाणि मिथ्यात्व वर्धकानि च।
शीतलादिकानि त्यक्तानि मंगलस्योपदेशतः ॥ २६५ ॥
प्रतिग्रामं च मिथ्यात्वं त्याजितं धर्मबोधतः।
श्री संघस्य प्रतिग्रामं गुर्व्ये च योजितं तदा ॥ २६६ ॥
अज्ञानस्यैव मांगल्यमंत्रैव परिचियते।
सूरीणां शुद्धबोधेन विनाशितं च सर्वथा ॥ २६७ ॥

टेसीटोर्याख्यविज्ञश्च शिवगञ्जे समागतः ।
सूरीणां दर्शनार्थं च इटली देशतः खलु ॥ २६८ ॥

धर्मचर्चा च तेनैव सार्कं च गुरुणा कृता ।
धर्माधर्मादि तत्त्वानां समाधानं विशुद्धकम् ॥ २६९ ॥

गुरुणा स्फुटरूपेण कृतं चातीव शीघ्रतः ।
सूरीणां बुद्धिकौशल्यं दृष्ट्वा तेन चमत्कृतम् ॥ २७० ॥

पञ्चतीर्थिक यात्रायै सूरिणा विहृतिः कृता ।
प्रतिग्रामं च श्राद्धानां संदोहः सह वर्तते ॥ २७१ ॥

शिवगंजीयभव्याश्च वाल्यां गच्छन्ति तैः सह ।
सादीतो मङ्गलाद्याश्च समागच्छन्ति साधवः ॥ २७२ ॥

सम्पूर्णवालिवास्तव्या आगता गुरुसन्निधौ ।
सम्पूर्णं नगरं तैश्च ध्वजादिभिरलङ्कृतम् ॥ २७३ ॥

देशीया वाद्यसामग्री योजिता भक्ति भावतः ।
व्याख्यानमण्डपश्चैव विशालः परिनिर्मितः ॥ २७४ ॥

जैन धर्मस्य वैशाल्यं सूरिणा तत्र दर्शितम् ।
जैनेतरीय वर्गैश्च क्लेशबीजं च रोपितम् ॥ २७५ ॥

गुरुणा मार्जनं तस्य शुद्धोपदेशतः कृतम् ।
मिथ्यात्व वासना तस्मान्निष्कासिता च वोधतः ॥ २७६ ॥

वालीया वरकाणेषु गच्छन्ति तीर्थधामनि ।
समागच्छन्ति चान्येऽपि तीर्थयात्रां विधित्सया ॥ २७७ ॥

ज्ञातीय पञ्चकं तत्र, आयातं गुरुयोगतः।
गुरुकुलस्य सद्बोधः, प्रदत्तो गुरुणा तदा ॥ २७८ ॥

गुरुकुलस्य कार्याय, सर्वैरिच्छा प्रदर्शिता।
रूप्यकायैव सर्वैश्च, सम्मील्य यत्नता कृता ॥ २७९ ॥

दशसहस्र संख्याकं, वचनं मीलितं तथा।
बीजोवाख्यस्य सद्ग्रामे, पञ्चसहस्रमानकम् ॥ २८० ॥

कुशलपालमुख्यः स्याचांणोदग्रामजः खलु।
ऋषभदासानामाख्यः, अन्ये विभिन्नग्रामजाः ॥ २८१ ॥

सभां कृत्वा च सर्वैश्च, श्रावकैः प्रार्थना कृता।
सप्त सहस्रसंख्यांकं, वचनं तत्र मीलितम् ॥ ॥ २८२ ॥

सामान्यक्लेशसद्भावे, विभेदः प्रतिग्रामके।
प्राग्जातो गुरुबोधेन, त्रूटितस्तत्क्षणे तदा ॥ २८३ ॥

कुव्यवहारमिथ्यात्वविनाशो, गुरुणा कृतः।
पञ्चशतं च सच्छ्राद्धाः, भ्राम्यन्ति गुरुणा सह ॥ २८४ ॥

नाडोलग्रामवास्तव्याः, श्रावकास्तत्र चागताः।
पञ्चतीर्थिक मध्ये च, नाडोलतीर्थरूपकम् ॥ २८५ ॥

पद्मप्रभुजिनेन्द्रस्य, विशालं मन्दिरं तथा।
अतीव प्राच्यता रूपं, दृश्यते चाधुना पुनः ॥ २८६ ॥

विनम्रविग्रहं कृत्वा, मन्दिरे गम्यते समैः ।
नान्यमार्गश्च विद्येत, तत्र गमनहेतवे ॥ २८७ ॥

शान्ताकारस्वरूपाणां, मूर्त्तीनां दर्शनं भवेत् ।
ततोऽनु मन्दिरे गत्वा, दर्शनं च विधीयते ॥ २८८ ॥

सूरिणा मानदेवेन, लघुशान्तिर्विनिर्मिता ।
सङ्घोपद्रवनाशाय, तत्स्थानं चात्र विद्यते ॥ २८९ ॥

पवित्रं तस्य स्थानस्य, दर्शनं गुरुणा कृतम् ।
तत्कालिकी च सा वार्त्ता, हृत्पटे धारिता तदा ॥२९०॥

सप्तभेदाश्च तत्रैव, सङ्घमध्ये भवन्ति वै ।
गुरुणा चोपदेशेन ऐक्यं, तत्रापि स्थापितम् ॥ २९१ ॥

अष्टसहस्रसंख्याकं, वचनं रूप्यकस्य वै ।
तत्रापि मीलितं ज्ञेयं, श्राद्धा सहस्रसंख्यकाः ॥ २९२ ॥

बहिस्थास्तत्र विज्ञेयाः, वात्सल्यं सप्तकं तथा ।
सञ्जातं सङ्घयोगेन, अष्टाह्निकं च बोधतः ॥ २९३ ॥

नाडलाइकतीर्थेषु, विहृत्य गुरवो गताः ।
साधूनां पञ्चतीर्थस्य, यात्रेच्छापरिजायते ॥ २९४ ॥

द्वादशमन्दिराण्येव, शोभन्ते तत्र ग्रामके ।
शत्रुंजयादितीर्थस्य, स्थापना चात्र सम्मता ॥ २९५ ॥

एकस्मिन् पर्वते ज्ञेयं, शत्रुंजयं च तीर्थकम् ।
अन्यस्मिन् पर्वते चैव, रैवताचलतीर्थकम् ॥ २९६ ॥

अत्रत्य श्राद्धवर्यस्य, तत्तीर्थकरणाय च ।
भावना प्रबला जाता, ततस्तेनात्र स्थापिता ॥ २९७ ॥

प्रत्यहं तस्य तीर्थस्य, यात्रा नैव प्रजायते ।
स्थापना च कृता तस्य, यात्रा कृते च सर्वदा ॥ २९८ ॥

अनेकभव्यजीवाश्च, आगच्छन्ति च तत्र वै ।
आकाशगामिनी विद्या, बलेन चैकमन्दिरम् ॥ २९९ ॥

वल्लभीतः समानीतं, नाडलाइपुरे वरे ।
शोभते ग्राममध्ये च, सर्वेषां बोधिहेतुकम् ॥ ३०० ॥

पञ्चाशच्च गृहाणां वै; श्रावकानां च विद्यते ।
परस्परं च सद्भावः, सर्वेषां हृदि वर्त्तते ॥ ३०१ ॥

त्रिसहस्रं च संख्याकं, वचनं तत्र मीलितम् ।
सर्वश्रावकवर्याश्च, घाणेरावे समागताः ॥ ३०२ ॥

मन्दिरपञ्चकं तत्र, विद्यते सुमनोहरम् ।
ग्रामस्य कोशदूरं च, मन्दिरं तीर्थरूपकम् ॥ ३०३ ॥

भगवद्वर्धमानस्य, मूछाला वीर नामकम् ।
अतीव सुन्दरं तत्र, मन्दिरं शालया युतम् ॥ ३०४ ॥

एकसहस्रसङ्ख्याकं, श्रावकानां च संयुतम् ।
गुरुदेवाश्च यात्रार्थे, गच्छन्ति तत्र धामनि ॥ ३०५ ॥

पूजाप्रभावनाभक्ति, कुर्वन्ति श्रावका बहु ।
स्वामिवात्सल्यकार्यं च, तत्रत्या भावुकाः स्तु ॥ ३०६ ॥

वरकाणीय शालायाः, दशसहस्रसङ्ख्यकम् ।
वचनं मीलितं तत्र, व्याख्यानं गुरुणा कृतम् ॥ २०७ ॥

पादलिप्तीय शालायाः, गोडवाडप्रदेशके ।
दश सहस्रसङ्ख्याकं, वचनं मीलितं तदा ॥ २०८ ॥

ततो विहृत्य देसूर्यां, ग्रामे च गुरवो गताः ।
सप्तशतं च श्राद्धानां, समूहैः सह तत्र वै ॥ २०९ ॥

लक्ष्मीचन्द्रादिभव्याश्च, श्रावका मुख्यसम्मताः ।
गुरुदेवस्य सामीप्ये, आगच्छन्ति च सत्वरम् ॥ २१० ॥

नैकवाद्यादि सामग्री, संयुताः श्रावकास्तथा ।
अन्ये च ब्राह्मणाद्याश्च, आयान्ति बहुभावतः ॥ २११ ॥

गुरूणांस्तुति काव्यादि, पठन्ति ब्राह्मणास्तदा ।
जयशब्दादि घोषं च, कुर्वन्ति श्रावका बहु ॥ २१२ ॥

आगत्य गुरुदेवेन, मङ्गलाचरणं कृतम् ।
देसूरिग्रामनाम्नश्च, स्पष्टीकरणकंकृतम् ॥ २१३ ॥

देवसूरिगुरूणां च, नाम्ना संस्थापितं पुरम् ॥
वकारस्यैव लोपेन, देसूरिणा प्रसिद्धिभाक् ॥ २१४ ॥

जैनाचार्यस्य सन्नाम, देवसूरिरभूत्तदा ।
इतिहासप्रसिद्धा च, सा व्यक्तिर्जगतीतले ॥ २१५ ॥

श्रुत्वाऽभिधानकं तस्य, सर्वे तत्र चमत्कृताः ।
सार्वजनीनसद्व्याख्या, कर्तव्ये याचना बहु ॥ २१६ ॥

प्रजाजनस्य तोषाय, स्वीकृता याचना तदा ।
पञ्चसहस्रसंख्याकाः, जनास्तत्रैव मीलिताः ॥ ३१७ ॥
नरकर्त्तव्यरूपस्य, व्याख्यानं पद्मकर्मजम् ।
उदारवृत्तियोगेन, तोषिता भावुकाः समे ॥ ३१८ ॥
कुशलपालकाद्यैश्च, गुरुकुलाय याचना ।
कृता विशुद्धभावेन, स्वीकृता ग्राममुख्यकैः ॥ ३१९ ॥
पञ्चसहस्रसंख्यानां, वसूनां वचनं तदा ।
मीलितं तत्र तेषां वै, वात्सल्यं च ततो भवेत् ॥ ३२० ॥
सादड़ीग्रामस्य वास्तव्याः, श्रावकाश्च समागताः ।
तेषां च प्रार्थना तत्र, गमनायैव स्वीकृता ॥ ३२१ ॥
गोडवाडीयसङ्घेन, सहैव गुरवो गताः ।
भक्तिभावं विधायैव, सर्वे स्वीयगृहे गताः ॥ ३२२ ॥
सादडीग्राममध्ये च, गुरुकुलं विधीयताम् ।
गङ्गारामाऽन्नराजादि, श्राद्धानामयमाशयः ॥ ३२३ ॥
विघ्नजालं विरच्यैव, कुर्वन्ति नहि कृत्यकम् ।
कुशलपालकाद्यैश्च, ज्ञाता तेषां च भावना ॥ ३२४ ॥
माधुर्यं वचने तेषां, हृदि हालाहलं विषम ।
ज्ञात्वा सर्वे च गच्छन्ति, स्वीय स्वीयगृहे खलु ॥ ३२५ ॥
त्रुटितं सादरीग्रामे, गुरुकुलपरिश्रमम् ।
खिन्नचित्तेन सर्वे ते, गता स्वकीयग्रामके ॥ ३२६ ॥

गुरूणां मानसे तोषः, सञ्जातो नहि खेदता ।
प्रजाजनहितायैव, प्रयत्नो विहितो मया ॥ ३२७ ॥

यच्च प्रोक्तं सत्—

महान्तमर्थमाश्रित्य, यो विधत्ते परिश्रमम् ।
तत्सिद्धौ मनस्तोषः, स्यादसिद्धौ वीरचेष्टितम् ॥ ३२८ ॥

इत्येवं भावनां कृत्वा, त्रैलोक्यदीपके खलु ।
मन्दिरे दर्शनायैव, गच्छन्ति राणके पुरे ॥ ३२९ ॥

टेसीटोरी च तत्रैव, आयाति गुरुसन्निधौ ।
राणकपुरयात्रायै, गुरुणा सह गच्छति ॥ ३३० ॥

पादचारेण तैः सार्द्धं, संघीय संज्जना बहु ।
आयान्ति भक्तिभावार्थं, कुर्वन्ति सङ्घभक्तिकम् ॥ ३३१ ॥

सुन्दरं मन्दिरं दृष्ट्वा, टेसीटोरीयमानसे ।
प्रभावो जैनधर्मस्य, अतीव जायते तदा ॥ ३३२ ॥

धन्यास्तत्कार्यकर्त्तारः, पवित्रस्वान्तधारिणः ।
कोटिशो द्रव्यसत्कार्ये, व्ययं कुर्वन्ति सज्जनाः ॥ ३३३ ॥

एतादृग्मन्दिरं नैव, कुत्रचित्खलु वर्तते ।
अत्रैव भारते तादृग्, पुण्यरूपं च तन्मतम् ॥ ३३४ ॥

भूमिगृहादिकं सर्वमुद्घाट्य दर्शनं कृतम् ।
रङ्गमण्डपबाहुल्यं, स्तम्भाश्च शतशो मताः ॥ ३३५ ॥

अपूर्वा रचना तस्य, अन्यत्र नैव दृश्यते ।
दृश्यते यत्र तत्रैव, प्रभूणां दर्शनं भवेत् ॥ ३३६ ॥
अर्बुदगिरि राजस्य, मन्दिरं शिल्पकैर्भृतम् ।
भारतशिल्पसन्दोहः, रक्षितो जैनभावुकैः ॥ ३३७ ॥
शिल्पकलाच जैनानां, मन्दिरे प्रवर्त्तते ।
कलानां कौशलं चैव, अन्यत्र नैव दृश्यते ॥ ३३८ ॥
अतीव भक्तिभावेन, दर्शनं विहितं तदा ।
स्तुतिं च भूरि कृत्वैव, गुरूणां दर्शनं पुनः ॥ ३३९ ॥
भारतभ्रमणायैव, टेसीटोरी ततो गतः ।
विहारो गुरुदेवेन, मेदपाटे कृतस्तदा ॥ ३४० ॥
मानपुरीय नालस्य, मार्गेण यान्ति साधवः ।
सङ्घसज्जनकैः सार्द्धं, विकटमार्गयोगतः ॥ ३४१ ॥
परिश्रान्ताश्च सर्वे ते, मानपुरे समागताः ।
भक्तानां भोजनं तत्र, गुडघृतेन संयुतम् ॥ ३४२ ॥
वात्सल्यमपि तस्यैव, कारितं तत्र भावुकैः ।
व्याख्यानं च कृतं तत्र, दर्शनं मन्दिरस्य च ॥ ३४३ ॥
इक्षुरसस्य बाहुल्यं, तत्प्रदेशे प्रवर्त्तते ।
श्यामगुडस्य सद्भुक्तिः, श्रान्ते च गुणदा मता ॥ ३४४ ॥
ढोलग्रामस्य पर्यन्तं, मन्दिरमार्गिनो जनाः ।
ततोऽनुलुम्पकास्तेरा–पन्थिनः श्रावका बहु ॥ ३४५ ॥

स्थानकवासिनां तेषां, बारापन्थित्व घोषणा ।
दयादानविहीनानां, तेरापन्थित्व बोधनम् ॥ ३४६ ॥

बारा-तेराजनानां च, प्राचुर्यं तत्र दृश्यते ।
आहारादिकसामग्रीः, साधूनां दीयते नहि ॥ ३४७ ॥

गोगुंदाग्रामवास्तव्याः, तेरापन्थिमहाजनाः ।
साध्वाहारजलं नैव, ददति द्वेषभावतः ॥ ३४८ ॥

मन्दिरदर्शनं तत्र, गत्वा च साधुभिः कृतम् ।
आशातना सुबाहुल्यं, वर्तते तत्र तत्क्षणे ॥ ३४९ ॥

गुरुणा स्थिरतां कृत्वा, बोधिता युक्तियोगतः ।
स्थानकवासिता त्यक्ता, प्रतिज्ञा च कृता तदा ॥ ३५० ॥

तेरापन्थिजनानां च, हृदये दुष्टभावना ।
सञ्जाता च ततो नैव, ज्ञानलेशः प्रजायते ॥ ३५१ ॥

माध्यस्थभावना तेषां, उपरि गुरुणा कृता ।
न तु द्वेषत्वसद्भावः, हृदये धारितो मनाक् ॥ ३५२ ॥

उदयपुरवास्तव्याः, श्रावकाश्च समागताः ।
पूजाप्रभावनाभक्तिं, कुर्वन्ति मन्दिरे तदा ॥ ३५३ ॥

तेरापन्थिजनानां च, हृदि शल्यायितं तदा ।
सूर्योदये च घूकानां, तथाऽत्र परिज्ञायताम् ॥ ३५ ॥

दिनत्रयीं च तत्रैव, स्थित्वा च बोधिताः कति ।
मुद्गशैलसमा ये च, तेषां बोधोऽपि दुर्लभः ॥ ३५५ ॥

उदयपुरगन्तव्ये, प्रयाणं गुरुणा कृतम् ।
शतशो भावुकाः श्राद्धाः, गच्छन्ति गुरुयोगतः ॥ ३५६ ॥

सम्मुखे च समायाताः, उदयपुरतो जनाः ।
राणामहाशयेभ्यश्च, सामग्री याचिता बहु ॥ ३५७ ॥

सामग्रीबलयुक्तेन, सङ्घेन धर्मरागतः ।
प्रवेशोत्सवकार्यं च, कृतं तत्रैव तत्क्षणे ॥ ३५८ ॥

हस्त्यश्वादिकवाद्यादि, पताकातोरणादिकम् ।
गहुंल्यादिककार्यं च, सधवास्त्रीजनैः कृतम् ॥ ३५९ ॥

शीतलनाथदेवानां, दर्शनं प्रथमं कृतम् ।
गोडीपार्श्वप्रभूणां च, ततोऽनु दर्शनं कृतम् ॥ ३६० ॥

स्वस्तिकं मौक्तिकानां च, पूरितं श्राविकाजनैः ।
वर्धापनं गुरूणां च, कृतं चातीव भावतः ॥ ३६१ ॥

चावाडधर्मशालायां, गुरुणा स्थिरता कृता ।
व्याख्यानं सर्वदा तत्र, जायते सूत्रयोगतः ॥ ३६२ ॥

बारापन्थिकपूज्याश्च, श्रीलालास्तत्र चागताः ।
तेरापन्थिकपूज्याश्च, कालुरामादिकास्तथा ॥ ३६३ ॥

संन्यासी शङ्कराचार्यः, आगतो राजयोगतः ।
मन्दिरमार्गिणां पूज्याः, आगता धर्मप्रेमतः ॥ ३६४ ॥

चातुर्मासाय चत्वारः, आचार्या मीलितास्तथा ।
व्याख्यानं नगरे तत्र, जायते स्वीय स्थानके ॥ ३६५ ॥

सासिकीं स्थिरतां कृत्वा, धूलेवा नगरे गताः ।
पंचशती च भव्यानां, श्राद्धानां समुदायकम् ॥ ३६६ ॥

भक्तिविजयनामादि, साधूनां मेदपाटके ।
स्थातुमिच्छा न विद्यते, गन्तव्ये प्रार्थना कृता ॥३६७॥

गौर्जरदेशगन्तव्ये, साधूनां भावना स्फुटा ।
दृष्ट्वा च गुरुदेवेन, सङ्घस्य कथितं तदा ॥ ३६८ ॥

गमिष्यामो वयं तत्र, साधूनां कारणेन वै ।
आगतेऽह्नि विहारश्च, अस्माकं तु भविष्यति ॥ ३६९ ॥

विहारं गुरुदेवानां, श्रुत्वा शोकसमन्विताः ।
अत्रत्या श्रावकाः सर्वे, आगता गुरुसन्निधौ ॥ ३७० ॥

मग्नलालादिकाः सर्वे, आदाय कुञ्चिकां समाम् ।
मन्दिराणां च तत्पार्श्वे, प्रक्षिप्ता धर्मप्रेमतः ॥ ३७१ ॥

अश्रुपूर्णैश्च नेत्रैश्च, गृहीत्वा गम्यतां सुखम् ।
लुण्टाका लुम्पकाः सर्वे, धर्मस्य ते समागताः ॥ ३७२ ॥

मेदपाटकदेशश्च, सर्वस्तैर्मुषितः खलु ।
तथापि धर्मसूरीणां, दृष्टिपथे च नागतम् ॥ ३७३ ॥

धर्मगुरुर्यदा धर्मरक्षां च नो करिष्यति ।
तदा पामरजीवेभ्यः, श्रावकेभ्यः कथं भवेत् ? ॥ ३७४ ॥

साधुविहारशून्येन, सञ्जाता लुम्पकाः समे ।
जायते चावशिष्टश्च, अस्माकं दोषता न हि ॥ ३७५ ॥

प्रतिग्रामं च जैनानां, मन्दिरं सुन्दरं भवेत्।
तालाधीनं च तत्सर्वं, सञ्जातं गुरुदोपतः ॥ ३७६ ॥

यदि मन्दिरश्राद्धानां, रक्षा कर्तुं समीहसे।
तदाऽत्र चागतिः कार्या, प्रार्थना मम चेदृशी ॥ ३७७ ॥

हार्दिकीं प्रार्थनां तेषां, श्रुत्वा च गुरुणा तदा।
साधूनाहूय पृष्टं तदिन्द्राद्यैः कथितं यथा ॥ ३७८ ॥

गौर्जरदेशगन्तव्ये, येषामिच्छा प्रजायते।
तैरेव तत्र गन्तव्यं, सुन्दरभुक्तिहेतवे ॥ ३७९ ॥

अस्माभिः सह मेवाडे, मक्कानां रोट्टिका खलु।
येषां मोक्तुं च जिज्ञासा, आगम्यतां च तैस्तथा ॥३८०॥

इन्द्रमङ्गलविद्यादि—साधवः सप्त चागताः।
अन्ये सर्वे च गच्छन्ति, गौर्जरदेशसन्निधौ ॥ ३८१ ॥

उदयपुरसद्ग्रामे, गच्छन्ति चाष्टसाधवः।
चातुर्मासाय तत्रैव, आगत्य गुरवः स्थिताः ॥ ३८२ ॥

तदा च हर्षचन्द्रेण, दीक्षार्थं प्रार्थना कृता
ज्येष्ठीमात्रा च दत्ता वै, आज्ञा तस्य सुखावहा ॥ ३८३ ॥

सद्धर्म देशनामध्ये, आज्ञा दत्ता च प्रेमतः।
वैशाखशुक्लपञ्चम्यां, लग्नं निर्धारितं तदा ॥ ३८४ ॥

महोत्साहपूर्वेण, अष्टाह्निक महोत्सवः।
प्रारब्धः संघमुख्यैश्च, मन्दिरे च मनोहरः ॥ ३८५ ॥

पूजाप्रभावनाकृत्यं, वायणादि प्रजायते ।
चन्दनमल्लनागोरि-श्राद्धस्य भापणं पुनः ॥ ३८६ ॥
विभिन्नविपयं तत्र, रात्रौ च धर्महेतवे ।
वैराग्यपोषकं शुद्धं, जायते नात्र संशयः ॥ ३८७ ॥
पूजाव्रतादिभव्याना-माह्लादो नैव मायते ।
चतुरकुलजातानां, रोशनस्य तथैव च ॥ ३८८ ॥
दीक्षादिवसपूर्वं च, टेसीटोर्याख्यभावुकैः ।
स्वस्थाने हर्षनाथौ च, गृहीत्वा तिलकं कृतम् ॥ ३८९ ॥
सुवर्णमुद्रणं चैकं, दत्तं च शुद्धभावतः ।
ताभ्यां सहैव पूजायामागतास्तेऽपि तत्र वै ॥ ३९० ॥
दीक्षादिवसप्रारम्भे, वार्षिकदानहेतवे ।
महोत्सवश्च सञ्जातः, सामग्रीसर्वसंयुतः ॥ ३९१ ॥
दशसहस्रसंख्याश्च, जनानां तत्र तद्दिने ।
अधिकारिजनाः सर्वे, आगता दृष्टिहेतवे ॥ ३९२ ॥
दीक्षा च तादृशी नैव, दृष्टा तैश्च कदाचन ।
क्रियाकरणकाले च, निषिद्धं वाद्यवादनम् ॥ ३९३ ॥
शुभयोगेन दीक्षायाः, आरब्धा च क्रिया तदा ।
सर्वे ते शान्तभावेन, शृण्वन्ति तत्र सज्जनाः ॥ ३९४ ॥
दीक्षा चैवार्हतीं दत्त्वा, अभिधानं यथाक्रमम् ।
जयन्तविजयाऽभिख्यं, हर्षचन्द्रस्य रक्षितम् ॥ ३९५ ॥

नाथालालस्य तत्काले, निधानविजयाऽभिधम् ।
दत्तं च गुरुदेवेन, शुभे लग्ने शुभं कृतम् ॥ ३९६ ॥

विशालविजयस्यैव, जिज्ञासा तत्र पूर्यते ।
गुरूणां संयमस्यैव, पूर्वं शिष्येण धारितम् ॥ ३९७ ॥

नालिकेरफलानां च, दशसहस्रसंख्यकम् ।
प्रभावनासु संलग्नम–र्जुनलालकस्य वै ॥ ३९८ ॥

मोदकानां द्वितीयाऽपि, प्रभावना प्रजायते ।
जैनधर्मानुमोदश्च, सम्पूर्णनागरैः कृतः ॥ ३९९ ॥

लक्कडवाससद्ग्रामे, गुरवश्च गताः खलु ।
पञ्चदिवसपर्यन्तं, तत्रैव स्थिरता कृता ॥ ४०० ॥

मूर्तिपूजादिकं सर्वं, व्याख्यानं च कृतं तदा ।
आघाटादिकतीर्थेषु, यात्रा कृता च भावतः ॥ ४०१ ॥

चत्वारि मन्दिराण्येव, शोभन्ते ग्राममध्यके ।
जीर्णोद्धारस्य व्याख्यानं, यात्रिणां सम्मुखे खलु ॥४०२॥

देवकुलाभिधे ग्रामे, इन्द्रमल्लनामको ।
साधू समागतौ तत्र, एकलिंगस्य मार्गतः ॥ ४०३ ॥

द्वापंचाशज्जिनानां च, आलयं प्रतिमन्दिरे ।
भूमिगृहेषु मूर्तीनां, बाहुल्यं तत्र वर्तते ॥ ४०४ ॥

चत्वारि मन्दिराण्येव, अधुना परिदृश्यते ।
त्रिंशत् परिसंख्यानि, प्रासादाः सन्ति सर्वथा ॥ ४०५ ॥

शत्रुंजयादितीर्थानां, स्थापना प्राग् निगद्यते ।
लुम्पकानां प्रवेशेन, सर्वं तत्र विनाशितम् ॥ ४०६ ॥

देवकुलपुरे ग्रामे, समृद्धिशालिनो बहु ।
जज्ञिरे श्रावकास्तत्र, लुम्पकैर्लुम्पकी कृताः ॥ ४०७ ॥

नूतनं लुम्पकैर्नैव, कृतं च मन्यते खलु ।
प्रमादिश्राद्धवर्याणां, प्रमादेपातनं कृतम् ॥ ४०८ ॥

आलस्यं सर्वजीवेषु, कर्मजन्यं प्रवर्त्तते ।
पूजादिकार्यकर्त्तव्ये, कालधनव्ययो भवेत् ॥ ४०९ ॥

लुम्पाकैस्तत्र चागत्य, शिक्षितं पापपाठनम् ।
सचित्तजलपुष्पादि, वस्तुभिर्जिनपूजने ॥ ४१० ॥

एकेन्द्रियादिजीवानां, विनाशः परिजायते ।
जीवानां हनने पापं, जिनेन्द्रैः प्रतिपादितम् ॥ ४११ ॥

हिंसाधर्मनिमित्त च, कथं त्वया विधीयते ।
हिंसाया नरके घोरे, जीवा गच्छन्ति सत्वरम् ॥ ४१२ ॥

एकतश्चालसा जीवा, अन्यतः पापदर्शनम् ।
धनव्ययादिकं सर्वं, तृतीयं प्रतिपादितम् ॥ ४१३ ॥

स्थूलबुद्धिमनुष्याणां, लाभालाभविचारणा ।
प्रभोराज्ञा विधानादि, हृदि नायाति किञ्चन ॥ ४१४ ॥

शुद्धसाधुविहाराणां, विरहे लुम्पकैः समैः ।
धर्मलोपादि कार्यं च, कृतं च मन्दबुद्धिभिः ॥ ४१५ ॥

त्रसानां दोषशून्यानां, सङ्कल्पादिप्रयोगतः ।
मारणे त्रसजीवानां, हिंसाया नियमो मतः ॥ ४१६ ॥

द्वादशव्रतिभव्यैश्च, तादृशं क्रियते व्रतम् ।
अन्येषां व्रतहीनानां, जीवानां किमु कथ्यते ॥ ४१७ ॥

हिंसाया विरहे हिंसात्वं, यदि प्रणिगद्यते ।
प्रश्नव्याकृतिसूत्रेषु, पूजासु संवरः कथम् ॥ ४१८ ॥

दयायाः षष्टि जल्पेषु, पूजाजल्पः कथंकृतः ।
सूत्रेषु पूजनं चैव, बहुधा प्रतिपादितम् ॥ ४१९ ॥

हिंसालुम्पकसाधूनां, पदे पदे प्रजायते ।
चातुर्मासे च व्याख्यानं, कथं तैः प्रविधीयते ॥ ४२० ॥

व्याख्यानश्रुतिकार्येषु, समागच्छन्ति भावुकाः ।
वृष्टिमूसलधारासु वर्षत्सु श्रावकाः समे ॥ ४२१ ॥

एकेन्द्रियत्रसानां च, विराधना गतो भवेत् ।
तत्सर्वं पापदोषादि, बध्नाति साधवस्तव ॥ ४२२ ॥

साधुव्याख्यानशून्ये च, आगच्छन्ति न के जनाः ।
तत्र निमित्तभूताश्च, साधवः परिकीर्त्तिताः ॥ ४२३ ॥

चातुर्मासे च साधूनां, वन्दना कार्यहेतवे ।
कुङ्कुमपत्रिद्वारैव, आह्वयन्ति च श्रावकाः ॥ ४२४ ॥

केचिच्छकटमारुह्य धूम्रगन्त्रीं च केचन ।
केचिच्च पादचारेण, समागच्छन्ति श्रावकाः ॥ ४२५॥

धावनजलता नैव, तादृशी जैनसूत्रके ।
कथिता किन्तु मुद्गादि, धान्यद्राक्षादिधावनात् ॥४४५॥

यच्छुद्धं च जलं तत्र, जायेत साधुना तदा ।
आपवादिकमार्गेषु, ग्रहणं क्रियते किल ॥ ४४६ ॥

विहारकार्यकर्त्तव्ये, उष्णजलवियोगतः ।
प्राणरक्षादिकार्याय, तादृग्जलं च गृह्यते ॥ ४४७ ॥

उत्सर्गमार्गकार्येषु, त्रिदण्डोत्कलितं जलम् ।
विशुद्धं तच्च गृह्णीत, यतो न रोगता भवेत् ॥ ४४८ ॥

सम्मूर्च्छिममुनीनां च, न कालादि विचारणा ।
कम्बल्यादिक योगो न, कालश्च कवलीकृतः ॥ ४४९ ॥

बारास्थानकवास्यादि, ढुंढकादिकनामतः ।
प्रसिद्धा जगति जाताः, दैत्यादि वेशधारिणः ॥ ४५० ॥

मूर्त्तिपूजनकार्यादि, योगप्रदीपग्रन्थके ।
कथितं तत्र विज्ञेयमन्यच्च लिखितं मया ॥ ४५१ ॥

अमूलत्वादिसाधूनां, पुस्तकं हेतुकं भवेत् ।
मरुदेशीय साध्वाद्यैः, मन्दिराशातनादिकम् ॥ ४५२ ॥

पूजानिषेधकार्यादि, मल्लेखे हेतुता धृता ।
अतः परं मुनीनां च, पूजानिषेधकार्यके ॥ ४५३ ॥

प्रवृत्तिर्यदि दृश्येत, तदा मयापि लिख्यते ।
सुसंपकर्त्तुमिच्छा चेत्, तदा च खण्डनादिकम् ॥ ४५४ ॥

कार्यं नैव त्वया कार्यं, मयाऽपि न विधीयते ।
शान्तिसाम्राज्यकालेषु, अशान्तिर्नैव तन्यताम् ॥ ४५५ ॥
दुःखदद्दश्यतां दृष्ट्वा, स्थानकवासिभिः कृताम् ।
मेदपाटप्रदेशेषु, हृदयं परिकम्पते ॥ ४५६ ॥
सम्पूर्णमेदपाटेषु, लुम्पकानां प्रवेशनात् ।
मन्दिरे कण्टकाद्यं च, कारितं तेन दुर्धिया ॥ ४५७ ॥
भगवत्मूर्त्ति सामीप्ये, कृत्वा पृष्टं च तिष्ठति ।
पद्मासनेषु चोच्छिष्टं, पात्रादिकं च स्थापयेत् ॥ ४५८ ॥
उत्तरणं च तत्रैव, व्याख्यानप्रविधानकम् ।
क्रियते मन्दिरे सर्वं, लुम्पाकैः पापपोषकैः ॥ ४५९ ॥
श्रीसीमंधर देवानां, सूत्रे नामाऽपि नो भवेत् ।
ऐशानकोणदेशेषु, कथं तैरुपविश्यते ॥ ४६० ॥
गुरुदेवेन राणानां, ज्ञापितं तादृशं तथा ।
सङ्घस्य प्रार्थना–योगान्निषिद्धं कर्मचारिभिः ॥ ४६१ ॥
ततो निष्क्रम्य मार्गेषु, नागदा ग्रामतीर्थके ।
विशालशान्तिनाथानां, मूर्तीनां दर्शनं कृतम् ॥ ४६२ ॥
मन्दिरस्यावशेषाणां, बाहुल्यं परिवर्त्तते ।
अखण्डमन्दिराण्येव, विद्यन्ते कतिधा तथा ॥ ४६३ ॥
अरण्यप्रायरूपत्वं, तत्रैव जायतेऽधुना ।
ग्रामश्मशानमादृक्षं, वर्त्तते कालदोषतः ॥ ४६४ ॥

मार्गे षट्कायजीवानां, विराधना पदे पदे ।
तदर्थं रसवत्यादि पाके, षट् जीवनाशनम् ॥ ४२६ ॥

नगररक्षालद्वारेषु, उच्छिष्टधान्यक्षेपणात् ।
सम्मूर्छिमास्त्रसा जीवा, उत्पद्यन्ते क्षणे क्षणे ॥ ४२७ ॥

तेषां विनाशसद्भावे, हिंसात्वं परिजायते ।
धर्मनिमित्तहिंसा च, कार्यते च कथं त्वया ॥ ४२८ ॥

यदि त्वया निगद्येत, अस्माभिः क्रियते नहि ।
किन्तु स्वेच्छाऽनुसारेण, आगच्छन्ति च श्रावकाः ॥४२९॥

तदप्यसत्यरूपं तत्, पत्रिकाया निषेधनम् ।
कथं त्वया न कार्यते, उपदेशप्रदानतः ॥ ४३० ॥

तपसां पुरकर्त्तव्ये, महोत्सवो विधीयते ।
वाद्यादिसर्वसामग्री, सहितः क्रियते कथम् ॥ ४३१ ॥

कथं च भिन्नग्रामेभ्यः, आह्वयन्ति च श्रावकाः ।
तेभ्यरारम्भकार्यादि, भुक्त्यादौ क्रियते कथम् ॥ ४३२ ॥

षाण्मासिकतपः कार्यं, कृतं भगवता तदा ।
तदर्थं पुरकार्यादि, न कृतं केन कुत्रचित् ॥ ४३३ ॥

लोकैषणादिकं कार्यं, त्वया सर्वं विधीयते ।
सूत्रविरुद्धकर्त्तव्ये, महापापं निबध्यते ॥ ४३४ ॥

मुखबद्धे महापापं, प्रतिक्षणे वितन्यते ।
सूत्रेषु मुखबद्धत्वं, कुत्रचिन्नैव दृश्यते ॥ ४३५ ॥

मुखबद्धे च तद्वस्त्रोपरि च जल्पने सति ।
उपर्युपरिनिष्ठ्यूतानां च पतनकार्यतः ॥ ४३६॥

सम्मूर्च्छिमत्रसानां च, उत्पातः प्रविधीयते ।
तेषां विनाशसद्भावे, हिंसात्वतः प्रजायते ॥ ४३७ ॥

प्रज्ञापनादिसूत्रेषु, चतुर्दशके स्थानके ।
अमेध्येषु च जीवाना–मुत्पत्तिः परिकीर्त्तिता ॥ ४३८ ॥

अतो हि मुखबद्धे च, हिंसा त्वया विधीयते ।
कुलिंगत्वस्य दुष्कार्यं, सहसा च कृतं त्वया ॥ ४३९ ॥

गृहस्थ गुरुर्लोकाशाः, शिष्यांश्च त्यागिनः समे ।
गुरौ भोगिनि शिष्याणां, नो भवेच्छुद्धत्यागता ॥४४०॥

पारम्पर्यं च तत्रैव, विद्यते न कदाचन ।
देशित्वपरदेशित्व–भेदो च मरुदेशके ॥ ४४१ ॥

सम्प्रदायविभेदत्वं, छ कोटि काष्ठकोटिकौ ।
लघुवृहत्कपक्षौ च, सङ्घाटकस्य भेदता ॥ ४४२ ॥

उच्छिष्टभाण्डधौतादि, कर्त्तव्ये य ज्जलं भवेत् ।
पकान्नकारहट्टेषु, काटाहादिकक्षालनात् ॥ ४४३ ॥

यज्जलं तत्र जायेत, गृह्यते साधुना च तत् ।
शुद्धमानं च विज्ञाय, तदा च मन्दबुद्धिना ॥ ४४४ ॥

प्रासादश्चैकलिङ्गस्य, विशालः परिजायते ।
जैनमन्दिरता तत्र, शिल्पेन चानुमीयते ॥ ४६५ ॥
ततो विहृत्य सूरीणां, गुरूणां दर्शनं कृतम् ।
उदयपुरमध्ये च, यद्दृष्टं तच्च श्रावितम् ॥ ४६६ ॥
मेदपाटीय देशस्य, मन्दिराऽऽशातना बहु ।
सर्वत्र परिदृश्येत, साधूपदेशशून्यतः ॥ ४६७ ॥
व्याख्यानश्रुतिकार्याय, आगच्छन्ति जना बहु ।
उपाश्रये न मायन्ते, सहस्राधिकश्राविकाः । ॥ ४६८ ॥
बलदेवाः परिभ्रष्टाः, कोठारिकुलधूम्रकाः ।
मिथ्यान्धकारयोगेन, धर्मभावविहीनकाः ॥ ४६९ ॥
तस्योद्धारस्य कर्त्तव्ये, प्रयत्नो गुरुणा कृतः ।
मध्यस्थभावनायुक्तः, सञ्जातो गुरुयोगतः ॥ ४७० ॥
एकदा देशनामध्ये, प्रोक्तं ढुण्ढकसाधुना ।
उत्तरं श्राद्धशङ्कायाः, स्पष्टीकरणरूपतः ॥ ४७१ ॥
शृण्वन्तु श्रावकाः सर्वे, द्वौ घटौ चैकस्थानके ।
उष्णजलस्य चैकः स्यात्परो धौतजलैर्भृतः ॥ ४७२ ॥
उष्णजलं गृहस्थानां, गृहकार्येषु युज्यते ।
धौतजलस्य नो किञ्चित्कार्याय चोपयुज्यते ॥ ४७३ ॥
अतएव च साधूनां, तज्जलं परिकल्पते ।
साधुभिर्धावनं नीरं, गृह्यते धर्मपोषिणा ॥ ४७४ ॥

तद्वार्त्ता तत्र चागत्य, श्रावकैश्च कृता तथा ।
व्याख्यानं गुरुदेवेन, श्रीलालोत्तररूपकम् ॥ ४७५ ॥
कृतं शृण्वन्तु भो भव्याः, घटानां च त्रयीभवेत् ।
उष्णजलस्य चैकः, स्यात्परो धौतजलैर्भृतः ॥ ४७६ ॥
मूत्रजलैर्भृतो ज्ञेयः, तृतीयः परिवर्तते ।
उष्णजलं गृहस्थानां, कार्येषु चोपयुज्यते ॥ ४७७ ॥
धौतजलं पशूनां च, पानाय परिज्ञायताम् ।
मूत्रजलं च नो किंचित्कार्याय चोपयोगि तत् ॥ ४७८ ॥
अतो लुम्पकसाध्वाद्यैः, तज्जलं शुद्धभावकम् ।
गृह्यतां तत्र नो कार्या, घृणादिका च काचन ॥ ४७९ ॥
तादृशमुत्तरं श्रुत्वा, सर्वे तत्र चमत्कृताः ।
श्रीलालसाधुपार्श्वे च, गत्वोत्तरं च श्रावितम् ॥ ४८० ॥
व्याख्याने चैकदा तस्य, प्रश्नः कृतश्च भावुकैः ।
मुखवस्त्रस्य चास्ये वै, बन्धनं लिखितं नहि ॥ ४८१ ॥
सूत्रेषु बन्धनं नैव, लिखितं केषुचित्क्वचित् ।
कथं त्वया च बध्येत, उत्तरं दीयतां शुभम् ॥ ४८२ ॥
श्रीलालेन तदा प्रोक्तं, मोमति बन्धनं नहि ।
किन्तु प्रमाददोषेण, अस्माभिर्बध्यते खलु ॥ ४८३ ॥
प्रतिदिनं च तादृक्षी, प्रश्नचर्चाऽपि जायते ।
एकदा स्थण्डले देशे, मीलितास्ते महाशयाः ॥ ४८४ ॥

कम्बली सूत्रसिद्धान्ते, साधुग्राह्या च सम्मता ।
कथं त्वया न गृह्येत, तस्याः कालोऽपि वर्त्तते ॥ ४८५ ॥

दण्डकं दशवैकाले, साधूनां रक्षणं मतम् ।
कथं त्वया न रक्ष्येत, उत्तरे मौनता भवेत् ॥ ४८६ ॥

सर्वं सूत्रं विरुद्धं तदाचारेषु च दृश्यते ।
प्रभुभक्तिविरुद्धानां, नामाऽपि गृह्यते कथम् ॥ ४८७ ॥

ततो निवृत्य पूज्याश्च, उपाश्रये समागताः ।
दाम्भिकी वृत्तितां दृष्ट्वा, मानसे ग्लानिता मता ॥४८८॥

तेरापन्थिदयाहीनाः, दानेन रहिताः खलु ।
तेषां च प्रतिबोधाय, स्कूलादौ देशना भवेत् ॥ ४८९ ॥

सूत्रस्थाः सर्वपाठाश्च, निष्कासिताश्च तत्क्षणे ।
येषां च मानसे शङ्का, तेषामुत्तरदापनम् ॥ ४९० ॥

व्याख्यानं तत्र जायेत, दयादानस्य मण्डने ।
हितशिक्षादिका ग्रन्थाः, तदर्थं लिखितास्तदा ॥ ४९१ ॥

प्रयागस्थलभूमौ च, गुरूणां देशना शुभा ।
जैनेतरीय भव्याश्च, शृण्वन्ति बहुप्रेमतः ॥ ४९२ ॥

तेरापन्थिकवर्गेण, राणानां प्रार्थना कृता ।
भाषणे धर्मसूरीणां, कलहो मादृशां भवेत् ॥ ४९३ ॥

महाराणेन सम्प्रोक्तं, व्याख्यानं धर्मरूपकम् ।
निषेधः क्रियते नैव, प्रजानां सम्मतं खलु ॥ ४९४ ॥

पुस्तकानां त्रयी तत्र, मुद्राप्य वाटिता तदा ।
शिक्षाशतकमाद्यं स्यात्प्रश्नोत्तरं द्वितीयकम् ॥ ४९५ ॥

हितशिक्षास्वरूपाख्यं, तृतीयं परिकीर्त्तितम् ।
कालुरामाख्य पूज्यस्य, हस्ते च दापिता त्रयी ॥ ४९६ ॥

ब्रह्मचारिकिशोरेण, गत्वा च तस्य स्थानके ।
प्रत्युत्तरं च नाद्यापि, तेभ्यश्चात्र समागतम् ॥ ४९७ ॥

दयादाननिषेधानामुत्तरं युक्तिपूर्वकम् ।
ज्ञातव्यं भव्यजीवैश्च, तेष्वेव पुस्तकेषु च ॥ ४९८ ॥

मूर्त्तिपूजाप्रकाराणां, व्याख्यानं क्रियते तदा ।
सार्वजनीन बोधाय, प्रसिद्धस्थानके भवेत् ॥ ४९९ ॥

ज्ञातीय सर्वजैनानां, स्थानके देशना किल ।
गुरुदेवस्य साधूनां, युक्तिपूर्वं च जायते ॥ ५०० ॥

मूर्त्तिमण्डनकं पूर्वं, सूत्रपाठेन तन्यते ।
पश्चात्पूजाविधानादि, युक्त्या सूत्रेण कथ्यते ॥ ५०१ ॥

आगत्य लुम्पकाः सर्वे, शृण्वन्ति देशनां तथा ।
श्रुत्वा च हृदये तेषां, शल्यं च परिजायते ॥ ५०२ ॥

मूर्त्तिपूजाप्रकाराश्च, दृश्यन्ते स्फुटरूपतः ।
पारापन्थिकसाधुश्च, वाचयति न कर्हिचित् ॥ ५०३ ॥

सर्वेषां मानसे शङ्का, तदानीं परिजायते ।
गुरुपार्श्वे समागत्य, निर्णयः कतिभिः कृतः ॥ ५०४ ॥

स्थानकवासिनः केचित्सञ्जाता मूर्त्तिपूजकाः ।
अन्ये च संशयापन्नाः, जज्ञिरे तस्य भावुकाः ॥ ५०५ ॥

तेरापन्थिकपूज्यानां, वन्दनार्थं समागताः ।
तेषां कलशकाष्ठादि, तत्रस्थैरेव दीयते ॥ ५०६ ॥

सर्वेषां श्रावकानां च, तेषां प्रत्येकवासरम् ।
अमुकदैनिकी बाधा, पूज्यभक्तिविधानके ॥ ५०७ ॥

चातुर्मासे च ते सर्वे, समागच्छन्ति भावुकाः ।
मिष्टान्नभोजनार्थं च, पचन्ति साधुहेतवे ॥ ५०८ ॥

साधूनां निकटे गत्वा, भावनां भावयाम्यहम् ।
इत्युक्त्वा साधवस्तत्र, समागच्छन्ति सत्वरम् ॥ ५०९ ॥

मदर्थं कारितं तच्च, आमन्त्रणं विधीयते ।
शुद्धमानं च तज्ज्ञेयं, सर्वं तन्मोदकादिकम् ॥ ५१० ॥

एवमुक्त्वा च तत्पात्रे, सर्वं तत्परिक्षिप्यते ।
कथयन्ति च ते पश्चात्, दत्तं तच्छुद्धमानकम् ॥ ५११ ॥

ग्रीष्मकाले च पानीयं, नूतनघटसम्भृतम् ।
प्रसादोपरि रात्रौ च, स्थाप्यते च घटादिकम् ॥ ५१२ ॥

रात्रौ च शीतपातेन, चन्द्रस्य किरणादितः ।
मुष्टिभस्मप्रदानेन, अचित्तं तेन गण्यते ॥ ५१३ ॥

साधूनाहूय चोच्येत, शुद्धं जलं च गृह्यताम् ।
साधुना तच्च गृह्येत, विज्ञाय शुद्धमानकम् ॥ ५१४ ॥

सचित्तं तच्च पानीयं, गृह्यतेऽचित्तबुद्धिना ।
आहाराशुद्धमानं च, गृह्यते शुद्धबुद्धिना ॥ ५१५ ॥
व्यामोहं पश्य कीदृक्षमज्ञानं किं ततः परम् ।
तेषां च मूर्खसाधूनां, सत्यज्ञानं कुतो भवेत् ॥ ५१६ ॥
भगवतां जपं त्यक्त्वा, मूढानां जापतां भजेत् ।
धर्मश्रद्धा कुतस्तेषामज्ञानिनां भविष्यति ॥ ५१७ ॥
भीमाराजिममाडाकानां च, करोति जापकम् ।
भगवत्तुल्यध्यानं च, करोति पूज्यसाधूनाम् ॥ ५१८ ॥
भगवत्तुल्यमूर्त्तीनां, प्रस्तरं तैर्निगद्यते ।
स्थापनामूर्तिसत्यत्वं, स्थानाङ्गेषु निरूपितम् ॥ ५१९ ॥
स्थानकवासिपूज्याश्च, प्रस्तरं कथयन्ति न ।
दयादानं च मन्येते, हृदये दृढभावतः ॥ ५२० ॥
ताभ्यां द्वाभ्यां च साकं, वै धर्मचर्चा कृता बहु ।
मूर्खाणां ज्ञानलेशोऽपि, नायाति च कदाचन ॥ ५२१ ॥
मीलनायैव राणानां, प्रयत्नो लुम्पकैः कृतः ।
तेषां च मीलनं नैव, सञ्जातं दैवयोगतः ॥ ५२२ ॥
वाराणसी. ाज्ञां च, दलं तत्र समागतम् ।
मद्राज्यरत्नरूपं च, भवद्राज्ये समागतम् ॥ ५२३ ॥
यावत्पर्यन्तकं राज्ये, तेषां स्थितिरभूत्तथा ।
तावत्पर्यन्तकं शान्तिसाम्राज्यं वर्तितं खलु ॥ ५२४ ॥

त्वदीय भाग्ययोगेन, मद्रत्नं तत्र चागतम्
धर्मचर्चा विधातव्या, तेभ्यश्च सुखहेतवे ॥ ५२५ ॥

दर्शनं पापनाशाय, माधुर्यं वचने महत् ।
विद्वद्रत्नं च विज्ञेयं, दर्शने पारगामिनः ॥ ५२६ ॥

भक्तिभृतं दलं ज्ञात्वा, फतेकरण चारणात् ।
गुरूणां च स्तुतिश्लाघां, श्रुत्वा प्रमुदिता खलु ॥५२७॥

देशनां श्रोतुकामाय, प्रेषितौ राजमानुषौ ।
आगत्य गुरुपार्श्वे च, विनयेन समासीनौ ॥ ५२८ ॥

महाराणेन सम्प्रोक्ता, ताभ्यां कृता च प्रार्थना ।
भवद्व्याख्यानश्रुत्यर्थं, महाराणेन प्रेषितौ ॥ ५२९ ॥

आगत्य देशनां तत्र, श्रावयन्तु हितावहाम् ।
तदीयेच्छाप्रपूर्णाय, समागच्छन्तु सूरयः ॥ ५३० ॥

भक्तिभावसमायुक्तां, विज्ञप्तिं मानयन्ति ते ।
षट् साधुभिर्गुरूणां च, गमनं तत्र जायते ॥ ५३१ ॥

शम्भुनिवासस्थानेषु, रक्षकाः समुपस्थिताः ।
दर्शयन्ति च मार्गं ते, गच्छन्ति गुरवस्ततः ॥ ५३२ ॥

फतेसिंहा महाराणाः, आगता गुरुसंन्निधौ!
विनयानम्रगात्रेण, नयन्ति स्वीयमन्दिरे ॥ ५३३ ॥

यावन्तः साधवस्तत्र, विद्यन्ते नासनानि च ।
वेत्रासनं चयावन्न संपूर्णं समागतम् ॥ ५३४ ॥

तावत्पर्यन्तकं तत्र, उत्थितास्ते महाशयाः ।
उपवेशे च साधूनां, ततस्तिष्ठन्ति ते तदा ॥ ५३५ ॥

धार्मिकीं भावनापूर्णां, ददाति देशनां गुरुः ।
राज्ञां च धर्मकृत्यं तत्, कर्त्तव्यमप्रमादिभिः ॥ ५३६ ॥

सोपानभूतं स्वर्गस्य, मानुष्यं प्राप्यदुर्लभम् ।
तथाऽऽत्मानं समादध्याद्, भ्रश्यते न पुनर्यथा ॥ ५३७ ॥

चत्तारि परमंगाणि, दुल्लहाणीह जन्तुणो ।
मानुसत्तं सुइसद्धा, संजमंमिय वीरियम् ॥ ५३८ ॥

विवेचनं च कृत्वैव, ज्ञापितं बोधहेतवे ।
नीतिमार्गस्य व्याख्यानं, ततश्च गुरुभिः कृतम् ॥ ५३९ ॥

अहिंसायाश्च व्याख्यानं, वेदश्रुतिस्मृतेस्तथा ।
युक्तिप्रमाणपूर्वेण, बलिदानं निषेधितम् ॥ ५४० ॥

विजयादशमी काले, मूकजन्तोर्विनाशनम् ।
लिखितं नैव कुत्रचित्प्रमाणेनैव साधितम् ॥ ५४१ ॥

अहिंसा परमोधर्मः, अहिंसा परमं तपः ।
यत्र जीवदया नास्ति, तत्सर्वं परिवर्जयेत ॥ ५४२ ॥

मनुस्मृतौ—

अनुमन्ता विशसिता, निहन्ता क्रयविक्रयी ।
संस्कर्त्ता चोपकर्त्ता च, खादकश्चेति घातकाः ॥ ५४३ ॥

एकस्मिन्मारणे जीवे, सप्तसु पापता भवेत् ।
व्याख्यानं तादृशं श्रुत्वा, महाराणाः प्रहर्षिताः ॥ ५४४ ॥

कम्बलं गुरुदानाय, वह्वी च प्रार्थना कृता ।
कम्बलं स्तोककालाय, मह्यं च नैव रोचते ॥ ५४५ ॥

यदि दानाय चेच्छा, स्याद्दीयतां चाभयं सदा ।
एकविंशतिजीवानां, मारणं च निषिध्यताम् ॥ ५४६ ॥

विधानं यदि शास्त्रेषु, केनाऽपि च निगद्यते ।
मत्समीपे समानेयः, सोऽपि च सर्वथा त्वया ॥ ५४७ ॥

गुरूपदेशबोधेन, दत्तं चाभयदानकम् ।
सर्वदा प्राणिनां तेषां, महाराणैश्च तत्क्षणे ॥ ५४८ ॥

जैनमन्दिरमध्ये च, लुम्पकाः सर्वसाधवः ।
तत्र स्थित्वा च देवानां, कुर्वन्त्याशातनां बहु ॥ ५४९ ॥

खण्डयन्ति च तां मूर्त्तिं, निन्दां कुर्वन्ति सर्वथा ।
भवद्राज्ये च तेषां वै, तत्र निषेधनं वरम् ॥ ५५० ॥

आज्ञा निष्कासिता तैश्च, वारातेरैश्च साधुभिः ।
मेदपाटेषु कुत्रचिन्न, स्थेयं जैनमन्दिरे ॥ ५५१ ॥

प्रजाजनस्य त्रासोऽपि, अधिकारि जनेन च ।
कृतश्च ज्ञापितस्तत्र, महाराणेन शोचितम् ॥ ५५२ ॥

सर्वेषां सुखशान्त्यर्थं, गुरूणां देशना खलु ।
श्रुत्वा चमत्कृता स्वान्ते, हर्षावेशः प्रदर्शितः ॥ ५५३ ॥

पुस्तकं भेटरूपेण, प्रदत्तं नैकशस्तदा ।
स्वकीय कोशदानं च, महाराणैः कृतं तथा ॥ ५५४ ॥

अतीव प्रेमसद्भावः, फत्तेसिंहेन दर्शितः ।
पूर्वकालीन सम्बन्धः, योजितो धर्मभावतः ॥ ५५५ ॥

प्रदाय धर्मलाभं च, निवृत्ता गुरवस्ततः ।
युवराजस्य हर्म्येषु, तन्निमन्त्रणयोगतः ॥ ५५६ ॥

गुरूणामागतिं दृष्ट्वा, युवराजा प्रहर्षिता ।
समयाभावतस्तत्र, स्तोककालं स्थितास्तथा ॥ ५५७ ॥

प्रेमभावोपदेशं च, दत्त्वा तस्मात्समागताः ।
उपाश्रये च भव्यानां, मेदनी समुपस्थिताः ॥ ५५८ ॥

मीलनं तत्र तेषाञ्च, श्रुत्वा श्राद्धाः प्रहर्षिताः ।
गुरुदेवस्य कीर्त्तिश्च, तद्राज्ये प्रसृतास्तदा ॥ ५५९ ॥

चातुर्मासिकमध्ये च, भोजने केनचित्कदा ।
विषं दत्त्वा च साधुभ्यः, प्रदत्तं दैवयोगतः ॥ ५६० ॥

तदाहारश्च पूज्येन, इन्द्रेण भक्षितस्तदा ।
पूर्वञ्च गुरुदेवानां, भ्रमिर्देहे समागता ॥ ५६१ ॥

पश्चाद्भ्रान्तिश्च सञ्जाताः, नीलपित्तादिरूपतः ।
नैकशो वमनं जातं, वैद्यास्तत्र समागताः ॥ ५६२ ॥

औषधीनां प्रयोगेन, परीक्षितं विषं तथा ।
राज्ञां च ज्ञापितं केन, आगता राजसैनिकाः ॥ ५६३ ॥

कस्य गृहस्य चाहारः, भवतां च समागतः ।
गुरुणा कथितं तत्र, साधुभिर्नैव ज्ञायते ॥ ५६४ ॥
अनेक जैन हर्म्येषु, आहारो गृह्यते मया ।
अतो नैव निगद्येत, अमुकस्यैव रोटिका ॥ ५६५ ॥
कलङ्कदानकार्यं च, नास्माभिश्च विधीयते ।
अतः परं न पृष्टव्यमागत्य साधुसम्मुखे ॥ ५६६ ॥
जानता साधुनाऽऽहारः, कथितो नैव तत्क्षणे ।
कथने श्राद्धभार्यायाः, मृत्युता परिजायते ॥ ५६७ ॥
शुद्धोपचारकर्त्तव्ये, गुरूणां सुखशान्तिता ।
यावदशान्तिता साधोः, तावच्छ्राद्धस्य नो भवेत् ॥ ५६८ ॥
गुरूणां शान्तिसञ्जाते, श्रावकैर्भोजनं कृतम् ।
धन्यास्ते श्रावका ज्ञेया, धर्मदुःखेन दुःखिताः ॥ ५६९ ॥
चातुर्मासिकपूर्णान्ते, गृहीतं चान्यस्थानकम् ।
हस्तिपोलप्रतिद्वारे, निवासो गुरुणा कृतः ॥ ५७० ॥
सिद्धाचलस्य यात्रायै, सङ्घेन सह निर्गताः ।
तत्पट्टो यत्र वद्धश्च, तत्रैव ते गताः खलु ॥ ५७१ ॥
सिद्धाचलस्य पूजाऽपि, कृता च संघसज्जनैः ।
पूजा भणनमध्ये च, श्राद्धाः केचित्समागताः ॥ ५७२ ॥
श्रीलालादिकसाधूनां, चातुर्मासिक पूर्णके ।
गोविन्दधर्मशालायां, मन्दिरं यत्र वर्तते ॥ ५७३ ॥

आगमनं च तेषां वै, आगतेऽह्नि प्रजायते ।
मन्दिरमार्गमध्ये च, कुर्वन्ति च गतागती ॥ ५७४ ॥
अशुचिपात्रमध्ये च, गृहीत्वा यान्ति ते जनाः ।
आशातना प्रभूणां च, बह्वी तत्र प्रजायते ॥ ५७५ ॥
इमां वार्त्तां च श्रुत्वैव, आहूतास्तत्र भावुकाः ।
श्रावकैः कथितं तत्र, मन्दिरं तस्य वर्तते ॥ ५७६ ॥
नास्माभिः कथ्यते किञ्चित्कथने कलहो भवेत् ।
अतो मौनं विधातव्यं, विचारो मादृशामयम् ॥ ५७७ ॥
गुरुणा कथितं तत्र, सुन्दरं नैव मन्यते ।
कोठारीणां समाहूय, ज्ञापितं सूरिपुंगवैः ॥ ५७८ ॥
त्वत्साधूनां समीपे च, गत्वा चैवं निगद्यताम् ।
गोविन्दधर्मशालायां, गमनं नैव शोभनम् ॥ ५७९ ॥
युष्माभिर्यदि गम्येत, तदा भवेन्न शोभनम् ।
दशभिः साधुभिः सार्द्धं, तत्रैव गम्यते मया ॥ ५८० ॥
वार्त्तां च तादृशीं श्रुत्वा, कम्पिताः सर्वश्रावकाः ।
कोठारिणा च गत्वैवं, तत्र सर्वं निवेदितम् ॥ ५८१ ॥
लुम्पकैः साधुभिस्तत्र, कथितं श्राद्धसन्निधौ ।
त्वदीय धर्मशालायां, नागच्छामो वयं खलु ॥ ५८२ ॥
अन्यस्यां धर्मशालायां, गमिष्यामस्ततस्तथा ।
समाचारो गुरूणां च, मार्गेषु मीलितस्तदा ॥ ५८३ ॥

वाग्बलेन गुरूणां च, सर्वं कार्यं प्रजायते ।
धर्मश्रद्धा च तेषां वै, अस्थिमज्जासु जायते ॥ ५८४ ॥
धर्माय प्राणदानं च, गुरुणा क्रियते सदा ।
ढुण्ढकानां च साम्राज्ये, हृदि निर्भयता खलु ॥ ५८५ ॥
विहारः क्रियते तस्माद्धुलेवा नगरे तथा ।
अन्त्योपदेशदाने च, जीर्णोद्धारविधानके ॥ ५८६ ॥
सर्वेषां कथितं तत्र, इदं कार्यं विधीयताम् ।
भवतां सुखशान्तिश्च, सर्वदा परिजायते ॥ ५८७ ॥
धर्मप्रसादतः शान्तिः, सर्वस्य सर्वथा खलु ।
अन्यथाऽऽकाशपुष्पवत्क्वापि नैव प्रजायते ॥ ५८८ ॥
वचनं मानितं तैश्च, कारिता धर्मभावना ।
ततो विहृत्य गच्छन्ति, धूलेवानगरे पुनः ॥ ५८९ ॥
तीर्थयात्रां विधायैव, प्रस्थानं कर्तुमिच्छता ।
गौर्जरः सङ्घसद्भावः, दृष्टश्च गुरुणा तदा ॥ ५९० ॥
त्वया सहैव त्वद्देशे, आगन्तुं भावना मम ।
भवदिच्छा प्रजायेत, आगम्यते तदा मया ॥ ५९१ ॥
आगत्य श्रावकास्तत्र, कुर्वन्ति प्रार्थनां तदा ।
भवादृक् पूज्यपादानां, कल्याणमागतौ मम ॥ ५९२ ॥
आगमनं च युष्माकं, कदा भवेच्च कथ्यताम् ।
जायते भवतां तर्हि, तदा ममाऽपि योजना ॥ ५९३ ॥

सङ्घेन सह गन्तव्ये, व्याख्यानं मार्गमध्यके ।
प्रतिदिनं च जायेत, भयादिकं न कुत्रचित् ॥ ५९४ ॥

निर्भयं सर्वथा तत्र, गुरवः सङ्घपुरे गताः ।
तत्रत्य श्राद्धवर्येण, भक्तिभावः प्रदर्शितः ॥ ५९५ ॥

ततो व्याघ्रपुरे गत्वा, भावसारप्रबोधनम् ।
शुद्धमानं च तद्भोज्यं, गृहीतं प्रेमयोगतः ॥ ५९६ ॥

तेषां च धर्मभावश्च, प्रतिदिनं प्रवर्धते ।
द्वादशादिव्रतं सर्वं, गृहीतं भावशुद्धितः ॥ ५९७ ॥

प्रान्तिजाः श्रावकास्तत्र, गुरुपार्श्वे समागताः ।
तद्ग्रामायैव गन्तव्ये, कुर्वन्ति प्रार्थनां तदा ॥ ५९८ ॥

गत्वा च प्रान्तिजे ग्रामे, कुर्वन्ति दर्शनं शुभम् ।
विशालं मन्दिरं तत्र, वर्त्तते ग्राममध्यके ॥ ५९९ ॥

जैनेतरीय भव्यानां, आग्रहात्सूरिणा तदा ।
व्याख्यानं धर्मशालायां, कृतं च धर्महेतवे ॥ ६०० ॥

स्वामिनारायणे धर्मे, गताश्च श्रावकाः कति ।
वैष्णवधर्मयोगेषु, केचिद्गताश्च श्रावकाः ॥ ६०१ ॥

तेषां च प्रतिबोधाय, जैनधर्मप्रभावजम् ।
व्याख्याने वेदशास्त्रेभ्यः, प्राचीनजैनधर्मकम् ॥ ६०२ ॥

दर्शितं युक्तिपूर्वेण, शुद्धं सनातनं तथा ।
श्रुत्वा चमत्कृताः सर्वे, वेदानुयायिनस्तदा ॥ ६०३ ॥
भवादृग्गुरवो नैव, विद्यन्ते भारतेऽधुना ।
सूरयस्तादृशा धन्याः, यैः कृता धर्मभावना ॥ ६०४ ॥
धर्मे श्रद्धा दृढा तेषां, कारिता धर्मबोधतः ।
सामायिकादि पूजायाः, करणे च समुद्यताः ॥ ६०५ ॥
आचारे निपुणाः सर्वे, कारिता गुरुदेवकैः ।
आवश्यकादिकार्यं च, कुर्वन्ति बहुभावतः ॥ ६०६ ॥
सिंहावलोकन्यायेन, यथा किंचिन्निगद्यते ।
उदयपुरमध्येषु, साधुश्च पादलिप्ततः ॥ ६०७ ॥
मग्नत्रिभुवनेनैवं, संयुक्तश्च समागतः ।
गुरुकुलस्य पोषाय, तन्वन्ति प्रार्थनां तदा ॥ ६०८ ॥
प्राक्श्रुता गुरुणा वार्त्ता, कथिता तस्य सन्निधौ ।
प्रतिबिम्बं च पादानां, तलेषु कूर्चनं खलु ॥ ६०९ ॥
विद्यार्थिद्वारतो नैव, कर्त्तव्यं तव युज्यते ।
आशातनासु सर्वत्र, शुभागतिर्न जायते ॥ ६१० ॥
अन्यच्च पाठशालासु, यच्छोभनं तत्कार्यताम् ।
अतस्त्वयाऽपि सत्कार्यं, कर्त्तव्यं सर्वदाखलु ॥ ६११ ॥
हर्षचन्द्रं समाहूय, अतएव च दीक्षितः ।
व्यवस्था शुद्धरीत्या च, तत्रैव न प्रजायते ॥ ६१२ ॥

---

१ गुरुकुलेषु

सहस्राणां च पञ्चाशद्व्ययश्च देशनादितः ।
श्रावकेन कृतस्तत्र, फले च स्वल्पता भवेत् ॥ ६१३ ॥

विहारस्तद्धि युज्येत, तत्र स्थातुं न कल्प्यते ।
यदि साधुत्वसद्भावः, हृदये विद्यते क्वचित् ॥ ६१४ ॥

आत्मकल्याणहेतुत्वे, त्यक्ता स्थानकवासिता ।
उत्तमकुलजातानां, तादृशं नैव शोभते ॥ ६१५ ॥

गुरूणां मिष्टवाक्येन, अश्रुपातश्च जायते ।
करिष्यामि न तादृशं, गुरो ! तवोपदेशतः ॥ ६१६ ॥

ततो गत्वा त्रिछात्राश्च, दीक्षिता कच्छदेशके ।
प्रबलरोगयोगेन, महाशया दिवंगता ॥ ६१७ ॥

साहसिकाख्यकार्ये च, कर्त्तव्ये सुदृढो मतः ।
गुरुत्वं गुरुदेवानां, मन्यते सर्वथा खलु ॥ ६१८ ॥

उपकारश्च मन्येत, मङ्गलविजयस्य च ।
स्वल्पायुष्कस्य योगेन, संस्थितो लघु भावके ॥ ६१९ ॥

प्रकृतमनुकथ्येत, गुरुदेवस्य जीवनम् ।
प्रान्तिजग्राममध्ये च, देहग्रामीयभावुकाः ॥ ६२० ॥

लिम्बस्थाः श्रावकाः सर्वे, विज्ञप्त्यर्थं समागताः ।
राजनगरवास्तव्याः, श्राद्धास्तत्रैव चागताः ॥ ६२१ ॥

प्राग् राजनगरे चैव, गन्तव्यं चान्यतस्तया ।
उपरियालतीर्थेषु, इत्येवं भावना सका ॥ ६२२ ॥

राजनगरगन्तव्ये, निर्णयस्तत्र कारितः ।
ततोऽनु दैहिके ग्रामे, गम्यते गुरुणा तदा ॥ ६२३ ॥

विद्याविजयसाधूनां, निवासोऽस्ति पुरा तथा ।
मथुरादिकसभ्यानां,–माग्रहश्च प्रजायते ॥ ६२४ ॥

सर्वं च देहग्रामं तदलङ्कृतं च भावतः ।
वाद्यादि सर्वसामग्री, लोकबोधाय चानीता ॥ ६२५ ॥

अतीवोत्साहपूर्वेण, प्रवेशः कारितः किल ।
दर्शनं जिनदेवानां, कृतं च भावभक्तितः ॥ ६२६ ॥

हर्षचन्द्रस्य मूवाडे, विद्याविजयसाधवः ।
भगिनीपतिबोधाय, मङ्गलादि समन्विता ॥ ६२७ ॥

चतुर्थव्रतदानाय, क्रिया सर्वा च कारिता ॥
प्रभावनादिकार्यं च, विहितं तेन तत्क्षणे ॥ ६२८ ॥

देहग्रामस्य मध्ये च, स्कुलादि सर्वस्थानके ।
गुरूणां देशना नित्यं, जायते सुखशान्तये ॥ ६२९ ॥

मन्दिराशातना सर्वा, निष्कासितोपदेशतः ।
आवश्यकक्रियायां च, योजिताः सर्वश्रावकाः ॥ ६३० ॥

व्रतनियमसद्भावः, केषाञ्चिद्धृदये खलु ।
संजातो गुरुयोगेन, पूरितो व्रतदानतः ॥ ६३१ ॥

राजनगरवैहारः, गुरुणा च कृतस्तदा ।
अनेकश्रावकास्तत्र, समागच्छन्ति प्रेमतः ॥ ६३२ ॥

राजनगरपर्यन्तं, चलन्ति श्रावका बहु ।
तत्रत्याश्च समायाताः, गुरूणां सन्निधौ तदा ॥ ६३३ ॥

शाहपुरे स्थिता गत्वा, गुरवः श्रावकास्तथा ।
शाहपुरादि भक्तैश्च, आगत्य प्रार्थना कृता ॥ ६३४ ॥

नगरस्थैश्च तत्रैव, प्रवेशे चाग्रहः कृतः ।
शाहपुरीय भव्यानां, पूर्वीय प्रार्थना खलु ॥ ६३५ ॥

शाहपुरे च गन्तव्यं, प्रागिति निर्णयः कृतः ।
ततोऽनुपुरभव्यानां, सर्वलाभो भविष्यति ॥ ६३६ ॥

प्रवेशोत्सवता सर्व—नगरस्थैश्च भावुकैः ।
भक्तिप्रबलयोगेन, कारिताऽनेकमंदृतः ॥ ६३७ ॥

सर्वा च वाद्यसामग्री, योजितास्तन्निवासिभिः ।
नगरे घोषितं तत्र, श्वः प्रवेशः प्रजायते ॥ ६३८ ॥

समस्तसाधुवर्याणां, व्याख्यानं नैव जायते ।
घोषितं सर्वश्राद्धैश्च, शुभागमनहेतवे ॥ ६३९ ॥

अभूतपूर्वप्रवेशश्च, गुरूणां च निगद्यते ।
समस्तश्रावकाः श्रेष्ठि—वर्याश्च तत्र चागताः ॥ ६४० ॥

पञ्चवादनपर्यन्तं, प्रमिलत्वा नगरे समे ।
शाहपुरे समायाताः, साधुभिश्च युताः खलु ॥ ६४१ ॥

व्याख्याने मंगलं चैव, श्रावितं गुरुणा तथा ।
पक्षपातस्य राहित्यं, दर्शितं सर्वसन्निधौ ॥ ६४२ ॥

विभिन्न दृष्टिता युक्ताः, सर्वे श्राद्धाः समागताः ।
अस्माकं चैकदृष्टिश्च, श्रावकेषु प्रजायते ॥ ६४३ ॥

येन केन प्रकारेण, कल्याणं तस्य सम्भवेत् ।
प्रकारेणैव तेनापि, वर्तितव्यं मया सदा ॥ ६४४ ॥

सर्वेषु साम्यभावत्वं, सर्वेषु समता समा ।
सर्वेषु हितबुद्धिश्च, जायते नात्र संशयः ॥ ६४५ ॥

प्रतिविथ्यं च भव्याश्च, व्याख्यानाय समागताः ।
प्रातर्विथ्याप्रवेशश्च, बहुभक्त्या प्रजायते ॥ ६४६ ॥

गत्वा माङ्गलिकं पूर्वं, श्राव्यते गुरुणा सदा ।
मध्याह्ने पोलमध्येषु, सभामण्डपयोजितः ॥ ६४७ ॥

सार्वजनीनबोधश्च, गुरुणा प्रविधीयते ।
नवयुवकवर्गाणां, व्यसनदूरनाशकः ॥ ६४८ ॥

धार्मिक्यां च क्रियायां च, प्रेरणात्मकतायुतः ।
धर्मे शिथिलभव्यानां, उत्साहः परिवर्धकः ॥ ६४९ ॥

दशसहस्रसंख्याकाः, श्रवणाय समागताः ।
प्रतिव्याख्यानकालेषु, विज्ञेया भावुकास्तदा ॥ ६५० ॥

शङ्कासमाधिपोषाय, समयस्तत्र योजितः ।
रात्रौ च भावना तत्र, जायते धर्मपोषिका ॥ ६५१ ॥

झांपडापोलमध्ये च, व्याख्यानं प्रथमं मतम् ।
लक्ष्मीनारायणे ज्ञेयं, द्वितीयं सर्वहितावहम् ॥ ६५२ ॥

राजाम्हेताऽऽख्यविथ्यां च, तृतीयं परिकीर्त्तितम् ।
दोशीवाटकमध्ये च, चतुर्थं जायते शुभम् ॥ ६५३ ॥
झवेरीपाटके मध्ये, पञ्चमं सुखदं मतम् ।
पतासापोलमध्ये च, षष्ठं व्याख्यानकं भवेत् ॥ ६५४ ॥
सप्तमं चाष्टमं चैव, नगरे भिन्नस्थानके ।
द्वादशदिनस्थित्यां च, व्याख्यानस्याष्टकं भवेत् ॥ ६५५ ॥
रात्रौ च भावना ज्ञेया, व्याख्यान द्वितीयं दिने ।
शङ्कासमाधिकालश्च, योजितो बहुवेगतः ॥ ६५६ ॥
शान्तिसागरपक्षीयाः, श्रावकाश्च समागताः ।
धर्मचर्चाविधानाय, गुरूणां सन्निधौ तदा ॥ ६५७ ॥
तदीय प्रश्नसञ्जाते, उत्तरं शान्तिपूर्वकम् ।
सूत्रसिद्धान्तयोगेन, श्रुत्वा ते च प्रहर्षिताः ॥ ६५८ ॥
क्रियारुचि विना नैव, कल्याणं जायते क्वचित् ।
शुक्लपक्षीयता तेषु, क्रियावादिषु जायते ॥ ६५९ ॥
क्रियावान् पण्डितो ज्ञेयः, व्यसनिनः परे मताः ।
अतः क्रियासु सत्स्वेवं, कार्यं सर्वं प्रजायते ॥ ६६० ॥
इति धर्ममयर्वाक्यैः, बोधितास्ते च श्रावकाः ।
स्वीय स्वीय गृहे गत्वा, स्तुतिं कुर्वन्ति भावतः ॥ ६६१ ॥
यादृशं च श्रुतं नाम, तादृशी ज्ञानता तथा ।
शान्तिश्च सर्वगाम्भीर्यं, मय्येऽपूर्वा विलोक्यते ॥ ६६२ ॥

गुलाबविजयादीनां, भाण्डागारो विलोकितः ।
सर्वनगरचैत्यानां, दर्शनं विहितं शुभम् ॥ ६६३ ॥
कमलविजयाख्याश्च, महात्मानः समागताः ।
हठीभाईप्रसादेषु, स्वकीयसाधुसंयुताः ॥ ६६४ ॥
आगत्य दर्शनं कृत्वा, पश्चाच्च गुरुसन्निधौ ।
गुरूणां मीलनेनैव, प्रमोदः परिदर्शितः ॥ ६६५ ॥
पूर्वकालीन योगेन, आकृष्टं निजमानसम् ।
गुरुणा प्रेमपूर्वेण, सद्भावोऽति प्रदर्शितः ॥ ६६६ ॥
केशरविजयाद्याश्च, साधवोऽपि समागताः ।
आचार्यपददानाय, इच्छा तत्र प्रदर्शिता ॥ ६६७ ॥
सर्वेषां तत्र साधूनां, यदीच्छा मानसे भवेत् ।
तदा तैरेव सम्प्रोक्तं, गुरूणां सर्वसन्निधौ ॥ ६६८ ॥
पदवीग्रहणकार्याय, विचारो मानसे यदा ।
अस्माभिः शिष्यवृन्दैश्च, पदवी प्रदाप्यते तदा ॥ ६६९ ॥
महात्मना पुनः प्रोक्तं, शिष्याणां भावना यदि ।
निषिध्यते मया नैव, सूरिणा स्पष्टता कृता ॥ ६७० ॥
कमलविजयाद्याश्च, साधवो भुवि दुर्लभा ।
सुयोग्यशान्तरूपाश्च, पदवी च तेषु शोभते ॥ ६७१ ॥
योग्यस्य योग्यदाने च, शिष्यशोभा प्रवर्धते ।
उपकारोऽपि चास्माकं, योगक्रिया विधापने ॥ ६७२ ॥

संघसमक्षदाने च, शोभाऽतीव प्रजायते ।
शुभे लग्ने च दातव्या, शिष्यैः सर्वैः समन्वितैः ॥६७३॥
इत्यादि शुभवार्तां च, कृत्वा च गुरवो गताः ।
विहारस्यैव सद्भावः, गुरुणा परिदर्शितः ॥ ६७४ ॥
राजनगरसङ्घैश्च, सम्मील्य प्रार्थना कृता ।
चातुर्मासाय तत्काले, आगत्य गुरुसन्निधौ ॥ ६७५ ॥
तदीयां प्रार्थनां श्रुत्वा, गुरुणा शान्तभावतः ।
कथितं तच्च विज्ञेयं, सर्वेषां तत्र सम्मुखे ॥ ६७६ ॥
अमुकोपाश्रये चैते, नागच्छन्ति च श्रावकाः ।
अन्ये चान्यत्र नायान्ति, वन्दनं तत्र विद्यते ॥ ६७७ ॥
व्याख्यानसमये चाछाद्य, मुखं यदा च वाचयेद् ।
तदा नायान्ति चान्येऽपि, गच्छन्ति चान्यस्थानके॥६७८॥
सर्वेषां लाभता नैव, व्याख्यानस्य प्रजायते ।
अतएव न स्थातव्यं, चातुर्मासाय चात्र वै ॥ ६७९ ॥
श्रीसंघेन च तच्छ्रुत्वा, वचस्तथ्यं च मानितम् ।
चातुर्मासाय सूरीणां, स्थानं चान्यद्धि गृह्यते ॥ ६८० ॥
विचार्य तत्र सङ्घेन, टङ्कशाला च निर्णीता ।
गुरुपार्श्वे समागत्य, निवेदितं च तत्क्षणे ॥ ६८१ ॥
उपरियालयात्रायै, मयाऽधुना च गम्यते ।
वचनं च ततः पश्चाद्दास्यामि संघसम्मुखे ॥ ६८२ ॥

विहारश्च कृतस्तस्माद्गुरुणा संघसज्जनैः ।
श्राद्धवर्यस्य हर्म्येषु, साभ्रमतीनदीतटे ॥ ६८३ ॥

वात्सल्यं श्राद्धवर्येण, कृतं चातीव भावतः ।
प्रातःकाले ततोऽन्यत्र, चलन्ति साधवः सुखम् ॥ ६८४ ॥

ततो विहृत्य कल्लोले, ततः पानसरे खलु ।
ततः कैयलग्रामे च, ततो लींचे समागताः ॥ ६८५ ॥

मङ्गलविजयस्यैव, जन्मभूमिश्च सा मता ।
कुटुम्बं तस्य तत्रैव, विद्यते बहुलं तथा ॥ ६८६ ॥

ततत्सम्बन्धिजनाश्चैव, पाञ्चोटादिनिवासिनः ।
अनेके तत्र चायान्ति, दर्शनाय च साधूनाम् ॥ ६८७ ॥

प्रवेशोत्सवता सर्वा, कृता च ग्रामसज्जनैः ।
आदिदेवप्रभूणां च, दर्शनं साधुभिः कृतम् ॥ ६८८ ॥

शोभनं मन्दिरं तत्र, अपूर्वशिल्पिना कृतम् ।
त्रितलीयं च तद्ग्रामे, दृश्यते सुमनोहरम् ॥ ६८९ ॥

राजादनस्य वृक्षोऽपि, विद्यते तदधस्तले ।
पादुका चादिदेवानां, स्थापिता च ततः परम् ॥ ६९० ॥

दर्शनं तत्र सर्वत्र, कृतं चातीवभावतः ।
पूजा प्रभावना सर्वं, दलीचन्द्रैः कृतं तथा ॥ ६९१ ॥

स्वामिवात्सल्यता तत्र, दलीचन्द्रेण कारिता ।
ग्रामवाह्येषु च स्कूलादौ, व्याख्यानं मङ्गलैः कृतम् ॥६९२॥

ग्रामस्य जनता सर्वा, चागता बहुभावतः ।
सार्वजनीन सद्बोधः, सर्वस्य लाभदायकः ॥ ६९३ ॥
श्रुत्वा च देशना तस्य, सर्वे प्रहर्षिता जनाः ।
धर्मचर्चाविधानाय, रात्रौ सर्वे समागताः ॥ ६९४ ॥
स्वीय ग्रामस्य साधूनां, व्याख्यानं बहु शोभनम् ।
श्रुत्वा च भव्यजीवानां, जायते मोदभावना ॥ ६९५ ॥
गुरूणां श्रमिरोगश्च, नगरीय परिश्रमात् ।
संजातस्तत्र ग्रामे च, स्थैर्यं दिनत्रयी भवेत् ॥ ६९६ ॥
ग्राम्यजनोपचारेण, रोगशान्तिः प्रजायते ।
ततो विहृत्य चान्यत्र, झोटाना ग्राममध्यके ॥ ६९७ ॥
अम्बासणे च गत्वैव, दर्शनं मङ्गलादिभिः ।
कृतं तत्रोपदेशश्च, प्रदत्तो बहुभावतः ॥ ६९८ ॥
स्थैर्याय प्रार्थना बह्वी, तद्ग्रामस्थैश्च सज्जनैः ।
समयाभावतस्तत्र, स्थिरता न विधीयते ॥ ६९९ ॥
ततः सूर्यपुरे गत्वा, ततश्च भोयणीस्थले ।
गत्वा च शुभयात्राऽपि, कृता च गुरुणा सह ॥ ७०० ॥
ततो रामपुरे ग्रामे, व्याख्यानं च कृतं शुभम् ।
दर्शनं देवदेवस्य, विहितं शुभयोगतः ॥ ७०१ ॥
वीरमग्रामसामीप्ये, यदा च गुरवो गताः ।
ग्रामवासि जनाः सर्वे, आगताः गुरुसम्मुखे ॥ ७०२ ॥

भडाणाख्ये च सद्ग्रामे, मङ्गालाद्याः समागताः ।
तेऽपि ततो विहृत्यैव, आगता गुरुसामीपे ॥ ७०३ ॥

अतीव भक्तिभावेन, सामग्री सर्वसंयुताः ।
श्रावका ग्राममुख्याश्च, चागता गुरुदर्शने ॥ ७०४ ॥

बहुकाले च संजातं, गुरूणां दर्शनं पुनः ।
बहु सन्मानपूर्वेण, प्रवेशः कारितस्तदा ॥ ७०५ ॥

गत्वा पुरे प्रभूणां च, दर्शनं प्राकृतं खलु ।
ततो व्याख्यानकं दत्तं, प्रमोदभावना युतम् ॥ ७०६ ॥

उपरियालयात्रायै, सर्वत्र चोपदेशतः ।
प्रतिज्ञा गुरुदेवेन, कारिताश्चागतास्ततः ॥ ७०७ ॥

तेषां तत्रैव स्थैर्यार्थं, व्यवस्था च कृता न वा ।
अन्यथा यात्रिकानां च, बहुकष्टं पतिष्यति ॥ ७०८ ॥

स्वामिभक्तिमहापुण्य—कारिका धर्मसम्मता ।
प्रयत्नेन विधातव्या, उत्तमफलकांक्षिणा ॥ ७०९ ॥

सेवाकरणकार्यार्थ, व्यवस्था सङ्घसज्जनैः ।
कृता विशुद्धभावेन, यात्रिकसुखशान्तये ॥ ७१० ॥

फाल्गुनशुक्लपञ्चम्यां, विहारो गुरुणा कृतः ।
उपरियालतीर्थेषु, सङ्घस्तत्र समागतः ॥ ७११ ॥

वस्त्रगृहाणि तत्रैव, कृतानि नैकशस्तथा ।
भोजनादिप्रकारश्च, व्यवस्था पूर्वको मतः ॥ ७१२ ॥

पूजाभणनकार्याय, मण्डपो विहितः शुभः ।
विशालः सुमनोहारी, सेवाभाविजनेन वै ॥ ७१३ ॥
व्याख्यानमण्डपस्तस्मात्किञ्चिद्दूरे कृतस्तथा ।
गुरूणां देशनाश्रुत्यै, व्यवस्था कारिता शुभा ॥ ७१४ ॥
आग्रातश्च समारम्य, यूपीतो मेदपाटतः
मरुदेशीय भव्याश्च, गोड़वाडसमुद्भवाः ॥ ७१५ ॥
गौर्जरादिक देशेभ्यः, जनास्तत्र समागताः ।
भूंडस्टेशनमार्गेण, आगतिर्जायते शुभा ॥ ७१६ ॥
दर्शनं गुरुदेवानां, क्रियते भावशुद्धितः ।
प्रभूणां मन्दिरे गत्वा, पूजाऽपि द्रव्यभावतः ॥ ७१७ ॥
विना च कारणं नैव, कार्यं कुत्रापि जायते ।
द्रव्यं च कारणं ज्ञेयं, पर्यायः कार्यरूपकः ॥ ७१८ ॥
मृत्स्नादिकारणेनैव, घटकार्यं प्रजायते ।
तंत्वादिहेतु सामग्र्या, पटोत्पत्तिर्यथा भवेत् ॥ ७१९ ॥
यथा वाक्यसमूहेन, बोधकार्यं वितन्यते ।
तथैव द्रव्यपूजातः, विशुद्धा भावना भवेत् ॥ ७२० ॥
यादृशी द्रव्यसामग्री, भावना तस्य तादृशी ।
शक्तिगोपनकर्त्तव्ये, वीर्यातिचारिता मता ॥ ७२१ ॥
तथैव भावुकास्तत्र, सामग्री विपुलेन वै ।
कुर्वन्ति प्रभुपूजां च, भावयन्ति च भावनाम् ॥ ७२२ ॥

साधारणवस्तूनां च, त्रुटिस्तु पुष्कला तदा ।
देवद्रव्यं च शालायां, श्रावकेन व्ययीकृतम् ॥ ७२३ ॥
धर्मशाला च तद्द्रव्यैः, निर्मिता यदि विद्यते ।
साधूनां श्रावकानां च, उत्तरितुं न कल्पते ॥ ७२४ ॥
विशुद्धिर्देवद्रव्यस्य, यावता न विधीयते ।
तावता धर्मध्यानं च, सङ्घैः कर्तुं न युज्यते ॥ ७२५ ॥
गुरुणा देशनाकाले, सर्वं तच्च स्फुटीकृतम् ।
ग्रामपञ्चकभव्यानां, उपालम्भः कृतो बहु ॥ ७२६ ॥
साधारणोपदेशश्च, प्रबलवेगतः कृतः ।
आगन्तुकैश्च सर्वैश्च, द्रव्यं तत्रैव चार्जितम् ॥ ७२७ ॥
देवद्रव्यस्य सम्पूर्त्तिः, उपदेशात्प्रजायते ।
पापबन्धविधानाच्च, श्रावका मोचितास्तदा ॥ ७२८ ॥
अधिकदेवद्रव्येण, जीर्णोद्धारो विधीयताम् ।
अन्यथा श्राद्धपाशेन, पुनरन्यद्वितन्यते ॥ ७२९ ॥
बजाणा ग्रामवास्तव्याः, नवावास्तत्र चागताः ।
तेषां व्याख्यानकं दत्त्वा, भूमिका दर्शिता खलु ॥७३०॥
प्राचीनं मन्दिरं चात्र, तस्यैव चिह्नरूपकम् ।
जीर्णेष्टिकादिकं सर्वं, दृश्यते स्फुटरूपतः ॥ ७३१ ॥
सङ्घेभ्यो भूमिका साऽपि, दीयतां राजधर्मतः ।
भूमिका दानकार्यं च, राज्ञां धर्मो निगद्यते ॥ ७३२ ॥

उपदेशं च तच्छ्रुत्वा, नवाबैः कथितस्तदा ।
यावती भूमिका तुभ्यं, रोचते गृह्यतां तथा ॥ ७३३ ॥

उदारवृत्तिं राज्ञां च, वचः श्रुत्वा प्रहर्षिताः ।
श्रावका गुरुदेवानां, स्तुतिं कुर्वन्ति तत्क्षणे ॥ ७३४ ॥

तीर्थकार्यं विधायैव, विहारः क्रियते यदा ।
माण्डलादिकवास्तव्याः, श्राद्धाः सर्वे समागताः ॥७३५॥

आगन्तव्यं च मद्ग्रामे, पूर्वं हि गुरुणा खलु ।
दशाडादिपुरादौ च, ततोऽनुगम्यतां सुखम् ॥ ७३६ ॥

वीरमग्रामवास्तव्याः, वदन्ति श्रूयतां गुरो ! ।
अस्मद्ग्रामेषु पूर्वं च, आगतिर्युज्यते शुभा ॥ ७३७ ॥

गुरुणा कथितं तत्र, तव ग्रामे मयाऽऽगतम् ।
आगमिष्यामि पश्चाच्च, समयो विद्यते यदा ॥ ७३८ ॥

माण्डलग्राममध्ये च, न्यायविजययोगतः ।
तत्पितृव्यादि भक्तानां, शान्तये तत्र गम्यते ॥ ७३९ ॥

माण्डलग्रामवास्तव्यैः, साकं च विहृतिः कृता ।
अतीव भक्तिभावश्च, दर्शितस्तत्स्थसज्जनैः ॥ ७४० ॥

तद्ग्रामवासिन्यः सर्वा, आगताः सम्मुखे प्रजाः ।
विद्वत्ता मुनिवर्याणामग्रेगच्छति सर्वदा ॥ ७४१ ॥

त्यागमूर्त्तिमुनीनां च, प्रभावो जायते बहु ।
व्याख्यानदर्शनेनैव, सर्वा तत्र चमत्कृता ॥ ७४२ ॥

जीवाडामरभव्यानां, मदस्तु गलितस्तदा ।
विधिना वन्दनां कृत्वा, तिष्ठति नम्रभावतः ॥ ७४३ ॥

कुटुम्बं नवलक्षाख्यं, वर्त्तते ग्राममध्यके ।
संपन्नं धनसंपत्त्या, धर्मकार्येषु तत्परम् ॥ ७४४ ॥

पाठशाला दृढीकारे, उद्यमो विहितो बहु ।
संस्कृतपाठकार्याय, संस्कृता स्थापिता तदा ॥ ७४५ ॥

चतुर्थादि व्रतादानं, क्रियते विधिपूर्वकम् ।
भव्यानां श्रावकानां च, गुरुणा शुद्धभावतः ॥ ७४६ ॥

तत्रत्य सर्वकार्याणि, कृत्वा ततो विनिर्गताः ।
दसाडाग्राममध्ये च, तेषां प्रार्थनया खलु ॥ ७४७ ॥

माण्डलीयाः समे श्राद्धा, दसाडासु समागताः ।
दर्शनं देशनाकार्यं, विहितं सर्वसन्निधौ ॥ ७४८ ॥

हस्तलिखितभण्डारः, गुरुणा प्रविलोकितः ।
माण्डलग्राममध्येऽपि, तद्भण्डारा विलोकिताः ॥ ७४९ ॥

अतीव प्राच्यशास्त्राणां, दसाडे चाकरो मतः ।
सप्तशतं च वर्षान्ताः, ग्रन्थाः प्राच्यतरा मता ॥ ७५० ॥

तत्र नवावसामीप्ये, चीमनलालब्राह्मणः ।
पादलिप्ते च प्रागासीत्, मन्त्रिपदाऽधिकारकः ॥ ७५१ ॥

अधुना च समायातः, नवावनिकटे खलु ।
आगत्य गुरुपार्श्वे च, प्रश्नोत्तरं समादृतम् ॥ ७५२ ॥

गुरूणामुत्तरं श्रुत्वा, हर्षितः स्वीयमानसे ।
कस्यचिदपि कार्यस्य, कर्त्तव्ये योज्यतां त्वया ॥७५३॥

तद्दिने तत्र संजातं, तटाके मत्स्यमारणम् ।
यवनैश्च कृतं ज्ञेयं, श्रावकदृष्टिसम्मुखे ॥ ७५४ ॥

चीमनलालमादाय, गुरवश्च गतास्तदा ।
नवाबमीलनायैव, उपायो योजितः किल ॥ ७५५ ॥

गुरूणामागतिं श्रुत्वा, नवाबेन विचारितम् ।
किमर्थमत्र साधूनामा—गमनं प्रजायते ॥ ७५६ ॥

तदीयपुरुषेणैव, कथितं राजसन्निधौ ।
मत्स्यस्य मारणं चात्र, यवनेन कृतं बहु ॥ ७५७ ॥

तत्कार्ये गुरुदेवानां, घृणा चातीव जायते ।
अहिंसा परमो धर्मः, सर्वशास्त्रेषु कथ्यते ॥ ७५८ ॥

हजरतादिसद्योग्यैः, प्रयाणं जलमार्गके ।
कृतं वोहित्थद्वारा च, यज्जातं तच्च कथ्यते ॥ ७५९ ॥

वार्त्तालापस्तु शैतानैः, कृतः स्यात्तेन तद्दिने ।
वृश्चिकं च जले दृष्ट्वा, दया स्वान्ते समागता ॥ ७६० ॥

जलेषु म्रियते चायं, निरपराधिजन्तुकः ।
रक्षणं च मया कार्यं, गृहीतश्च ततः परम् ॥ ७६१ ॥

प्रक्षिप्तश्च तरीमध्ये, ततोऽपि गतवान् खलु ।
ततश्चोत्पाट्य वोहित्थे, पुनरपि च धारितः ॥ ७६२ ॥
ततो जलेषु सम्प्राप्तः गृहीतश्च ततोऽपि वै ।
एवं रीत्या च कर्त्तव्ये, तेनाऽपि दर्शनं कृतम् ॥ ७६३ ॥
शैतानेन ततः प्रोक्तं, मीलितं च फलं तव ।
हेवानरक्षणे पुण्यं, पश्य कीदृक् समागतम् ॥ ७६४ ॥
हजरतेन सम्प्रोक्तं, पद्धतिस्तस्य चेदृशी ।
दर्शनकार्यकर्त्री च, सर्वेण परिज्ञायते ॥ ७६५ ॥
पण्डितपुरुषाणां च, प्रकृतिर्जीवरक्षणी ।
मुच्यते च कथं सा वै, प्राणैः कण्ठगतैरपि ॥ ७६६ ॥
यस्यैव यादृशं कार्यं, तत्तेनैव विधीयते ।
तदीयं तेन कार्यञ्च, कृतं स्वीयस्वभावतः ॥ ७६७ ॥
मदीयमपि कर्त्तव्यं, मयाऽपि विहितं दृढम् ।
इन्सानैः सर्वजीवैश्च, इदं कार्यं विधीयते ॥ ७६८ ॥
क्षेम सर्वेषु जीवेषु, यदि च नैव विद्यते ।
तदा हेवानरूपास्ते, विज्ञेयाः सर्वमानवैः ॥ ७६९ ॥
उपदेशं च तच्छ्रुत्वा, तदा नगरमध्यके ।
पटहश्च नवावेन, दापितो घोषपूर्वकः ॥ ७७० ॥
अस्य तटाकमध्ये च, मार्यन्ते मत्स्यप्राणिनः ।
केनाऽपि यदि श्रूयेत, तदा दण्डविधानकम् ॥ ७७१ ॥

पञ्चाशद्रूप्यमुद्राणां, दण्डनं क्रियते मया ।
पाण्मासिकस्य पर्यन्तं, बन्दित्वेन विधापनम् ॥ ७७२ ॥

तादृशीं घोषणां श्रुत्वा, श्राद्धाः सर्वे प्रहर्षिताः ।
आगत्य गुरुणा तस्मादाहारो विहितस्तदा ॥ ७७३ ॥

धर्मप्रभावना यादृक्, दृश्यते गुरुमानसे ।
तादृशी चैव नान्यत्र, जैनसाधुषु संभवेद् ॥ ७७४ ॥

प्रबलपुरुषार्थेन, कार्यं किं किं न जायते ।
स्वस्थाने स्थितिकर्त्तव्ये, अरर चेति जल्पने ॥ ७७५ ॥

किमपि नैव जायेत, पुरुषार्थं विना कदा ।
दृष्टान्तं गुरुदेवानामालाम्ब्य, क्रियतां सदा ॥ ७७६ ॥

तद्दिनाद्भक्तता तस्य, गुरूपरि च जायते ।
गुरूणां वचनं तथ्यं, मन्यते तेन सर्वदा ॥ ७७७ ॥

विहृत्य गुरुणा तस्माद् वर्धमाने समागतम् ।
तत्रस्थैः श्रावकैः सर्वैः, केम्पीयेनापि हर्षितम् ॥ ७७८ ॥

गुरुदेवस्य तत्रैव, आगत्य प्रार्थना कृता ।
जयन्ती वीरदेवानां, कारणीयेति मे मतिः ॥ ७७९ ॥

यदि सोत्साहपूर्वेण, कर्तुमिच्छा प्रवर्त्तते ।
आगमिष्यामि केम्पेषु, चान्यथा नगरे खलु ॥ ७८० ॥

केम्पीयाः श्रावकाः सर्वे, उत्साहेनैव पूरिताः ।
ततो हि गुरुदेवेन, कथमन्यत्र गम्यते ॥ ७८१ ॥

विशुद्धा पत्रिका तस्यै, वाटिता सर्वस्थानके।
जयन्ती देशनां श्रोतुमागच्छन्तु च मानवाः ॥ ७८२ ॥

विशालधर्मशालायां, विशालो मण्डपः कृतः।
तत्र व्याख्यानकश्रुत्यै, जनाः सर्वे समागताः ॥ ७८३ ॥

पञ्चसहस्रसङ्ख्याकाः, श्रोतारस्तत्र चागताः।
स्थानकवासिसाधूनां, ज्येष्ठमल्लाभिधावताम् ॥ ७८४ ॥

आगतिस्तत्र सञ्जाता, व्याख्याने प्रार्थना कृता।
यदि च भवतामाज्ञा, तदा मयाऽपि कथ्यते ॥ ७८५ ॥

गुर्वाज्ञाऽनुकूलेनैव, व्याख्यानं विहितं किल।
उपसर्गप्रसङ्गेषु, दत्तं दृष्टान्तकं तदा ॥ ७८६ ॥

चण्डकौशिकनागेन, प्रभूणां मस्तकोपरि।
गत्वा हृदि समागत्य, ततश्चाधोगतो खलु ॥ ७८७ ॥

ततोऽङ्गुष्ठं च सम्प्राप्य, दष्टस्तेनैव पापिना।
प्रभुदृष्टिप्रसादेन, तीर्णश्च भवसागरः ॥ ७८८ ॥

पादांगुष्ठं परित्यज्य, ध्यानस्थस्य प्रभोस्तदा।
मस्तकोपरि गन्तव्ये, युक्तिस्तु निर्बला मता ॥ ७८९ ॥

स्वीयगृहात्समागत्य, दृष्टि ज्वाला च पातिता।
ततः किञ्चिन्न सञ्जातं, ततश्च क्रुद्धचक्षुषा ॥ ७९० ॥

आगत्य प्रभुपार्श्वे च, दष्टं चाङ्गुष्ठकं खलु।
दशने रुधिरस्थाने, दुग्धं निकषितं तदा ॥ ७९१ ॥

तद्दृष्ट्वा स्त्रीयस्वान्ते च, शोचितं तेन तत्क्षणे ।
प्रभुदृष्ट्या सुधावृष्ट्या, सेकश्च प्रभुणा कृतः ॥ ७९२ ॥

बुज्झ ! बुज्झ ! महाभाग ! चण्डकौशिकसज्जन ! ।
प्रभुमधुरवाण्या च, बुद्धः सोऽपि महाशयः ॥ ७९३ ॥

ज्येष्ठमल्लेन तत्रैव, गप्पगोलकरूपकम् ।
दत्तं व्याख्यानकं तच्च, गुरुणा परिमार्जितम् ॥ ७९४ ॥

अन्येषां विदुषां तत्र, व्याख्यानं परिजायते ।
भिन्नविषयमालम्ब्य, प्रभुजीवनमध्यके ॥ ७९५ ॥

घण्टानां पञ्चकं तत्र, व्याख्याने समयो भवेत् ।
सर्वैश्च शान्तभावेन, श्रोतृभिः स्थिरता कृता ॥ ७९६ ॥

द्वितीये दिवसे जाता, रथयात्रा मनोहरा ।
स्नात्रमहोत्सवस्तत्र, विहितो शुभभावतः ॥ ७९७ ॥

मध्याह्ने प्रभुपूजापि, कृता च विधिपूर्विकाम् ।
तत्रत्या मण्डली तत्र, कृतं च गीतगानकम् ॥ ७९८ ॥

पूर्णमासी च तत्रैव, विहिता शुभयोगतः ।
ततो विहृत्य सूरीशैः, वर्धमाने समागतम् ॥ ७९९ ॥

तत्रत्य श्रावकानां च, विज्ञप्तिः प्रचुरा तदा ।
सार्वजनीनव्याख्यानं, सर्वेषां बोधहेतवे ॥ ८०० ॥

कृतं सङ्घाग्रहेणैव, व्याख्यानमण्डपे तथा ।
अन्यस्थाने द्वितीयं च, संजातं धर्मयोगतः ॥ ८०१ ॥

पौषधादिककार्यं च, केम्पे च विहितं यथा ।
तथाऽत्र परिज्ञातव्यं, श्राद्धकल्याणहेतवे ॥ ८०२ ॥

पञ्चशती प्रतिक्रान्तौ, श्रावकानां प्रजायते ।
सामायिकव्रताद्यं च, बहुभिः श्रावकैः कृतम् ॥ ८०३ ॥

वैराग्यवाहिनी चैव, ज्ञातव्या गुरुदेशना ।
अनेकभव्यजीवानां, कल्याणं च ततो भवेत् ॥ ८०४ ॥

धर्मध्यानप्रवाहश्च, सर्वत्र परिजायते ।
सर्वत्र शान्तिसाम्राज्यं, सङ्घेषु वर्तते तदा ॥ ८०५ ॥

ततोऽनु लीम्बडीग्रामे, सङ्घेन सह गम्यते ।
भक्तिभावविधानादि, कार्यं कृतं च भक्तितः ॥ ८०६ ॥

प्राचीनमन्दिराण्येव, दृष्ट्वा मनोहराणि च ।
तत्र गत्वैव चैत्यानां, वन्दनं च कृतं महत् ॥ ८०७ ॥

प्राचीनपुस्तकागारं, प्रसिद्धं चात्र वर्तते ।
विलोकनं च तस्यापि, विविधदृष्टिबिन्दुतः ॥ ८०८ ॥

वसुदेवीयहिण्डीनां, विभागोऽप्यत्र वर्तते ।
आगमग्रन्थरत्नानि, विद्यन्ते पुस्तकालये ॥ ८०९ ॥

व्याख्यानाय कृता, याञ्चा, तत्रत्यैर्ग्रामसज्जनैः ।
सङ्घीयधर्मशालायां, प्रबन्धश्च कृतो महान् ॥ ८१० ॥

नागजीनानचन्द्राश्च, लुम्पकसाधवस्तदा ।
मीलनाय गुरूणां च, तत्रैव ते समागताः ॥ ८११ ॥

आगत्य वन्दनां कृत्वा, पृष्टं विनयपूर्वकम् ।
भवद्व्याख्यानश्रुत्यर्थमस्मदिच्छा प्रवर्तते ॥ ८१२ ॥
यदि च भवतामिच्छा, आगम्यते तदा मया ।
तदा च गुरुदेवेन, प्रोक्तं च व्यवहारतः ॥ ८१३ ॥
सार्वजनीनशान्त्यर्थं, व्याख्यानं मम वर्तते ।
निषेधो नैव केषां-चिद्युष्माकं च कथं भवेत् ॥ ८१४ ॥
आगच्छन्तु समाख्याने, तिष्ठन्तु निकटे मम ।
व्याख्यानं दातुमिच्छा चेद्दीयतां सुखपूर्वकम् ॥ ८१५ ॥
युक्तिप्रमाणपूर्वेण, वक्तव्ये नैव हानिता ।
गप्पगोलकदातव्ये, उत्तरं तु मिलिष्यति ॥ ८१६ ॥
गुरूणां वचनं श्रुत्वा, सन्तुष्टास्तेऽपि साधवः ।
ज्येष्ठमल्लस्य चाख्यानं, समयोचितकं न हि ॥ ८१७ ॥
इति स्वान्ते विचार्यैव, भाषणं व्यवहारजम् ।
कृतं च लुम्पकैस्तत्र, धर्मस्य पोषकं न हि ॥ ८१८ ॥
गृहिणां नित्यकर्त्तव्यरूपं षट्कर्मपोषकम् ।
व्याख्यानं गुरुदेवेन, कृतं तद्युक्तिपूर्वकम् ॥ ८१९ ॥
देवपूजा गुरूपास्तिः, स्वाध्यायः संयमं तपः ।
दानं चेति गृहस्थानां, षट् कर्माणि दिने दिने ॥ ८२० ॥
देवपूजा प्रपुष्ट्यर्थं, सर्वज्ञत्वं च साधितम् ।
चतुर्निक्षेपपूजायाः, स्वरूपं परिदर्शितम् ॥ ८२१ ॥

ऋषभाजितनाम्नां च, स्मृत्या तेषां प्रपूजनम् ।
दर्शनस्पर्शनाभ्यां च, पूजनं विधिपूर्वकम् ॥ ८२२ ॥

आन्तरभक्तिपूर्वेण, द्रव्यभावप्रभेदतः ।
ईशपूजनकर्त्तव्ये, सार्वसिद्धिर्भविष्यति ॥ ८२३ ॥

ध्यानं च सम्मुखे स्थित्वा, प्रभुमूर्त्तिसमीपके ।
पूर्वोक्तं सर्वकार्यं च, कर्त्तव्यं मूर्तिसन्निधौ ॥ ८२४ ॥

द्रव्यं तु कारणं ज्ञेयं, विना द्रव्यं न भावना ।
कार्यकारणसम्बद्धौ, द्रव्यभावौ च कीर्त्तितौ ॥ ८२५ ॥

स्मरणं द्रव्यभावानां, तदपि तस्य पूजनम् ।
विना च स्थापना मान्यां, पूजनं नैव युज्यते ॥ ८२६ ॥

षट् कर्मणां स्वरूपं च, विशदं प्रतिपादितम् ।
श्रुत्वा च सर्वश्रोतारः, हर्षिता गुरुभाषणात् ॥ ८२७ ॥

राज्ञीनां देशना श्रुत्यै, आमन्त्रणं कृतं वरम् ।
तत्र गत्वा च धर्माढ्या, देशना विहिता खलु ॥ ८२८ ॥

अभक्ष्यसर्ववस्तूनां, नियमस्त्यागरूपतः ।
कृतोऽपि गुरुसामीप्ये, आत्मकल्याणहेतवे ॥ ८२९ ॥

मूर्त्तिपूजकछात्राणां, साधनाभावतः किल ।
धार्मिकज्ञानसद्भावः, विद्यते न कदाचन ॥ ८३० ॥

उमेदकेशवांश्चैव, आहूय गुरुणा तदा ।
विद्यार्थिधर्मज्ञानाय, कथितं युक्तिपूर्वकम् ॥ ८३१ ॥

तेषां च मानसे श्रद्धा, सञ्जाता दृढरूपतः ।
विद्यार्थिज्ञानदानाय, शालायाः स्थापनं वरम् ॥ ८३२ ॥

ज्ञानालये समुद्घाटे, भोजनादिप्रबन्धकम् ।
कर्त्तव्यं सङ्घसार्थेन, सर्वं च तद्धितावहम् ॥ ८३३ ॥

निश्चयं च दृढीकृत्य, उद्घाटितं च तत्क्षणे ।
द्रव्यसंग्रहकार्यं च, कृतं विशालरूपतः ॥ ८३४ ॥

ततो विहृत्य, तस्माच्च बोटादनगरे गताः ।
ग्रामस्य निकटे केचिच्छ्रावकाश्च समागताः ॥ ८३५ ॥

आगत्य गुरुदेवानामेका च प्रार्थना कृता ।
गुरुणाऽप्यत्र स्थातव्यं, घण्टा त्रयं च भावतः ॥ ८३६ ॥

अस्माभिश्च त्रयी रात्रौ, कष्टं च सेवितं महत् ।
भवद्भक्तिविधानाय, नैकमण्डपता कृता ॥ ८३७ ॥

अवशिष्टं च तत्कार्यमस्माभिः क्रियतेऽधुना ।
भवतां सम्मुखेनैव, आगम्यते कथं ततः ॥ ८३८ ॥

वाद्यादि सर्ववस्तूनां, प्रबन्धोऽपि च नो भवेत् ।
अतो घण्टात्रयाणां च, स्थितिः कार्या मनोहरा ॥ ८३९ ॥

गुरुणा कथितं तत्र, वाद्यादेर्न प्रयोजनम् ।
न च मण्डपवस्तूनां, प्रभुदृष्ट्ये च गम्यते ॥ ८४० ॥

गुरूणामुत्तरं श्रुत्वा, असन्तोषः प्रजायते ।
सर्वेषां मानसे तेषां, गुरवस्तु गतास्तदा ॥ ८४१ ॥

प्रतीक्षा वाद्यवस्तूनां, साधुभिर्न विधीयते ।
अकस्मादागतौ चैव, क्रियते न निषेधनम् ॥ ८४२ ॥

उपाश्रये समागत्य, देशना गुरुणा कृता ।
निष्पृहतां च दृष्ट्वैव, सर्वप्रजाः प्रहर्षिताः ॥ ८४३ ॥

निष्पृहत्वं च साधूनां, भवादृशां समीपके ।
अन्यत्र नैव दृष्टं तद्यथातथ्यं च कथ्यते ॥ ८४४ ॥

व्रतादानादिकार्याय, ग्रामबाह्यनिकेतने ।
अतीव भक्तिपूर्वेण, सामग्री वाद्यवादिका ॥ ८४५ ॥

आहूता सङ्घमान्यैश्च, तत्परिश्रममार्गतः ।
गुरुदेवान् समानीय, गम्यते सङ्घसार्थतः ॥ ८४६ ॥

व्रतादानादिकार्यं च, विहितं भक्तिपूर्वकम् ।
नैकपुरुषस्त्रीभिश्च, गृहीतं च व्रतं तदा ॥ ८४७ ॥

रथयात्रा ततः पश्चाद्योजिता धर्मवृद्धये ।
भजनं गीतगानादि, विहितं तत्र पुष्कलम् ॥ ८४८ ॥

स्थानकवासिनः सर्वे, रथयात्रासु चागताः ।
भक्तिभावादि कार्यं च, विहितं तत्र तैस्तदा ॥ ८४९ ॥

हट्टेषु गुरुदेवानां, व्याख्यानं जायते शुभम् ।
तल्लाभाय तदा जैनैरामन्त्रणं च कारितम् ॥ ८५० ॥

नगरवासिनः सर्वे, जैनेतराः समागताः ।
मध्यस्थभावजं श्रुत्वा, प्रजा प्रमोदभाग्भवेत् ॥ ८५१ ॥

ततो राणपुरे ग्रामे, नागरप्रार्थनादितः ।
गत्वा जिनेन्द्रदेवानां, दर्शनं विहितं शुभम् ॥ ८५२ ॥
धर्मचर्चाविधानाय, लुम्पकास्तत्र चागताः ।
गुरुगम्भीरवाणीं च, श्रुत्वा ततो विनिर्गता ॥ ८५३ ॥
व्याख्यानं सर्वकल्याण-पोषणं यदि जायते ।
तदा च भव्यजीवानां, हितदं सर्वथा मतम् ॥ ८५४ ॥
इतीव मानसे ज्ञात्वा, व्याख्यानधर्मपोषकम् ।
विहितं गुरुदेवेन, शासनवृद्धिकारणम् ॥ ८५५ ॥
व्याख्यानं गुरुदेवानां, श्रुत्वा चेच्छा प्रजायते ।
व्रतादि गृह्यते तेभ्यः, तदा तु जन्मनः फलम् ॥ ८५६ ॥
आगत्य प्रार्थना शुभ्रा, व्रतार्थं कारिता तदा ।
चतुर्थादि व्रतं श्राद्धैः, गृहीतं शुभभावतः ॥ ८५७ ॥
साहित्योन्नतिकार्याय, उपदेशो विधीयते ।
पंचसहस्रसंख्याकं, द्रव्यं तेन व्ययीकृतम् ॥ ८५८ ॥
वल्लभीपुरवास्तव्याः, श्रावकास्तत्र चागताः ।
पादलिप्तपुरस्था च, श्रावका गुरुसंनिधौ ॥ ८५९ ॥
अनेकधर्मशालातः भृत्यका गुरुसन्निधौ ।
लघुवृद्धाख्यटोलीनां, नेतारश्च समागताः ॥ ८६० ॥
स्वस्वपक्षीयस्थानार्थं, सर्वैस्तैः प्रार्थना कृता ।
गुरुदेवेन तत्काले, नो दत्तमुत्तरं तदा ॥ ८६१ ॥

आगत्य धर्मध्यानार्थमुचितं यच्च युज्यते ।
तत्रैव स्थानकेऽस्माकं, उत्तरणं भविष्यति ॥ ८६२ ॥
वल्लभीग्रामवास्तव्यैः, ततोऽनुप्रार्थना कृता ।
जयन्तविजयस्यैव, जन्मस्थानं च तन्मतम् ॥ ८६३ ॥
प्रार्थना स्वीकृता तेषां, स्थैर्यं तत्र न युज्यते ।
यत्र देवर्द्धिपूज्यानां, शास्त्रलिखनता भवेत् ॥ ८६४ ॥
क्षमाश्रमणदेवैश्च, साधुभिर्धर्मकाङ्क्षिभिः ।
आगत्य यस्य कण्ठस्थं, यावत्तावत्तु तत्र वै ॥ ८६५ ॥
लेखनं कारितं तस्य, सर्वसाधोश्च सम्मतम् ।
भवभीरुमहाभागैः, वैषम्यस्यैव दर्शने ॥ ८६६ ॥
लिखितं तत्र तैरेव, स्मृतिपथं यदागतम् ।
अन्यथा लिखने चैव, मिथ्यादुष्कृतकं कृतम् ॥ ८६७ ॥
तत्त्वं तु केवलिनश्चैते, जानन्तु चेति ज्ञापितम् ।
आत्मार्थिपुरुषाणां च, इयं च भावना भवेत् ॥ ८६८ ॥
अनेकसूत्रसंख्या च, विद्यते चाधुना तथा ।
द्वात्रिंशत्सूत्रग्रन्थाश्च, मन्यन्ते लुम्पकैर्जनैः ॥ ८६९ ॥
तदपि मूलमात्रं च, पञ्चाङ्गी नैव मन्यते ।
लोंका लुंपाशाहेन, सर्वं तच्च विनाशितम् ॥ ८७० ॥
मूर्त्तिपूजनपाठाश्च, मीलन्ति मूलसूत्रतः ।
निष्कासनेऽपि नो नष्टाः, मूर्त्तिपाठाः समर्गलाः ॥८७१॥

भाष्यनिर्युक्तिके दृष्ट्वा, वाचयन्ति च सूत्रकम् ।
समये चागते तेषामपलापो विधीयते ॥ ८७२ ॥
यस्माच्च खलु सञ्जातः, तत्पितुर्नामधेयकम् ।
निह्नवनं कुपुत्रेण क्रियते चात्र तादृशम् ॥ ८७३ ॥
भापाटीके समालोक्य, मूर्खजनस्य सम्मुखे ।
वाचयन्ति च सूत्राणि, योगादि सर्व लोपितम् ॥ ८७४ ॥
तेषां च मूढजीवानां, गतिः कीदृग् भविष्यति ।
आगमलोपि मूर्खेषु, भावदया प्रजायते ॥ ८७५ ॥
आगमोद्धारभूमीनां, दर्शनं पुण्यकारणम् ।
तलहट्टिश्च प्राक्काले, सिद्धाचलस्य चात्र वै ॥ ८७६ ॥
चन्द्रराजस्य चात्रैव, आभात आगतिः शुभा ।
मकरध्वजराजेन, प्रेमलाया विवाहनम् ॥ ८७७ ॥
कुर्कुटरूपतश्चात्र, आगमनं पुनर्भवेत् ।
पुनर्मनुष्यरूपत्वं, सूर्यकुण्डे च प्रापितम् ॥ ८७८ ॥
द्वितीयं विमला नाम, अस्यैव परिजायते[1] ।
दिनद्वयीस्थितिश्चात्र, संघस्यातीव प्रेमतः ॥ ८७९ ॥
चमारर्डी ततो गत्वा, ततश्च सोनदुर्गके ।
सर्वत्र देशनाशान्तिकारिका च प्रजायते ॥ ८८० ॥
क्रियाकाण्डेषु व्याख्यानं, प्रेरकं सर्वजन्तूनाम् ।
व्यसनवह्निनाशाय, युवद्वृद्धस्य जायते ॥ ८८१ ॥

1 विमलाचल

अपूर्वा धर्मसद्भावपोषिका गुरुदेशना ।
क्लेशानां परिनाशश्च, गुरूणां पादन्यासतः ॥ ८८२ ॥

यत्रैव पादन्यासः, स्याद्धर्मोद्योतश्च तत्र वै ।
वैरविरोधसद्भावः, गुरूणां नैव मानसे ॥ ८८३ ॥

गौर्जराभिधदेशेषु वटपद्रीपराज्यके ।
लींच ग्रामे समुत्पन्नैर्मंगलविजयैः कृतः ॥ ८८४ ॥

धर्मे निपुण भगवान् दृढतत्त्वविच्च ।
मायादिदोषरहिता व्रतरागरक्ता ॥

अम्बेति मातृ गुणभृद् अभिधायदीया ।
तत्पुत्रचित्तसुखदे रचितः स ग्रन्थः ॥ ८८५ ॥

॥ इति श्रीशास्त्रविशारदजैनाचार्यजगद्गुरुजङ्गम-
युगप्रधानजैनसाहित्यधर्मोद्धारकानेकराजन्यबो-
धकपूज्यपादश्रीविजयधर्मसूरिजीवनप्रबन्धे
नयानगर-सोजत-योद्धपुर-पालिशिरो-
हिस्टेटगोडवाडमेदपाटोदयपुरसङ्ग-
पुर-वाघपुर—प्रान्तीज-देहग्राम
राजनगर-लींचोपरियाल-वढवाण-
लीम्बडी-सोनगढपर्यन्तगुरु-
विहारवर्णननामा पञ्चमः
परिच्छेदः समाप्तः ॥

# षष्ठपरिच्छेदः समारभ्यते ॥

गिरिराजं नमस्कृत्य, गुरुविहारवर्णनम् ।
लिख्यते भव्यबोधाय, सङ्क्षेपेण सुबोधदम् ॥ १ ॥

सोनदुर्गादिहृत्यैव, मोखडके पुरे वरे ।
महती टोलिका श्राद्धाः, सर्वे तत्र समागताः ॥ २ ॥

साधूनां चात्र यात्रायै, पङ्विकृतेश्च त्याजनम् ।
राजनगरकं त्यक्त्वा, चातुर्मासाय चागताः ॥ ३ ॥

अनेकश्राद्धवर्याश्च, गुरुपूर्वं समागताः ।
विभिन्नग्रामवास्तव्याः, भक्त्यर्थं गुरुसन्निधौ ॥ ४ ॥

सम्पूर्णपादलिप्तं च, अलंकृतं च सर्वतः ।
वाद्यादि सर्वसामग्री, राज्यतश्च समागताः ॥ ५ ॥

गहूंलीप्रतिस्थानेषु, गुरूणां गुणदर्शिकाम् ।
सर्वत्र परिजायेत, साधवोऽपि समागताः ॥ ६ ॥

चतुरविजयाद्याश्च, पंन्यासा भाग्यशालिनः
केवलविजयाद्याश्च, शुद्धचारित्रपात्रकाः ॥ ७ ॥

लघुबन्धोश्च सामीप्ये, आगता गुणदर्शिनः ।
सूरिणा वृद्धबन्धूनां, वन्दना विहिता तदा ॥ ८ ॥

प्रोक्तं च वृद्धबन्धुभिः, वन्दना नैव युज्यते ।
सूरिपदं च सम्प्राप्तमा—स्माकं, वन्द्यते कथम् ॥ ९ ॥

गुरुणा तत्र सम्प्रोक्तमाचार्यः. त्वादृशां न हि।
परन्तु श्रावकानां च, तैरेव तत्र योजितः ॥ १० ॥
अतीव प्रेमपूर्वेण, सञ्जाता तत्र वार्तिका।
श्रुत्वा च श्रावकाः सर्वे, आनन्दिताश्च तत्क्षणे ॥ ११ ॥
ततोऽपि गुरुणा सार्धमा–गच्छन्ति च ते तदा।
कर्पूरविजयाद्याश्च, मीलिताः सर्वसाधवः ॥ १२ ॥
साध्वीनां समुदायश्च, आगतो गुरुसम्मुखे।
तत्रत्याः सर्वभव्याश्च, आगच्छन्ति च भावतः ॥ १३ ॥
नगरमन्दिराणां च, दर्शनं विहितं शुभम्।
कोटीयधर्मशालायां, गताश्च गुरवस्तदा ॥ १४ ॥
मङ्गलं तत्र श्रावित्वा, तलहट्यां गताः खलु।
विशुद्धधर्मभावेन, तीर्थस्य वन्दना कृता ॥ १५ ॥
ततोऽनुधर्मशालायामागत्य च कृतं तपः।
अन्येषां प्रार्थनां श्रुत्वा, साधवः प्रेषिता वराः ॥ १६ ॥
स्थानं विलोकितं सर्वं, धर्मयोग्यमिदं भवेत्।
सर्वेषां मुनिराजानां, स्थानं तदेव रोचते ॥ १७ ॥
अतो निश्चित्य तत्स्थानं, चातुर्मासं च निर्णीतम्।
भावनगरवास्तव्याः, श्राद्धाः सर्वे समागताः ॥ १८ ॥
चातुर्मासं च युष्माकमत्रापि नैव युज्यते।
प्रतिवत्सरकं रोगाः, जायन्ते पादलिप्तके ॥ १९ ॥

तिष्ठन्ति साधवो नैव, चातुर्मासाय तत्र वै !
भावनगरग्रामे च, आगन्तव्यं ततः खलु ॥ २० ॥
गुरुणा तत्र सम्प्रोक्तं, चातुर्मासं च निर्णीतम् ।
रोगोपद्रवसद्भावः, यदि च दैवयोगतः ॥ २१ ॥
जायते च तदाऽस्माकं, भीतिश्च नैव विद्यते ।
मृत्युश्चेदत्र जायेत, तदा च शोभनं मतम् ॥ २२ ॥
अत्रैव मृत्युसम्प्राप्त्यै, आगच्छन्ति जना बहु ।
ममाप्यागमनं ज्ञेयं, तदर्थं भावशुद्धितः ॥ २३ ॥
गुरूणामुत्तरं श्रुत्वा, प्रमुदिताश्च ते तदा ।
धन्यवादं गुरूणां च, दत्त्वा तेऽपि ततो गताः ॥ २४ ॥
आद्ययात्राविधानाय, सर्वसङ्घेन संयुतः ।
विशुद्धभावनापूर्वं, गताश्च गिरिसम्मुखे ॥ २५ ॥
नमः तीर्थाधिराजाय, सर्वतीर्थमयात्मने ।
इति जापं च कुर्वन्तः, कृत्वा च चैत्यवन्दनाम् ॥ २६ ॥
गिरिराजं समालोक्य, हर्षाश्रूणि पतन्ति वै ।
अपूर्वभाग्ययोगेन, दर्शनं जायते प्रभोः ॥ २७ ॥
द्राविडवारिखिल्लानां, निर्वाणभूमिदर्शनात् ।
ऋषभसेनमुख्यानां, मोक्षभूमिरिहैव च ॥ २८ ॥
शत्रुंजयमाहात्म्यं च, हृदि पटे समागतम् ।
अनेककोटिसंख्यानां, मुनीनां मोक्षस्थानकम् ॥ २९ ॥

पदे पदे मुनीनां च, मोक्षस्थानविलोकनात् ।
हृदये भावना शुद्धा, तत्काले परिजायते ॥ ३० ॥
धन्यास्ते पुरुषा ज्ञेया, आत्मकल्याणसाधकाः ।
गिरिराजस्य सद्ध्यानं, ध्यात्वा मोक्षं समागताः ॥ ३१ ॥
मादृशहीनपुण्यानां, तादृशो दिवसः कदा ।
आगमिष्यति पुण्येन, यदा मोक्षो भवेत्खलु ॥ ३२ ॥
ततः श्रीशान्तिनाथस्य, मन्दिरे चैत्यवन्दनां ।
कृत्वा ततोऽपि सर्वेषां, कुर्वन्ति वन्दनां तदा । ३३ ॥
आदिदेवप्रभूणां च मुख्ये च, मन्दिरे गताः ।
नाभेयजिनसद्दृष्ट्या, गतं च पापपङ्कजम् ॥ ३४ ॥
अनन्तपुण्यसद्राश्या, गिरिराजस्य दर्शनम् ।
जायते मादृशानां च अतो हि सफलं जनु ॥ ३५ ॥
आदिजिनेन्द्रदेवानां, कृता स्तुतिश्च भावतः ।
त्रिप्रदक्षणया तासां, मूर्तीनां वन्दना कृता ॥ ३६ ॥
राजादनाख्यवृक्षस्य, अधः प्रभुपदावलिम् ।
दृष्ट्वा च वन्दनां कृत्वा, श्रीमन्धरस्य मन्दिरे ॥ ३७ ॥
चैत्यवन्दनकार्यं तत्कृत्वा पुण्डरिके गता ।
अतीव प्रेमपूर्वेण, कुर्वन्ति चैत्यवन्दनाम् ॥ ३८ ॥
आदिदेवस्य चैत्यादौ, गत्वा ध्यानं च निर्मलम् ।
विशुद्धमानसेनैव, ध्यानं च सूरिणा कृतम् ॥ ३९ ॥

अतिवीर्यसमुल्लासैः, विशुद्धां चैत्यवन्दनाम् ।
कृत्वा च भावपूर्वेण, सर्वत्र वन्दना कृता ॥ ४० ॥
ततश्च सर्वसंघेन, तलहट्यां समागताः ।
सायंकाले समागत्य, तपोविधानकं कृतम् ॥ ४१ ॥
प्रातःकालेषु साधूंश्च, आहूय सर्वसन्निधौ ।
देशनामृतधारा च, वर्षिता गुरुणा शुभा ॥ ४२ ॥
यावत्कालिकपर्यन्तं, स्थैर्यं सिद्धाचले भवेत् ।
तावत्कालं कषायाणां, त्यागः कार्यश्च सर्वथा ॥ ४३ ॥
यदि च दैवयोगेन, कषायो जायते तदा ।
आचाम्लादि कर्त्तव्यं, प्रायश्चित्तं च साधुभिः ॥ ४४ ॥
एकाशनं च नित्यं हि, कर्त्तव्यं सर्वसाधुभिः ।
तिथ्यादावुपवासश्च, क्रियतां हितकांक्षिणा ॥ ४५ ॥
सर्वसंपत्करी भिक्षा, कर्त्तव्या शुद्धरूपतः ।
यात्रिकपुरुषाणां च, प्रतीक्षा न विधीयताम् ॥ ४६ ॥
गत्वा च पादलिप्तेषु, ग्रामेषु गृहिहर्म्यके ।
भिक्षा ततः समानेया, न भोजनालये कदा ॥ ४७ ॥
जिह्वास्वादस्य वृद्ध्यर्थं, तलहट्टेषु नो कदा ।
मोदकादि समानेयं, नेया रुक्षा च रोट्टिका ॥ ४८ ॥
स्वाध्यायध्यानकं कार्यं, प्रमादो न कदाचन ।
विकथा सर्वथा वर्ज्या, निन्दा कस्यापि नो कदा ॥ ४९ ॥

साधुसाध्वीजनानां च, पाठनं सुखकारणम् ।
आचाराङ्गादिसूत्राणां, पाठस्तु दीयते सदा ॥ ५० ॥

प्रातःकाले समाख्यानं, मोतिसुखीयस्थानके ।
प्रज्ञप्तिसूत्रबोधश्च, गुरुणा दीयते तथा ॥ ५१ ॥

विनाकार्यप्रसङ्गे च, जल्पनं न विधीयताम् ।
स्तोकं तदपि कार्यं च, मृषावादो यतो न स्यात् ॥ ५२ ॥

मध्याह्नि हारिभद्रीय-वृत्तीनां वाचना भवेत् ।
प्रश्नोत्तरं च पूर्वं तत्, यतोऽर्थे स्फुटता खलु ॥ ५३ ॥

साधुसाध्वीमहाभागैराचाराङ्गस्य वाचना ।
मङ्गलविजयस्यैव, पार्श्वतो गृह्यते तथा ॥ ५४ ॥

आज्ञा च गुरुदेवेन, प्रदत्ता चैव तत्क्षणे ।
गुर्वाज्ञां च शिरोधार्य, तत्कार्यं विहितं शुभम् ॥ ५५ ॥

मध्याह्ने श्रावकाः सर्वे, राजधन्यादिवासिनः ।
जोटा कमलशी तेज-मल्लादि श्रावकास्तथा ॥ ५६ ॥

वाचनासमये सर्वे, आगच्छन्ति च भावतः ।
कर्मग्रन्थादिचर्चां च, कुर्वन्ति तेऽपि सज्जनाः ॥ ५७ ॥

यथा पर्यायसाधूनां, वन्दना व्यवहारकम् ।
प्रत्यहं परिजायेत, कर्मणां निर्जरा ततः ॥ ५८ ॥

योगक्रिया समारब्धा, साधुभिस्तत्क्षणे तदा ।
देशनादानपूर्वा च, गुरुभिः कार्यते खलु ॥ ५९ ॥

सूत्रयोगं विना नैव, सूत्रवाचनकार्यकम् ।
विधीयते च साध्वाद्यैः, इत्याज्ञा पारमेश्वरी ॥ ६० ॥
अयोग्यस्य हि तद्दाने, महानर्थः प्रजायते ।
गुरुगमो न तत्पार्श्वे, आगच्छन्ति च कुत्रचित् ॥ ६१ ॥
चन्द्रोदयादिभस्मादि, यथा बालैर्न भुज्यते ।
भोजने पाचनं नैव, जायते खलु कर्हिचित् ॥ ६२ ॥
तथैव योग्यतां मुक्त्वा, सूत्रार्थपरिदानके ।
न लाभः किन्तु हानिः स्याद्यथा च लुम्पकादिषु ॥ ६३ ॥
योग्यायोग्यौ परिज्ञाय, सूत्रदानं विधीयताम् ।
आत्मानन्दश्च तत्रापि, जायते दृढभावतः ॥ ६४ ॥
अतो हि गुरुदेवेन, सूत्रस्य वाचना खलु ।
योगक्रियां विधाप्यैव, कृता च सर्वसन्निधौ ॥ ६५ ॥
साधूनां योगकार्येषु, प्रत्यहं प्रेरणा पुनः ।
प्रोत्साहदानपूर्वेण, योगेषु परियोजनम् ॥ ६६ ॥
बाह्यतो गुरुदेवानां, भक्त्यर्थं ये समागताः ।
चातुर्मासं च तेषां वै, तत्रैव परिजायते ॥ ६७ ॥
पञ्चशती च श्राद्धानां, चातुर्मासाय चागतिः ।
अन्येऽपि धर्मलाभाय, आगच्छन्ति पुनः पुनः ॥ ६८ ॥
सचित्तपरित्यक्तारः, संजाताः श्रावका बहु ।
एकाशनादिकर्त्तारः, गुरूणां देशनादितः ॥ ६९ ॥

प्रतिक्रान्तिश्च, सर्वेषा–मेकत्र परिजायते ।
ततोऽनुधर्मचर्चाऽपि, क्रियते साधुसामीपे ॥ ७० ॥

आचारं तादृशं दृष्ट्वा, सार्वधर्मे प्रवर्त्तिता ।
अधिकारित्ववर्गाश्च, धर्मायैव समागताः ॥ ७१ ॥

स्वाध्यायध्यानसद्भावः, सर्वत्र तैर्विलोक्यते ।
प्रमोदभावना तेषां, हृदये परिजायते ॥ ७२ ॥

एकदा तत्र शूनां वै, हननाज्ञा च तैः कृता ।
श्रावकानां च नैकट्ये, तैरेव ज्ञापितं तदा ॥ ७३ ॥

पिञ्जरे पूरणं शूनां, यदि त्वया न तन्यते ।
तदाऽस्माभिश्च तद्घातः, क्रियते नात्र संशयः ॥ ७४ ॥

कथां च तादृशीं श्रुत्वा, व्याख्यानं परिमुच्य वै ।
ओवनराजहर्म्ये च, गुरवश्च गतास्तदा ॥ ७५ ॥

समयो मीलनायैव, मार्गितस्तेन तत्क्षणे ।
गुरूणामागतिं श्रुत्वा, हर्म्यवाह्ये च समागतम् ॥ ७६ ॥

श्रीमतामागतिः कस्मात्कारणादिह जायते ।
गुरुणा तत्र सम्प्रोक्तं, हेतुस्तवाधिकारता ॥ ७७ ॥

पादलिप्तं च जैनानां, पवित्रस्थानकं मतम् ।
पवित्रस्थानमध्ये च, हिंसा कथं प्रविश्यते ॥ ७८ ॥

जैनानां मोक्षभूमिश्च, सर्वथाऽयं निगद्यते ।
तत्रैव मूकजन्तूनां, विनाशश्च कथं भवेत् ॥ ७९ ॥

प्राक्काले जैनराज्ञां च, साम्राज्यं वर्तितं सदा ।
एतत्पर्वतराजस्य, रक्षार्थं तस्य पूर्वजाः ॥ ८० ॥

गार्याधरात्समानीताः, रक्षका भक्षकाः कथम् ।
पवित्रस्थानयोगे च, शूनां च मारणं कथम् ॥ ८१ ॥

यूरोपीयविद्वांसः, मम मित्रसमाः समे ।
तेषां साहित्यदानं च, शङ्कोत्तरं च सर्वथा ॥ ८२ ॥

भेदभावं विना सर्वं, मया सुखेन तन्यते ।
मम दुःखस्य सद्भावः, सम्भाव्यते कथं त्वयि ॥ ८३ ॥

यदि त्वया विधीयेत, शूनां च मारणं खलु ।
तदाऽस्माभिर्वितन्येत, भोजनत्यागता सदा ॥ ८४ ॥

अस्मद्दृष्टिपथे शूनां, मारणं पापकारणम् ।
सर्वथाऽत्र निषिद्धव्य-मस्माकं शान्तिमिच्छता ॥ ८५ ॥

श्रोवनेन तदा तत्र, गुरुनिर्देशकांक्षिणा ।
शूनां च मारणं तत्र, निषिद्धं सर्वथा मतम् ॥ ८६ ॥

भवतां यदि दुःखं, स्यात्तत्कार्यं न वितन्यते ।
सुखपूर्वेण स्थातव्यं, गुरुणा धर्मकाङ्क्षिणा ॥ ८७ ॥

कस्यचिद्यदि कार्यस्य, प्रयोजनं च विद्यते ।
वक्तव्यं च तदाऽस्माकं, शीघ्रं सर्वं भविष्यति ॥ ८८ ॥

यादृशः सोमसस्ताद्दग-ह्मपि च ज्ञापताम् ।
भेदभावो न कर्तव्यः, मत्रार्थेमहात्मभिः ॥ ८९ ॥

इत्यादि प्रेमपूर्वं च, सर्वं च कथितं तदा ।
ततोऽनुधर्मशालायामा–गत्य ज्ञापितं समम् ॥ ९० ॥
एकदा साधुवर्यानां, लघुनीतेश्च क्षेपणम् ।
दृष्ट्वा भूमौ च केनाऽपि, प्रोक्तं चोन्मत्तभावतः ॥ ९१ ॥
मुण्डकेनैव मद्भूमौ, मूत्रणं परिक्षिप्यते ।
अशुद्धा भूश्च संजाता, गम्यते च मया कुतः ॥ ९२ ॥
साधूनामपमानं तत्तादृशेन स्खलेन च ।
कृतं तन्नैव युज्यते, कयारीत्येति शोचितम् ॥ ९३ ॥
ओवनो मीलनायैव, एकदाऽत्र समागतः ।
प्रसङ्गतश्च तद्वार्त्ता, चर्चिता तस्य ज्ञप्तये ॥ ९४ ॥
भूमौ प्रश्रवणानां च, क्षेपे शीघ्रं च शुष्यते ।
यदि च धर्मशालायां, तद् वस्तु क्षिप्यते मया ॥ ९५ ॥
जन्तूत्पत्तिश्च तत्रैव, जायते रोगकारिका ।
दुर्गन्धिश्चैव सर्वत्र, प्रस्रियते पुनः पुनः ॥ ९६ ॥
अतोऽस्माभिश्च तद्बाह्ये, क्षिप्यते सुखकाङ्क्षिणा ।
सर्वेषां शान्तिदातृत्वे, अस्माकं शान्तिता भवेत् ॥ ९७ ॥
साधूनामपमानं तत्, तव राज्ये न युज्यते ।
श्रुत्वा तस्य निकारश्च, विहितस्तेन तत्क्षणे ॥ ९८ ॥
पर्युषणा समायाता, साधूनामुपदेशनम् ।
तपश्चर्यां विधानाय, अन्येपामपि सुन्दरम् ॥ ९९ ॥

अनेकैः साधुभिस्तत्र, साध्वीभिः श्रावकैस्तथा ।
तपोविधानकार्याय, प्रोत्साहो विहितो बहु ॥ १०० ॥
भक्तिविद्यादिना तत्र, घोरं तपश्च कारितम् ।
मासक्षपणकाद्यं च, साध्वीभिर्विहितं तथा ॥ १०१ ॥
श्रावक–श्राविकाद्यैश्च, महत्तपश्च कारितम् ।
अपूर्वतपसां तत्र, प्रभावः परिजायते ॥ १०२ ॥
एकत्र सर्वसाधूनां, व्याख्यानं जायते शुभम् ।
स्थानाऽभावे न, कुत्रचित्केनचिच्च विधीयते ॥ १०३ ॥
पर्युषणाऽनुरोगस्य, चिह्नकमनुभूयते ।
साध्व्याद्यैश्च समागत्य, आरावो विहितो बहु ॥ १०४ ॥
प्राग्वत्सरे च साध्वाद्यैः, विहृतं चान्यस्थानके ।
भवद्भिरपि गन्तव्यं, अन्यथा मृत्युता भवेत् ॥ १०५ ॥
गुरुणा कथितं तेषां, साधूनां मृत्युहेतवे ।
भीतिश्च नैव चास्माकं, लेशमात्रा प्रजायते ॥ १०६ ॥
सिद्धाचले च साधूनां, मृत्युत्वं वांछितं मया ।
स्वयमेवागतो काऽत्र, विचारणा विधीयते ॥ १०७ ॥
युष्माभिरपि नो भेयमष्टम्यां शान्तिता भवेत् ।
धर्मध्यानं च कर्तव्यं, विहारो नैव युज्यते ॥ १०८ ॥
साधूसाध्व्याश्च वक्त्राद्धि तादृग्वचो न शोभते ।
कदापि नैव वक्तव्यं, विहारनाममात्रकम् ॥ १०९ ॥

दृढविचारतां ज्ञात्वा, सर्वैश्च दृढता कृता ।
अष्टम्यां सर्वथा शान्तिः, सर्वत्र परिजायते ॥ ११० ॥

चमत्कृति गुरूणां च, सर्वत्र प्रसृता खलु ।
निर्मलविरतेर्योगात्कार्यं किं किं न जायते ॥ १११ ॥

चमत्कारस्तु नो ज्ञेयः, किन्तु चारित्रयोगतः ।
सर्वत्र प्रसृता शान्तिः, गुरुदेवप्रभावतः ॥ ११२ ॥

उपधानादिकार्यं च, गुरुदेवोपदेशतः ।
लक्ष्मीचन्द्रेण तत्रैव, विहितं शुभभावतः ॥ ११३ ॥

श्रावक–श्राविकानां च, सङ्ख्या द्विशतिका भवेत् ।
सप्ततिः श्रावकास्तत्र, शेषाश्च श्राविका मता ॥ ११४ ॥

प्रवेशलग्नकार्यं च, दशमीदिवसे कृतम् ।
विधिपूर्वेण सर्वेषां, प्रवेशस्तत्र कारितः ॥ ११५ ॥

ओवनैर्गुप्तवार्त्तातः, सर्वं च ज्ञापितं तदा ।
इंगिताकारज्ञानेन, गृहीतं गुरुणा खलु ॥ ११६ ॥
कार्यवाहकट्रस्टीनां, पत्रतो ज्ञापितं समम् ।
पक्षपातस्य दोषेण, स्वीकृतं नैव किंचन ॥ ११७ ॥
अमुकैर्मुनिराजैश्च, सर्वं तत्र विधीयते ।
इत्येवं मानसे भावः, दृढतापूर्वको धृतः ॥ ११८ ॥
स्वल्पधनव्ययेनैव, कार्यं महत्प्रजायते ।
प्रतिवर्षं च तत्स्तोकं, दीयते नाममात्रतः ॥ ११९ ॥

गुरुदेवप्रसादेन, मीलितं तादृशं वचः ।
रहसि किन्तु तत्कार्यं, सर्वं निश्चितरूपतः ॥ १२० ॥

जैनानां भाग्यदोषेण, ट्रस्टीनां पक्षपाततः ।
सर्वं तद्विलयं जातं, विचित्रकर्मणां गतिः ॥ १२१ ॥

षष्टिसहस्रसङ्ख्यानां, रूप्यानां प्रतिवत्सरम् ।
तिलकं जैनश्राद्धैश्च, अग्रगैः कीर्त्तिलोलुपैः ॥ १२२ ॥

कृतं स्वकीयभालेषु, पक्षपातप्रयोगतः ।
कषायशान्तिकार्यं च, न ज्ञातं लेशमात्रतः ॥ १२३ ॥

लालभाइसदृग् नैव, बुद्धिशालिनरा भुवि ।
अतस्तादृशकार्यं च, सञ्जातं मन्दबुद्धितः ॥ १२४ ॥

कार्त्तिकीपूर्णिमायां च, यात्रिकागतिकालिके ।
व्याख्यानपरिदानाय, पत्रिकाः प्रेषिता बहिः ॥ १२५ ॥

तद्धर्मालयमुख्यश्च, कार्यकर्त्ता नरस्तदा ।
तदधिपतिपार्श्वे च, पत्रं लिखति तत्क्षणे ॥ १२६ ॥

सार्वजनीनके बोधे, स्थानं सार्वजनीनकम् ।
जायतेऽतो निषेधव्यमुत्तरमागतं तदा ॥ १२७ ॥

तत्साधुप्रेरणादेव, कार्यं तेन कृतं किल ।
निषेधाज्ञा समायाता, हर्षिता तेऽपि तत्क्षणे ॥ १२८ ॥

भविष्यति न तद्व्याख्या, लज्जां तस्य गमिष्यति ।
इति विचारसद्भावे, दुर्बुद्धिर्धर्मद्रोहतः ॥ १२९ ॥

सञ्जाताः समये तेषां, गुरुणा शोचित तदा ।
राजप्रबन्धद्वारेण, कार्यं किं न विधीयते ॥ १३० ॥
ओवननिकटे गत्वा, ज्ञापिता तस्य धूर्त्तता ।
तलहट्टीयमार्गेषु, व्याख्यानस्य प्रबन्धकम् ॥ १३१ ॥
राजद्वारा कृतं शीघ्रं, सर्वोत्तमं च तत्क्षणे ।
सभाऽधिपश्च संजातः, ओवनो गुरुप्रेमतः ॥ १३२ ॥
धर्मध्वजश्च सर्वत्र, उड्डीयते समर्गलः ।
दसाडातः समायातः, चीमनलालकः खलु ॥ १३३ ॥
ओवनः प्रमुखे स्थित्वा, जीलुभाइ महाशयः ।
चीमनलालकाद्याश्च, देशना श्रोतुमागताः ॥ १३४ ॥
शालादिकं च तत्सर्वमुद्घाटितं विशालकम् ।
यात्रिकांश्च समाहूय, दर्शितं सर्वस्थानकम् ॥ १३५ ॥
यत्र यस्यैव यत्स्थानं, रोचते तत्र तिष्ठतु ।
यदि कस्य निषेधः स्या—ज्जल्पन्तु मां च तत्क्षणे ॥१३६॥
प्रेमतो गुरुदेवानां, प्रबन्धोऽयं विज्ञायताम् ।
अधिकारपरत्वे नो, विज्ञेयः किन्तु केनचित् ॥ १३७ ॥
यात्रां कृत्वा समायाताः, तिष्ठन्ति यात्रिकास्तथा ।
व्याख्यानं साधुवर्याणां, शृण्वन्ति धमयोगतः ॥ १३८ ॥
अन्तिम गुरुदेवानां, व्याख्यानं जायते सदा ।
शत्रुंजयस्य तीर्थस्य, स्वरूपप्रतिपादनम् ॥ १३९ ॥

यात्रा कीदृशरूपेण, कार्या तस्याश्च वर्णनम् ।
परस्परं कया रीत्या, वर्त्तितव्यं च वर्णितम् ॥ १४० ॥
रात्रिदिवं कर्त्तव्यं, निरुपितं च तत्क्षणे ।
धर्मभावप्रवृद्ध्यर्थं, कार्यं च गुरुणा किमु ॥ १४१ ॥
सभापतिश्च तच्छ्रुत्वा, मोहितो गुरुबोधतः ।
धन्याश्च त्वादृशा ज्ञेया, गुरवो जगती तले ॥ १४२ ॥
यात्रिकानां च सम्प्रोक्तं, दुर्लभा गुरुदेशना ।
मयाऽपि पुण्ययोगेन, सम्प्राप्ता गुरुयोगतः ॥ १४३ ॥
भवदीयं च तीर्थं तत्तस्य यात्रा विधीयताम् ।
क्लेशोत्पत्तिर्मनाग् नैव, कार्या च हृदये कदा ॥ १४४ ॥
प्रेमभावश्च सर्वत्र, सर्वैः सह वितन्यताम् ।
इत्येवं ज्ञापितं तेन, श्रुत्वा सर्वे प्रहर्षिताः ॥ १४५ ॥
भाविकालीनमन्त्रित्वं, भवनं ज्ञापितं गुरोः ।
प्रागपि कथितं तैश्च, अधुना स्पष्टरूपतः ॥ १४६ ॥
कार्यकर्त्तव्यता सर्वा, तद्धस्ते च समर्पिता ।
ज्ञापितं च यदा तेषां, न जातं पक्षपाततः ॥ १४७ ॥
क्लेशोत्पत्तिर्यदा जाता, परस्परं च सर्वथा ।
तदा तु गुरुदेवानां, सञ्जाता मृत्युता खलु ॥ १४८ ॥
अतोऽनर्थनिमित्तं, तत्सञ्जातं तादृशं समम् ।
द्वारपट्टे च समुद्घाटे, संक्लेशस्तत्र जायते ॥ १४९ ॥

दिनत्रयी गुरूणां च, देशना तत्र सम्मता ।
ततोऽनु सर्वभव्यानां, जायते शुद्धभावना ॥ १५० ॥
कार्त्तिकीपूर्णिमायां च, तीर्थे च संघसार्थतः ।
यात्रा च विधिपूर्वेण, विहिता शुभभावतः ॥ १५१ ॥
द्वादशकोशयात्रायाः, संघश्च तत्र योजितः ।
क्षमानन्दीय भव्येन, कस्तूरेणैव भावतः ॥ १५२ ॥
संघेन सह तद्यात्रा, साधुसाध्वीजनेन च ।
श्रावकश्राविकाभिश्च, कृता च गुरुणा तदा ॥ १५३ ॥
उपधानस्य मालायाः, मुहूर्त्तं च समागतम् ।
अष्टाह्निकोत्सवस्तत्र, योजितः संघसज्जनैः ॥ १५४ ॥
रचना पञ्चतीर्थस्य, कारिता श्रेष्ठिना तदा ।
लक्ष्मीचन्द्रेण भावेन, गुरूणां च निदेशतः ॥ १५५ ॥
रथयात्राप्रसंगे च, तत्रत्यैनेव साधुना ।
वाद्यादिसर्वसामग्री, तत्रस्था तेन रक्षिता ॥ १५६ ॥
स्वकीयोत्सवकार्यस्य, व्याजं निष्कास्य छद्मना ।
दुष्कार्यं विहितं तेन, साधुत्वं नाममात्रतः ॥ १५७ ॥
उत्सवविघ्नदानाय, विहितं पापयोगतः ।
ओवनेनैव तज्ज्ञातं, भावपत्तनग्रामतः ॥ १५८ ॥
वाद्यादिसर्वसामग्री, राजकीयाश्च चार्पिता ।
अतीव धर्मवृद्धीनां, सद्भावस्तत्र जायते ॥ १५९ ॥

तत्स्थः साधोश्च तद्दृष्ट्वा, हृदये क्लेशभावना ।
संजाता पापयोगेन, सूर्योदये यथोलूकः ॥ १६० ॥

सुन्दरा रथयात्रा च, अपूर्वा तत्र जायते ।
धार्मिजनस्य चाल्हादः, अन्येषां खेदभावना ॥ १६१ ॥

मालानां परिधानस्य, लग्ने समे समागते ।
घृतानां जल्पने कार्ये, आदेशो वर्धने भवेत् ॥ १६२ ॥

सप्तशतेन रूप्यानामाद्यामाला समर्पिता ।
क्रमेण जल्पने तासां, दशसहस्रसंख्यकाः ॥ १६३ ॥

रूप्यकास्तत्र सञ्जाताः, गृहीतास्त्रष्टिपुंगवैः ।
ज्ञानपूजनकार्याणां, द्विसहस्रसमागतम् ॥ १६४ ॥

गृहीतं तच्च तत्रस्थैः, त्रष्टिमहाशयैः खलु ।
कति तद्ग्रामवास्तव्यैः, श्राद्धैश्च स्वीयमन्दिरे ॥ १६५ ॥

महोत्सवश्च सम्पूर्णः, सञ्जातो धर्मयोगतः ।
परस्परं प्रशंसन्ति, गुरुदेवं च श्रावकाः ॥ १६६ ॥

मृगशिरसि शुक्ले च, पूर्णिमादिवसे तदा ।
विहारो गुरुदेवानां, सुखपूर्वेण जायते ॥ १६७ ॥

मढडाग्राममध्ये च, तद्दिने गुरवो गताः ।
पादलिप्तस्य श्राद्धैश्च, तथाऽन्यग्रामवासिभिः ॥ १६८ ॥

स्वामिवात्सल्यता तत्र, आगत्य तैः कृता तथा ।
सर्वेषां प्रेमपूर्वेण, संजातं तत्र भोजनम् ॥ १६९ ॥

प्रतिक्रान्तिश्च तत्सर्वैः, तद्दिने गुरुणा सह ।
कृता च भावपूर्वेण, ततः शिहोरमध्यके ॥ १७० ॥
गुरूणां नियमस्तत्र, विषये खलु जायते ।
आगमनं च नैकेषां, ज्ञापनीयं च सर्वदा ॥ १७१ ॥
शिहोरनगरस्थैश्च, आगतं गुरुसम्मुखे ।
गुरवो मीलिता नैव, खेदस्तेषां प्रजायते ॥ १७२ ॥
एकाकिगुरुदेवेन, उपाश्रये च साधुना ।
गम्यते तत्र भव्यानां, पार्श्वे स्थानं च याचितम् ॥१७३॥
आगतिं गुरुदेवानां, श्रुत्वा सर्वे समागता ।
उत्साहभङ्गतां दृष्ट्वा, दर्शिता श्राद्धधर्मता ॥ १७४ ॥
भावनगरवास्तव्याः, मुख्याः सर्वे च तत्क्षणे ।
आगत्यैव गुरूणां च, प्रार्थना महती कृता ॥ १७५ ॥
यादृशं कार्यमत्रैव, संजातं दैवयोगतः ।
अस्मद्ग्रामे च नो तादृग्, कर्त्तव्यं गुरुणा खलु ॥१७६॥
दीक्षास्थानं हि युष्माकं, विद्यते भावपत्तनम् ।
वृद्धिचन्द्रगुरूणां च, पूज्यानां पादुकास्थलम् ॥ १७७ ॥
विद्याऽध्ययनस्थानं च, दृश्यते च मनोहरम् ।
नागन्तव्यमकस्माद्धि स्वीकुरु याचना मम ॥ १७८ ॥
गुरुणा तत्र सम्प्रोक्तं, त्वत्कर्त्तव्यं तवाधीनम् ।
क्रियतां तत्र संबाधा, क्षिप्यते नैव केनचित् ॥ १७९ ॥

दर्शनं देवदेवस्य, कृतं च तत्र भावतः ।
व्याख्यानादिककार्यं च, क्रियते धर्महेतवे ॥ १८० ॥
कपोलजातिमुख्याश्च, गीरधराः समागताः ।
व्याख्यानायैव विज्ञप्तिः, कृता चातीव भावतः ॥१८१॥
स्वीकृत्य प्रार्थना तेषां, दत्ता च देशना तदा ।
दिनाष्टकं च पर्यन्तं, देशना क्रियते शुभा ॥ १८२ ॥
लाभालाभौ च विज्ञाय, स्वीकृता सा च तत्क्षणे ।
तच्छ्रुत्वा सर्वजीवाश्च, शंसन्ति जैनधर्मकम् ॥ १८३ ॥
येषां च तादृशाः पूज्याः, शुद्धात्मवादवादकाः ।
षड्दर्शनस्य वेत्तारो, दुर्लभाश्चात्र सम्मताः ॥ १८४ ॥
शुष्कवेदान्तवक्तॄणामाचारो नैव विद्यते ।
सत्यं ब्रह्मजगन्मिथ्या, प्रोक्त्वा कुर्वन्ति नो किमु ॥१८५॥
भक्ष्याभक्ष्यस्य भेदो न, शुष्केषु विद्यते कदा ।
केवलश्रुतिवक्तारः, दृश्यन्ते च पदे पदे ॥ १८६ ॥
आचारपरिपूर्णाश्च, दृश्यन्ते जैनसाधवः ।
योगमार्गस्य साम्मुख्यं, प्रतिरोमं प्रवर्त्तते ॥ १८७ ॥
प्रशंसां तादृशीं तत्र, कुर्वन्ति बहवो जनाः
आत्मश्लाघा गुरूणां च, हृदये दुःखरूपिका ॥ १८८ ॥
तत्रत्य सर्वकार्यं, तत् कृत्वा च भावपत्तने ।
वरतेजे समागत्य, गताश्च गुरवस्तदा ॥ १८९ ॥

दादासाहबवाट्यां च, संघमुख्याः समागताः ।
साधवस्तत्र तत्काले, आगता गुरुसन्निधौ ॥ १९० ॥
गजाश्वरथवाद्यानां, सामग्री च समागता ।
भावपत्तनवास्तव्या, सर्वा प्रजा च तत्स्थले ॥ १९१ ॥
रचितो व्यूहरूपेण, प्रवेशनमहोत्सवः ।
गहूंली च प्रतिस्थाने, कुर्वन्ति सधवाः स्त्रियः ॥ १९२ ॥
जयमङ्गलशब्दानां, जयघोषः प्रजायते ।
शुभमधुरगीतेन, आकाशं गर्जितं तदा ॥ १९३ ॥
दादासाहबवाट्यां च, विशुद्धा चैत्यवन्दना ।
वृद्धिचन्द्रगुरूणां च, पादन्यासोऽपि वन्दितः ॥ १९४ ॥
मारवाड्याख्यवण्डायां, निवासो गुरुणा कृतः ।
मङ्गलाचरणं तत्र, श्रावितं दुःखरूपतः ॥ १९५ ॥
गुरुश्रीवृद्धिचन्द्राणां, यत्र व्याख्यानगर्जना ।
सञ्जाता सुखपूर्वेण, स्वर्गं ते गुरवो गताः ॥ १९६ ॥
वन्दना पूज्यपादानां, प्रत्यहं च कृता मया ।
कृतं भक्तिविधानादि, स्वर्गं ते गुरवो गताः ॥ १९७ ॥
इदं च गुरुदेवानां, ध्यानस्थानं प्रवर्तते ।
आहारपानस्थानं च, दृष्ट्वाश्रूणां प्रपातता ॥ १९८ ॥
साधुवृन्देन पूज्यानां, सर्वं च तत्र ज्ञापितम् ।
ज्ञानदृष्टिप्रयोगेन, मानसं वालितं तदा ॥ १९९

अतीव प्रेमसद्भावः, गुरूणां गुरुणा सह ।
यादृशश्च मया दृष्टः, अन्यत्र नहि तादृशः ॥ २०० ॥
सर्वमन्दिरदृष्ट्यर्थं संघसार्कं गतास्तदा ।
पूर्णसद्भावपूर्वेण, प्रभूणां दर्शनं कृतम् ॥ २०१ ॥
प्रत्यहं देशना तत्र, वण्डायां परिजायते ।
सर्वप्रजाजनेनैव, आगत्य देशना श्रुता ॥ २०२ ॥
तत्र स्थानं च सङ्कीर्णं, सञ्जातं श्रोतृवर्गतः ।
सार्वजनीनकर्त्तव्ये, प्रार्थना च कृता जनैः ॥ २०३ ॥
विभिन्नविषयं तत्र, व्याख्यानं परिजायते ।
गुलाबरायतस्तत्र, अनुमोदनता भवेत् ॥ २०४ ॥
श्रेष्ठित्र्यम्बकलालेन, पुनश्च प्रार्थना कृता ।
व्याख्यानयोरणिस्तत्र, सञ्जाता च पुनः पुनः ॥ २०५ ॥
पट्टणीसाहेबेनैव, व्याख्याने गुरुसन्निधौ ।
योगविषयकाः प्रश्नाः, कृता च बहुयोगतः ॥ २०६ ॥
उत्तरं गुरुपार्श्वे च, श्रुत्वा प्रमोदभावना ।
प्रकटिता तदा तेन, जैनसङ्घः प्रहर्षितः ॥ २०७ ॥
पशुशालाख्यसंस्थायाः, टीप्पणं च कृतं तथा ।
प्रजाजनेन साहाय्यं, प्रदत्तं सर्वथा खलु ॥ २०८ ॥
तालध्वजस्य यात्रार्थे, प्रयाणं गुरुणा कृतम् ।
घोघाबन्दरचैत्येषु, प्रभूणां दर्शनं तथा ॥ २०९ ॥

भावपत्तनश्राद्धाश्च, सर्वे तत्र समागताः ।
चातुर्मासाय विज्ञप्तिः, कृता चातीव भावतः ॥ २१० ॥
दर्शयिष्यामि तत्कालं, प्रदत्तं चोत्तरं तदा ।
तालध्वजीयभव्यालिः, आगता गुरुसन्निधौ ॥ २११ ॥
टेसीटोरी च तत्स्थाने, दर्शनाय समागतः ।
उत्साहः सर्वजैना-मतीव वर्धितस्तदा ॥ २१२ ॥
भक्तिभावेन शालाया-मुत्तरणं च कारितम् ।
पंन्यासाश्च महाभागाः, चतुरविजयादिकाः ॥ २१३ ॥
मीलनं तत्र तेषां च, बन्धूनां बहुप्रेमतः ।
तीर्थयात्राविधानाय, साधुभिर्गुरवो गताः ॥ २१४ ॥
अनेकवापीकूपानां, भूमिगृहस्य चाकरः ।
सुमतिनाथदेवानां, मन्दिरं च मनोहरम् ॥ २१५ ॥
गिरिराजस्य कूटोऽयं, गिरिराजसमो मतः ।
तादृशप्रेमपूर्वेण, कृता च चैत्यवन्दना ॥ २१६ ॥
अपूर्वदर्शनं तस्य, नान्यत्र रामणीयता ।
विशालं गह्वरं तत्र, राजते नैकस्थानके ॥ २१७ ॥
आरोह लघुकस्तस्य, वर्तते च सुखावहः ।
आरोहणं हि चान्यत्र, कठिनं प्रतिभासते ॥ २१८ ॥
प्रजाजनेन तत्रापि, आगत्य प्रार्थना कृता ।
व्याख्यानाय तत्पार्श्वे, कालाऽभावः प्रदर्शितः ॥ २१९ ॥

तथापि मानितं नैव, प्रज्ञाजनेन तत्क्षणे ।
याश्वासफलकार्याय, पुनश्च प्रार्थना कृता ॥ २२० ॥
अत्याग्रहवशेनैव, व्याख्यानं द्वितयं कृतम् ।
सम्पूर्णजनसन्दोहैः, कृतं च श्रवणं महत् ॥ २२१ ॥
ततो दाठाख्यसद्ग्रामे, विहृत्य गुरवो गताः ।
मन्दिरदर्शनं कृत्वा, मध्याह्ने च विनिर्गताः ॥ २२२ ॥
भाद्रोडनिकटे स्थाने, मधुमतीनिवासिनः ।
श्राद्धाः सर्वे समायाताः, गुरुवन्दनहेतवे ॥ २२३ ॥
मधुमत्याश्च नैकट्ये, सम्पूर्णग्रामवासिनः ।
जैनजैनेतराः सर्वे, समायाताश्च भावतः ॥ २२४ ॥
प्रभुजीवत्वकाले च, नन्दिवर्द्धनबन्धुना ।
सा मूर्त्तिश्च समानीता, जावडश्राद्धयत्नतः ॥ २२५ ॥
मन्दिरं तन्मनोहारि, गत्वा च चैत्यवन्दनाम् ।
कृत्वा चोपाश्रये तत्र, गत्वा च मंगलं कृतम् ॥ २२६ ॥
बहुकाले समायाते, ततो हि धर्मरागतः ।
अतिश्रद्धात्वपूर्वेण, भक्तिभावः प्रदर्शितः ॥ २२७ ॥
गुरुणा धर्मलाभेन, सन्तोषिताश्च भावुकाः ।
अन्यत्र देशनास्थानं, सङ्घेन निश्चितं तदा ॥ २२८ ॥
प्रत्यहं देशना तत्र, जायते शुद्धबोधतः ।
प्रभावो गुरुदेवानां, सर्वत्र प्रसृतः खलु ॥ २२९ ॥

स्वाध्यायध्यानकार्यं च, कुर्वन्ति साधवः सदा ।
उपाश्रये च स्थित्वैव, शङ्कोत्तरं विधीयते ॥ २३० ॥
व्याख्याने सार्वकर्त्तव्ये, याचना ग्रामवासिना ।
महाजनस्य वण्डायां, व्याख्यानं जायते शुभम् ॥ २३१ ॥
वृद्धमहाजनेनैव, प्रबंधः सर्वः योजितः ।
हिन्दुमुस्लिमजातीनां, भेदभावो न विद्यते ॥ २३२ ॥
आगत्य देशनापानं, पीयतेऽमृतरूपतः ।
प्रशंसां जैनधर्मस्य, कुर्वन्ति ते च प्रेमतः ॥ २३३ ॥
व्याख्यानश्रेणियाञ्चा च, कृता जनेन तत्क्षणे ।
गुरवो नैव जैनानां, सर्वेषां किन्तु सम्मता ॥ २३४ ॥
हृदयोद्गारतोद्भूताः, शब्दाश्च खलु तादृशाः ।
जैनाः प्रमोदभावं च, वितन्वन्ति पुनः पुनः ॥ २३५ ॥
स्वीकृता देशनाश्रेणिः, विभिन्नविषयात्मिका ।
सर्वेषां विदुषां तत्र, व्याख्यानं जायते किल ॥ २३६ ॥
दुष्टपद्धतिरोधाय, देशनारसपूर्विका ।
युक्तिप्रमाणयुक्तेन, व्याख्यानं प्रविधीयते ॥ २३७ ॥
केनचिद्बालकेनैव, आगत्य गुरुसन्निधौ ।
व्यापारकार्यचर्चा च, निष्कासिता सुयोगतः ॥ २३८ ॥
पूर्णव्यापारिवर्गश्च, जैनजैनेतरस्तथा ।
घृतव्यापारकार्यं च, करोति तीव्रयोगतः ॥ २३९ ॥

तापिकायां च निक्षिप्य, दुग्धजलादिवस्तुकम् ।
घृतेनैव समुत्काल्य, भाण्डेषु धारयेत्ततः ॥ २४० ॥

वहुजीवसमुत्पत्तिः, जायते च पुनः पुनः ।
अनेकदिवसे जाते, जीवोत्कालनता भवेत् ॥ २४१ ॥

प्रेषयन्ति ततोऽन्यत्र, मोहमय्यादिस्थानके ।
विरूपता यदा जाते, प्रत्यागच्छति तत्र वै ॥ २४२ ॥

पुनरुत्काल्य तत्रैव, प्रेषयन्ति च ते जनाः ।
इत्येवं कार्यकर्त्तव्ये, त्रसजन्तुविनाशनम् ॥ २४३ ॥

घृताऽशुद्धस्य दातृत्वे, भक्षणे रोगता भवेत् ।
रोगाधीने च सञ्जाते, मृत्युः केषां न जायते ॥ २४४ ॥

अल्पमूल्यं घृतं तच्च, अन्यत्तु बहुमूल्यकम् ।
अतो हि गृह्यते तद्धि, रोगाश्च भक्षणे न किम् ॥ २४५ ॥

जावडानां क्षमा चेयं, कथं पापप्रवेशता ।
हिन्दुधर्मेषु नो तादृग्, कुत्रापि प्रतिपादितम् ॥ २४६ ॥

इस्लामधर्मकूराणे, लिखितं नैव कुत्रचित् ।
कथं तादृशपापं च, महाभागैर्विधीयते ॥ २४७ ॥

जैनानां सर्वथा नैव, कर्त्तव्यमुचितं मतम् ।
क्रियते केन योगेन, पापिपिण्डस्य पोषणम् ॥ २४८ ॥

जीवस्य मारणे धर्मः, नो केन प्रतिपाद्यते ।
अहिंसा परमो धर्मः, सर्वशास्त्रेषु विश्रुतः ॥ २४९ ॥

दयालेशश्च चित्ते, चेत्तत्पापं नैव तन्यताम् ।
अनेकानर्थमूलं च, कथं त्वया विधीयते ॥ २५० ॥

वृद्धमहाजनं तत्र, सम्मील्य सर्वसन्निधौ ।
परस्परं विचारं च, कुर्वन्ति तेऽपि तत्क्षणे ॥ २५१ ॥

खोजामुस्लिगजातिश्च, आगता तत्र शोचने ।
सर्वमहाजनेनैव, विचारितं च बुद्धितः ॥ २५२ ॥

यावत्प्रमाणरूपं च, घृतं तिष्ठति यद् गृहे ।
तावत्कालस्य पर्यन्तं, विक्रियतां च तद्घृतम् ॥ २५३ ॥

पश्चाच्च नूतनं नैव, तापिकायां वितन्यते ।
क्रियते यदि केनापि, तदा दण्डो महान्भवेत् ॥ २५४ ॥

महाजनाद्बहिष्कारः, क्रियते च महाजनैः ।
इति प्रस्ताता तत्र, सर्वेण कारिता खलु ॥ २५५ ॥

कृत्वा च गुरुसामीप्ये, सर्वे जनाः समागताः ।
गुरो ! भवत्प्रसादेन, इदं पापं विनिर्गतम् ॥ २५६ ॥
महाजनेन सम्मील्य, प्रस्तावोऽयं च निर्णीतः ।
दृश्यतां तत्र हानिश्चेत्तदा पुनर्निवेद्यताम् ॥ २५७ ॥
गुरुणा शोचितं तत्र, प्रस्तावः शुद्धभावतः ।
कृतिमहाजनेनैव, त्रुटिस्तु नैव विद्यते ॥ २५८ ॥
प्रफुल्लहृदयेनैव, दत्ताचाशिश्च तत्क्षणे ।
धर्मलाभस्वरूपां तां, श्रुत्वा सर्वे प्रहर्षिताः ॥ २५९ ॥

अपूर्वकार्यसञ्जातं, सद्गुरुदेशनादितः ।
कदाचिदन्यथा नैव, जायते केन कर्हिचित् ॥ २६० ॥
ततो ङ्डासणे ग्रामे, गताश्च गुरवः खलु ।
जैनबालकवर्गस्य, स्थितिस्तत्र निरीक्षिता ॥ २६१ ॥
पठनं गुणनं नैव, क्षेत्रेषु भ्रमणं सदा ।
श्रीकृष्णवाटिकां गत्वा, घंटावादनकार्यकम् ॥ २६२ ॥
जानन्ति नान्यकार्यं च, जैनधर्मस्य का कथा ।
चरन्ति जैननाम्नैव, बलिवर्दसमा मताः ॥ २६३ ॥
विचार्य तत्र चागत्य, आहूताः सर्वश्रावकाः ।
भवतां जीवनं व्यर्थं, उपकारं कृतं विना ॥ २६४ ॥
भवतां बन्धवाः सर्वे, ग्राम्याश्च मृगसादृशाः ।
विद्यां विना न शोभन्ते, हंसेषु बकपक्षिणः ॥ २६५ ॥
सम्पत्तिर्भवतां नैव, भवता सह गच्छति ।
पापार्जनं कथं तादृक्, क्रियते केन हेतुना ॥ २६६ ॥
येन जातिसमुद्धारः, विहितो नैव कर्हिचित् ।
धर्मोद्धारश्च तेनैव, न कश्चिद्विहितः कदा ॥ २६७ ॥
विद्याध्ययनकार्याय, धनं नैव व्ययीकृतम् ।
दरिद्रजातिबन्धूनां, कृता नैव सहायता ॥ २६८ ॥
जीर्णोद्धारश्च येनैव, सत्यां शक्तौ न कारितः ।
ज्ञानभण्डारकार्यस्य, चिन्तनं येन नो कृतम् ॥ २६९ ॥

उदरभरणायैव चिन्ता, कृता च सर्वदा ।
तेन मनुष्यजन्मत्वं, हारितं जैनशासने ॥ २७० ॥

आशयं च गुरोर्ज्ञात्वा, उत्तेजिताश्च श्रावकाः ।
सम्मील्य सर्वभक्तेन, कार्यादेशो विधीयताम् ॥ २७१ ॥

गुरुणा कथिता तत्र, बालाश्रमस्य योजना ।
ग्राम्यबन्धुजनानां च, पठनाय वितन्यताम् ॥ २७२ ॥

विना विद्यां च गोतुल्याः, संजाताः श्रावकाः खलु ।
देवगुरुस्वरूपं च, न जानन्ति च किञ्चन ॥ २७३ ॥

जैनधर्मस्वरूपस्य, ज्ञाने किमु निगद्यते ।
नामतो जैनधर्माश्च, आचारे लेशता नहि ॥ २७४ ॥

अतः सर्वं च संत्यक्त्वा, बालाश्रमो विधीयताम् ।
यस्य च यादृशी चेच्छा, तद्धनं तेन दीयताम् ॥ २७५ ॥

त्रयोदशसहस्रं च, रूप्यानां तत्र जायते ।
प्रारम्भकालकार्ये च, पश्चात्तत्र समर्गलम् ॥ २७६ ॥

यशोवृद्ध्यभिधानं च, प्रदत्तं गुरुणा तदा ।
शुभे लग्ने च तत्कार्यं, प्रारब्धं दैवयोगतः ॥ २७७ ॥

कुशलचन्द्रभव्येन, साहाय्यं च कृतं महत् ।
अन्येनापि जनेनैव, यथाशक्त्या च कारितम् ॥ २७८ ॥

ज्ञानप्रभा गुरूणां च, देशनामृतपानतः ।
मधुमत्यां च सञ्जाता, अधुना सापि विद्यते ॥ २७९ ॥

ग्राम्यजनाश्च तच्छुत्वा, गृहीत्वा स्वीयबालकान् ।
मुंचन्ति तत्र चागत्य, विद्याध्ययनहेतवे ॥ २८० ॥

जयन्ती वीरदेवानां, तत्रैव गुरुणा कृता ।
अत्युत्साहप्रवेगेन, संजाता धर्मघोषणा ॥ २८१ ॥

मण्डपरचनाकार्यं, कारितं सर्वभावुकैः ।
व्याख्यानं विदुषां चैव, वीरजीवनतायुतम् ॥ २८२ ॥

अनन्तगुणताऽढ्यं तत्, कथितुं नैव शक्यते ।
तथापि लेशमात्रेण, वस्तूनां दर्शनं कृतम् ॥ २८३ ॥

निबन्धाश्च समायाताः, अनेके तत्र मण्डपे ।
सर्वेषां पठनं नैव, जायते खलु तत्क्षणे ॥ २८४ ॥

वर्धमानजिनेन्द्रस्य, श्रुतं सर्वेण जीवनम् ।
ते सर्वे चानुमोदन्ते, सर्वेषां शिवदं मतम् ॥ २८५ ॥

स्वामिवात्सल्यकं तत्र, रथयात्रा मनोहरा ।
द्वितीयदिवसे जाता, सर्वेषां दृष्टिहेतवे ॥ २८६ ॥

पूर्णिमादिवसे पट्टयात्रा, कृता च भावतः ।
गिरिराजस्य सामीप्ये, गत्वा च विहिता तदा ॥ २८७ ॥

वृद्धिचन्द्रगुरूणां च, जयन्ती शुभभावतः ।
कारिता गुरुदेवेन, जीवनं बोधरूपतः ॥ २८८ ॥

बालाश्रमस्य तत्काले, व्यवस्था कारिता शुभा ।
प्रामुख्यं कुशले ज्ञेयं, धामी द्रव्यस्य चिन्तकः ॥ २८९ ॥

लक्ष्मीचन्द्रात्मजेनैव, दुर्लभेन तदा खलु ।
मन्त्रिपदं च सन्मत्या, स्वीकृतं गुरुबोधतः ॥ २९० ॥

कुण्डलाग्रामसामीप्ये, गताश्च गुरवस्तदा ।
मङ्गलादिकसाधूनां, पूर्वं च प्रेषणं कृतम् ॥ २९१ ॥

गाधकडासु विज्ञेयं, जीर्णोद्धारीयदेशनम् ।
मन्दिरार्द्धं विनिर्माय, स्थितास्ते मौनरूपतः ॥ २९२ ॥

पूर्णकार्यस्य कर्त्तव्ये, प्रतिज्ञा कारिता च तैः ।
श्रावकधर्मपोषाय, प्रदत्तं च व्रतादिकम् ॥ २९३ ॥

कुण्डलाग्राममध्ये च, अतीव भिन्नभावता ।
पुत्रीपितुगृहे नैव, पिता गच्छति तद्गृहे ॥ २९४ ॥

द्वादशवार्षिकीभिन्नभावना चात्र दृश्यते ।
अतः कलह शान्त्यर्थं, साधुभिस्तद्विधीयते ॥ २९५ ॥

नदीनावलिसंकाशे, श्राद्धाः सर्वे समागताः ।
लोकलज्जाप्रज्ञप्त्यर्थं, कार्यं सर्वं कृतं तदा ॥ २९६ ॥

धर्मशालासु गत्वैव, व्याख्यानं गुरुणा कृतम् ।
प्रभावना च नो तत्र, जायते कर्हिचित्कदा ॥ २९७ ॥

मध्याह्नसमये सर्वान्, समाहूय स्वसन्निधौ ।
क्लेशस्य कारणं पृष्टं, स्वल्पमात्रं च दर्शितम् ॥ २९८ ॥

क्लेशस्य रक्षणं श्रेष्ठं, किं वा निष्कासनं वरम् ।
द्वयोर्मध्ये च यच्छ्रेष्ठं, तत्कार्यं तन्यतां त्वया ॥ २९९ ॥

मुख्यैस्तत्र समागत्य, कथितं गुरुसम्मुखे ।
नाशनं चात्र क्लेशस्य, कदापि नैव जायते ॥ ३०० ॥
निष्कासने च येषां वै, जिज्ञासा परिवर्तते ।
तैरत्र मम पार्श्वे च, आगत्य लिख्यतां यथा ॥ ३०१ ॥
परिणामं च पूज्येन, यादृशं दीयते तथा ।
स्वीक्रियते च तादृक्षमस्माभिः खलु सर्वथा ॥ ३०२ ॥
हस्ताक्षरांश्च कुर्वन्तु, तदा निर्दोषिता समे ।
अन्ये च दोषता युक्ताः, जानन्ति चान्यसज्जनाः ॥३०३॥
तेषां हस्ताक्षरं दृष्ट्वा, अन्ये सर्वे चमत्कृताः ।
गुरुपार्श्वे समागत्य, तैरेव तत्कृतास्तदा ॥ ३०४ ॥
परिणामं च तत्पश्चाद्भविष्यतीति निश्चितम् ।
भोजनं प्राक् च कर्त्तव्यं, सम्भूय ग्रामवासिभिः ॥३०५॥
श्रावयिष्यामि तत्पश्चात्, परिणामं च सुन्दरम् ।
मदीयाज्ञाऽनुसारेण, सर्वं पूर्वं विधीयताम् ॥ ३०६ ॥
स्वामिवात्सल्यकात्पूर्वं रथयात्रा मनोहरा ।
कारिता संघमुख्येन, अतीवोत्साहपूर्विका ॥ ३०७ ॥
स्नात्रमहोत्सवस्तत्र, संजातो गुरुभक्तितः ।
ततोऽनुस्वामिवात्सल्यं, सञ्जातं सुन्दरं ततः ॥ ३०८ ॥
आनन्दमङ्गलं तत्र, वर्त्तितं गुरुयोगतः ।
हर्षावेशेन मित्रत्वं, हृत्पटाच्च विनिर्गतम् ॥ ३०९ ॥

महत्कार्यं कृतं तत्र, अज्ञानिजनबोधतः ।
देवद्रव्यादिवस्तूनां, शोधनं च कृतं तदा ॥ ३१० ॥
जीराऽऽम्बादिकग्रामेषु, कर्षकानां प्रबोधनात् ।
एकादश्यादिके गन्त्र्यां, भारवाहनिषेधनम् ॥ ३११ ॥
हले च बलिवर्दानां, तद्दिने तैर्न तुद्यते ।
वृश्चिकसर्पजीवानां, मारणं न कदाचन ॥ ३१२ ॥
तत्पश्चादमरेल्यां च, गताश्च गुरवः खलु ।
तन्निवासिजनेनैव, कार्यं हि चोचितं कृतम् ॥ ३१३ ॥
प्रभूणां दर्शनं कृत्वा, प्रदत्ता तत्र देशना ।
सुन्दरादिकसच्छ्राद्धाः, आगता धर्मयोगतः ॥ ३१४ ॥
जिज्ञासा गुरुदेवानां, तत्र स्थातुं प्रवर्त्तते ।
चातुर्मासाय विज्ञप्ति–करणे ते समुद्यताः ॥ ३१५ ॥
सार्वजनीनकर्त्तव्ये, जनानामाग्रहो बहु ।
तोषोत्पादाय तेषां च, स्वीकृता गुरुदेशना ॥ ३१६ ॥
महामहाजनस्थाने, व्याख्यानं जायते शुभम् ।
कृपाशंकरमुख्याश्च, शृण्वन्ति ब्राह्मणास्तदा ॥ ३१७ ॥
तत्रत्य सर्ववास्तव्याः, गुरुव्याख्यानमोहिताः ।
तत्र स्थिरत्वकार्याय, प्रार्थयन्ति पुनः पुनः ॥ ३१८ ॥
भावपत्तनमुख्याश्च, विज्ञप्त्यर्थं समागताः ।
तेषामागमनं श्रुत्वा, सर्वे तत्रैव कम्पिताः ॥ ३१९ ॥

मीलित्वा तत्र वास्तव्यैः, सर्वैर्विचारितं तदा ।
गुरूणां विहृतिर्नैव, कार्यते कोटियत्नतः ॥ ३२० ॥
भावपत्तनमव्यैश्च, व्याख्याने प्रार्थना कृता ।
गुरुदेवेन सम्प्रोक्तं, अत्रत्यैर्मन्यते यदि ॥ ३२१ ॥
आगन्तव्यं तदा तत्र, अन्यथा नैव गम्यते ।
अत्रत्या नैव मन्यन्ते, उपायेऽपि कृते सति ॥ ३२२ ॥
भेदनीत्या च तेषां वै, बोधनं कारितं तथा ।
आगत्य गुरुपार्श्वे च, प्रोक्तं च भावुकैस्तदा ॥ ३२३ ॥
मानितमत्रवास्तव्यैः, विहारः क्रियतां शुभम् ।
कृत्वा चाहारपानीयं, विहारे च समुत्सुकाः ॥ ३२४ ॥
महाजनेन तज्ज्ञातं, विहारः क्रियते कथम् ।
आबालवृद्धकैस्तत्र, गन्तव्यं तन्निरोधने ॥ ३२५ ॥
गत्वा तत्रैव सुप्तव्यं, मार्गमध्ये यथा क्रमम् ।
उरः पादौ च दत्त्वैव, यथासुखेन गम्यताम् ॥ ३२६ ॥
मन्दिरं दर्शनं कृत्वा, विह्रियते यदा तदा ।
शयनं बालजीवानां, दृष्ट्वा चमत्कृताः खलु ॥ ३२७ ॥
कियत्स्थानस्य पर्यन्ता, इयं स्थितिः प्रवर्त्तते ।
सम्प्रोक्तं मण्डिपर्यन्तं, बालवृद्धैश्च शायितम् ॥ ३२८ ॥
भावनगरवास्तव्याः, श्राद्धाः सर्वे चमत्कृताः ।
दृश्यं च तादृशं नैव, दृष्टं कुत्रापि मादृशैः ॥ ३२९ ॥

जैनेतरैश्च जैनेषु, यादृशी भक्तिभावना ।
नाद्यापि दर्शिता कैश्च, दृष्टान्त प्रथमं किल ॥ ३३० ॥
गुरुदेवमहात्म्यं तदस्माभिर्नैव वर्ण्यते ।
वशीकृतं च तद्ग्रामं, मन्त्रमुग्धं तदा मतम् ॥३३१॥
तत्सङ्गेनैव तत्स्थाने, स्थैर्यार्थं प्रार्थना कृता ।
धन्यवादस्य सद्वृष्टिः, कारिता ग्रामसज्जनैः ॥ ३३२ ॥
ग्राममुख्यैः समागत्य, गुरूणां प्रार्थना कृता ।
व्याख्यानं भवतां नैव, उपाश्रये च शोभते ॥ ३३३ ॥
किन्तु प्रसिद्धस्थानेषु, व्याख्यानं क्रियतां सदा ।
स्वीकृत्य प्रार्थना तेषां, गुरुणा निश्चितं तदा ॥ ३३४ ॥
कपोलभ्रातृवर्गस्य, शालायां देशना खलु ।
कर्त्तव्या गुरुदेवेन, इति सर्वैर्विनिश्चितम् ॥ ३३५ ॥
प्रत्यहं गुरुदेवानां, व्याख्यानं तत्र जायते ।
द्विसहस्रजनास्तत्र, आगच्छन्ति च भावतः ॥ ३३६ ॥
चत्वारिंशच्च भव्यानां, श्रावकानां गृहाणि वै ।
तादृशो जनसन्दोहः, व्याख्यानसमये किल ॥ ३३७ ॥
पर्युषणा समायाते, श्रावकैः प्रार्थना कृता ।
व्याख्यानं कल्पसूत्रस्य, उपाश्रये विधीयताम् ॥ ३३८ ॥
अन्ये वोधन्ति तन्नैवमतोऽत्र प्रवितन्यताम् ।
गुरुणा तत्र सम्प्रोक्तं, प्रभावनाऽत्र हेतुकम् ॥ ३३९ ॥

स्वल्पद्रव्यव्ययस्तत्र, महदत्रैव सम्भवेत् ।
अतोऽत्र नैव कर्त्तव्यं, इत्येवं भावना तव ॥ ३४० ॥

श्राद्धाभिप्रायकं ज्ञात्वा, गुरुणा जल्पितं तदा ।
संज्ञापनं च तेषां हि, मया शुद्धं विधीयते ॥ ३४१ ॥

काचिच्चिन्ताऽपि नो तत्र, कर्त्तव्याः श्रावकैः खलु ।
इत्युक्त्वा देशना धर्म–शालायां गुरुणा कृता ॥ ३४२ ॥

अष्टाह्निके समारब्धे, प्रभावना न कृता तदा ।
कपोलादि महाभागैः, कृता तत्र प्रभावना ॥ ३४३ ॥

प्रत्यहं च द्विवारं वै, अन्यश्रोतृजनैः कृता ।
नालिकेरफलादीनां, भिन्नरूपेण भावना ॥ ३४४ ॥

अर्पणं कल्पसूत्रस्य, कुम्भकारेण कारितम् ।
जागरणं च तत्तेन, विहितं शुभभावतः ॥ ३४५ ॥

श्रुत्यर्थं कल्पसूत्रस्य, सर्वे जनाः समागताः ।
पंचसहस्रसंख्याकाः, आगता भावुकास्तथा ॥ ३४६ ॥

स्वप्नादिसर्वजल्पाश्च, प्रजावर्गेण कारिता ।
महद्द्रव्यस्य सम्प्राप्तिः, मन्दिरे च समागताः ॥ ३४७ ॥

जन्मवाचनकाले च, आगताः सर्वसज्जनाः ।
संवत्सरिदिनस्यैव, पालने कथितं तदा ॥ ३४८ ॥

प्रजावर्गेण सम्प्रोक्तं, इदं स्तोकं तु कथ्यते ।
इमे प्राणास्त्वदीयाश्च, गृह्यन्तां गुरुणा खलु ॥ ३४९ ॥
प्रजावर्गस्य तादृक्षीं, श्रुत्वा शुद्धां च भारतीम् ।
प्रमोदः सर्वभव्यानां, मानसे जायते तदा ॥ ३५० ॥
यवनाश्चापि तत्कार्यं, कुर्वन्ति प्रेमभावतः ।
पञ्चसहस्रसंख्याकाः, जल्पन्ति तादृशं वचः ॥ ३५१ ॥
मांसभक्षणं कार्यं च, करिष्यामो न तद्दिने ।
अत्र परत्र कुत्रचित्स्थास्यामो यदि जीवतः ॥ ३५२ ॥
अमरेली च यत्कालपर्यन्तं परितिष्ठति ।
तावत्कालस्य पर्यन्तं, प्रतिज्ञा परिज्ञायताम् ॥ ३५३ ॥
हिन्दुमनुष्यमात्रेण, प्रतिज्ञा तादृशी कृता ।
व्याख्यानसमये सर्वैः, लिखितं संघपुस्तके ॥ ३५४ ॥
यावत्कालमिदं ग्रामं, स्थास्यति चात्र भारते ।
तावत्कालस्य पर्यन्तं, संवत्सरिदिनं खलु ॥ ३५५ ॥
गुरुभ्यश्च प्रदत्तं, तदिति सर्वैश्च निश्चितम् ।
कषायिपुरुषास्तत्र, आगत्य गुरुसन्निधौ ॥ ३५६ ॥
पालयिष्यामस्तद्दिनं, गुरूणां च समर्पितम् ।
जीववधो मया नैव, विधीयते कदाचन ॥ ३५७ ॥
क्षत्रियमणिआराख्या, जातिस्तत्र प्रविद्यते ।
तस्यां पूर्वं च जैनत्वम–धुना तैः विनाशितम् ॥ ३५८ ॥

कट्टरवैष्णवा जाता, कण्ठी मूर्धनि धारिता ।
तच्छ्रुत्वा गुरुदेवेन, आहूतास्ते जनास्तदा ॥ ३५९ ॥
वृद्धलोकैश्च सम्प्रोक्तं, यूयं पूर्वे च कीदृशाः ? ।
वयं जैनाश्च प्राक्काले, पश्चाज्जाताश्च वैष्णवाः ॥ ३६० ॥
पूजादर्शनकार्येषु, क्लेशं कुर्वन्ति श्रावकाः ।
जलबिन्दुस्तवाऽस्माकं, देहे पतति संततम् ॥ ३६१ ॥
अतो दूरतया स्थेयं, पश्चात्पूजा विधीयताम् ।
इत्यादि बहुवाक्येन, तर्जिताश्च वयं सदा ॥ ३६२ ॥
जैनधर्मं परित्यज्य, अतो जाताश्च वैष्णवाः ।
एवं तेषां च वाक्यानि, श्रुत्वा सर्वे चमत्कृताः ॥ ३६३ ॥
गुरुणा तत्र सम्प्रोक्तं, व्याख्यानं सर्वहेतवे ।
आगन्तव्यं त्वया नित्यं, इत्येवं ज्ञापितं तदा ॥ ३६४ ॥
तद्बालांश्च समाहूय, धर्मसूत्रस्य पाठनम् ।
गुरुणा विहितं तत्र, आवश्यकादि शिक्षणम् ॥ ३६५ ॥
सामायिकादिकर्त्तव्ये, विधिस्तेषां च शिक्षिता ।
पूजाविधानकार्यं च, तैरेव पठितं सदा ॥ ३६६ ॥
साधूनां गोचरी कार्यं, तद्गृहे गमनं सदा ।
स्त्रीणां सामायिकाद्यं च, पण्डितेनैव शिक्षितम् ॥ ३६७ ॥
धर्मध्यानादिकार्येषु, सञ्जाताः कुशलाः समे ।
पुनस्तेषु च जैनत्वं, गुरुणा च समानीतम् ॥ ३६८ ॥

स्वतंत्र स्वामिवात्सल्यं, प्रतिवत्सरके सदा ।
युष्माभिः क्रियतां सर्वं, तदर्थं देशना खलु ॥ ३६९ ॥
दृढा धर्मे च सञ्जाताः, मञ्जिष्ठारागसादृशाः ।
विंशतिश्च गृहाणां वै, उद्धारो गुरुणा कृतः ॥ ३७० ॥
षष्टिर्गृहाणि जातानि, मन्दिरपूजकानि च ।
कुसंपस्तत्र सर्वत्र, निष्कासितश्च सर्वथा ॥ ३७१ ॥
चातुर्मासे च सर्वत्र, प्लेगरोगः प्रजायते ।
मूषकानां मृतिस्तत्र, बहुला परिजन्यते ॥ ३७२ ॥
अमरेल्याश्च मध्येषु, मृत्युः केषां न जायते ? ।
अन्यत्रैव मनुष्याणां, सर्वथा क्षयता भवेत् ॥ ३७३ ॥
तद्ग्रामवासिभिः सर्वैः, मानसे च विचिन्तितम् ।
गुरुदेवप्रसादेन, सुखशान्तिः प्रवर्तते ॥ ३७४ ॥
यावत्कालीनपर्यन्तं, गुरोः स्थितिः प्रवर्तते ।
तावत्कालीनपर्यन्तं, रोगो नायाति सर्वथा ॥ ३७५ ॥
प्रार्थना गुरुदेवानां, सर्वैः सम्मील्य तन्यताम् ।
विहारो नैव कर्त्तव्यः, अस्माकं सुखहेतवे ॥ ३७६ ॥
हिन्दुमुस्लीमकैः सर्वै–रागत्य गुरुसन्निधौ ।
कृपया विहतिर्नाम, कदापि नैव गृह्यताम् ॥ ३७७ ॥
प्रजाशान्त्यैव युष्माकं, शान्तिर्भवति सर्वथा ।
मानसे समभावश्चेत्तदा चात्रैव स्थीयताम् ॥ ३७८ ॥

सर्वजनाग्रहेणैव, मासिकी स्थिरता कृता ।
विहृतिश्च ततः पश्चाद्, गुरुणा प्रविधीयते ॥ ३७९ ॥
विहृत्य ग्रामतो दूरे, द्विकोशे च समागताः ।
प्लेगस्य तत्र प्राचुर्यममरेल्यां प्रवर्त्तते ॥ ३८० ॥
प्रतिदिनं च पंचाशन्मनुष्याणां विनाशता ।
ततश्च शतपर्यन्तं, म्रियंते प्लेगरोगतः ॥ ३८१ ॥
प्रजाजनेन निर्णीतं, गुरुदेवनिवासतः ।
नायातो रोग तत्काले, तत्र तत्पुण्यकारणम् ॥ ३८२ ॥
जैनसाधुसमा नैव, साधश्चात्र भारते ।
पवित्राचारसम्पन्ना, विद्वांसः प्रखराः खलु ॥ ३८३ ॥
विहारेण गताः सर्वे, साधवो जीर्णदुर्गके ।
रैवताचलयात्रार्थे, भावना प्रबला तदा ॥ ३८४ ॥
धर्मशालासु साधुनां, स्थिरता धर्मयोगतः ।
मन्दिरदर्शनार्थं च, सङ्घेन सह चागता ॥ ३८५ ॥
चैत्यवन्दनभावेन, कृतं च सर्वसाधुभिः ।
दृष्ट्वा च व्यवस्थां तत्र, सूचना च कृता तदा । ३८६ ॥
रैवताचलयात्रायै, सायं काले गताः समे ।
तलहट्यां च संसुप्ताः, पर्वताऽऽरोहणं ततः ॥ ३८७ ॥
मोक्षसोपानरूपा च, समवसरणात्मिका ।
शिवमन्दिरनिःश्रेणी-रारुह्यते च पर्वतम् ॥ ३८८ ॥

वीतरागश्च सर्वज्ञः, जगन्नाथो जगत्प्रभुः ।
त्रैलोक्यजनवन्द्यश्च, जगत्कल्याणकारकः ॥ ३८९ ॥

भगवन्नेमिनाथश्च, यदुकुलशिरोमणिः ।
वन्द्यते सर्वसाध्वाद्यैः, पूज्यते च पुनः पुनः ॥ ३९० ॥

कुत्रापि दर्शनं नोऽभूदस्माकं सर्वथा प्रभो ! ।
धन्योऽयं दिवसो ज्ञेयः, यत्र त्वदीयदर्शनम् ॥ ३९१ ॥

निर्भागिदुष्टजीवानां, त्वद्दर्शनं न जायते ।
दृष्टिमात्रेण युष्माकमस्मत्पापं, विनश्यति ॥ ३९२ ॥

पुण्यभूमिरियं ज्ञेया, जिनपादपवित्रिता ।
अनन्तभवभ्रान्तिश्च, त्वद्दर्शनेन नंक्ष्यति ॥ ३९३ ॥

धन्योऽहं कृतकृत्योऽहं, त्वदीयदर्शनेन वै ।
भवे भवे त्वदीयं च, दर्शनं प्रार्थये प्रभो ! ॥ ३९४ ॥

त्वद्ध्यानं च विना नैव, कल्याणं कस्यचिद्भवेत् ।
मात्सर्यं त्वयि येषां वै, मूका भवन्तु ते सदा ॥ ३९५ ॥

इत्यादिभावनां कृत्वा, दर्शनं च विधीयते ।
चैत्यवन्दनभावेन, विशुद्धध्यानपूर्वकम् ॥ ३९६ ॥

अनेकमन्दिराणां च, निर्जरा कर्मणां यतः ।
ततश्च दर्शनं शुद्धं, विधीयते पुनः पुनः ॥ ३९७ ॥

वस्तुपालादिभव्यानां, मन्दिरं च मनोहरम् ।
अनेककोटिद्रव्येन, निर्माणं तस्य सम्भवेत् ॥ ३९८ ॥

ते एव संसृतौ धन्याः, ते एत पुरुपा मताः ।
सम्पत्तिस्तादृशे कार्ये, येपां च जायते सदा ॥ ३९९ ॥
रथनेमेश्च गहवर्यां, दर्शनं च कृतं तदा ।
सहस्राम्रवने गत्वा, प्रभूणां दर्शनं तथा ॥ ४०० ॥
शान्तिनिकेतनं तच्च, आत्मशान्तिर्यतो भवेत् ।
कषायशमनं यत्र, तदेव शान्तिकेतनम् ॥ ४०१ ॥
यत्र रागसमुत्पत्तिः, द्वेपोद्भवश्च सर्वथा ।
मोहनिकेतनं तत्र, मूढेन परिकल्पितम् ॥ ४०२ ॥
शुष्कवेदान्तवार्त्ता च, सत्यं ब्रह्मस्वरूपिका ।
यत्र विधीयते सा वै, तत्र नाचारशुद्धिता ॥ ४०३ ॥
भक्ष्याभक्ष्यविवेको न, न तच्छान्तिनिकेतनम् ।
सर्वं मिथ्येति सम्प्रोच्य, भक्ष्याभक्ष्यं च भुज्यते ॥ ४०४ ॥
इत्यादि भावना तत्र, गुरुदेवैः पुनः पुनः ।
कृत्वा चात्मसुशान्त्यर्थ-मन्यत्र गम्यते ततः ॥ ४०५ ॥
गोमुखी जाह्नवी स्थानं, मिथ्यात्विना च कल्पितम् ।
वस्तुगत्या जिनेन्द्राणां, पादुकास्थानकं शुभम् ॥ ४०६ ॥
वरदत्तादिशिष्याणां, भगवत्पादसेवितम् ।
तेपां निर्वाणस्थानत्वात्तत्पादुकाश्च तत्र वै ॥ ४०७ ॥
वरशब्दं च निष्कास्य, त्रयश्च योज्यते ततः ।
दत्तात्रयगुरोः पादाः, मूढेन परिकल्पिताः ॥ ४०८ ॥

तेषामागमनं नैव, युज्यते हि कदाचन ।
गणधरागतिश्चैव, प्रभुणा सह युज्यते ॥ ४०९ ॥
वरदत्तगुरूणां च, पादुकास्तत्र कारिता ।
तत्स्थानं युज्यते तत्र, सर्वथा युक्तियुक्ततः ॥ ४१० ॥
नेमिनाथप्रभूणां च, शासनाऽधीशरूपिका ।
देवी श्री चाम्बिका तत्र, युज्यते सर्वथा खलु ॥ ४११ ॥
अत्र मिथ्यात्विदेवीनां, सम्भवो नैव जायते ।
सङ्घेन स्थापिता देवी, शुद्धसम्यक्त्वधारिका ॥ ४१२ ॥
सम्पूर्णपर्वते सर्वस्थानेषु जिनपादुका ।
पवित्ररूपकं मत्वा, श्रीसङ्घेन विनिर्मिता ॥ ४१३ ॥
सर्वस्थानेषु गत्वैव, दर्शनं च कृतं शुभम् ।
ततोऽधस्तात्समागत्य, तलहट्यां गताः समे ॥ ४१४ ॥
द्वितीयदिवसे चैव, शालायां गतवान् गुरुः ।
नायकविजयस्यैव, चक्षुषि बहुवेदना ॥ ४१५ ॥
डाक्टरस्यैव चाह्वानं, कारितं श्रावकैस्तदा ।
नायातो दर्पयोगेन, साधुरानीयतामिति ॥ ४१६ ॥
जल्पितं तेन तत्काले, ढुंढकत्वप्रदोषतः ।
साधूनां प्रेषणं तत्र, गुरुदेवेन कारितम् ॥ ४१७ ॥
साधूनामागतिं दृष्ट्वा, लज्जातश्च समागतः ।
साधुं संवीक्ष्य सम्प्रोक्तं, रोगशान्तिश्च नो भवेत् ॥४१८॥

मुक्ताबिन्दुसमुत्तारो, जायते न कदाचन ।
तत्रैव शटितो ज्ञेयः, उपायो नैव विद्यते ॥ ४१९ ॥
ततोऽनु गुरुणा सार्धं, वार्त्तालापश्च जायते ।
सत्रज्ञानं रूणाश्च, दृष्ट्वा चमत्कृतः किल ॥ ४२० ॥
सन्तुष्टो गुरुसंगेन, कथितं तेन तत्क्षणे ।
मम शंकानिरासाय, निष्कास्यतां क्षणः खलु ॥ ४२१ ॥
मङ्गलविजयायैव, कथितं गुरुणा तदा ।
अस्य शङ्कानिरासाय, प्रयत्नः क्रियतां त्वया ॥ ४२२ ॥
प्रज्ञापनादिसूत्राणा–मङ्गानां हि तथैव च ।
शङ्कानिरासकार्यं त्त, तत्समीपे कृतं मुहुः ॥ ४२३ ॥
निरस्तशंकनं स्वान्ते, कृत्वा प्रमुदितस्तदा ।
गुरुपार्श्वे स्थितिस्तस्य, प्रचुरसमयात्मिका ॥ ४२४ ॥
चारित्रभक्तकास्तत्र, वर्तन्ते बहवो जनाः ।
व्याख्यानं गुरुदेवाना–मतोऽपि नैव जायते ॥ ४२५ ॥
श्रावकार्यैव सम्प्रोक्तं, प्रबन्धः कार्यतां खलु ।
सार्वजनीनिकाव्याख्या, यतोऽत्र प्रविधीयते ॥ ४२६ ॥
तेषां हि चाशयं ज्ञात्वा, साधुना परिशोचितम् ।
तेषां विश्वासता नैव, कर्त्तव्या चात्र कार्यके ॥ ४२७ ॥
नृसिंहडाक्टरेणैव, ठाकरसी महाशयैः ।
रेण्डोलमीलनायैव, डाह्यालालेन सर्वथा ॥ ४२८ ॥

प्रबन्धः कारितो ज्ञेयः, तस्यैव तत्रमीलनम् ।
सञ्जातं सुखपूर्वेण, प्रसंगेनैव ज्ञापितम् ॥ ४२९ ॥
व्याख्यानाय प्रबन्धश्च, विहितस्तेन तत्क्षणे ।
हाईस्कूलादिके स्थाने, निष्कासितं निमन्त्रणम् ॥ ४३० ॥
सर्वप्रजागणास्तत्र, व्याख्यानश्रुतिहेतवे ।
आगता भावपूर्वेण, शृण्वन्ति देशनां तदा ॥ ४३१ ॥
संश्रुत्य जैनधर्मस्य, श्लाघां कुर्वन्ति तत्क्षणे ।
व्याख्यानसप्तकस्यैव, कृता तत्रैव प्रार्थना ॥ ४३२ ॥
सर्वत्र गुरुसंलापः, सम्यग्ज्ञानस्वरूपकः ।
सर्वेषां हृदि संजातः, दर्शनं तैः प्रशस्यते ॥ ४३३ ॥
दृश्यतां यत्र कुत्रापि, गत्वा तत्रैव सर्वथा ।
गुरुव्याख्यानकार्यस्य, जल्पः सर्वत्र जायते ॥ ४३४ ॥
नागरस्याश्रमे चापि, व्याख्यानत्रितयं मतम् ।
चारित्रस्यैव भक्तानामभिमानं गतं तदा ॥ ४३५ ॥
अयं साधुशिरोरत्नं, नृसिंहेनैव जल्पितम् ।
स्वाधीनं च जगद् यस्य, त्वदग्रे मादृशाः किमु ! ॥ ४३६ ॥
व्याख्यानादि कार्येषु, बहुश्रमस्य हेतुतः ।
ज्वररोगसमुत्पत्तिः, जायते तत्र दुःसहा ॥ ४३७ ॥
नृसिंहडाक्टरस्तस्य, सर्वथा भक्तिकारकः ।
त्रिः कृत्वा गुरुदेवस्य, पार्श्वे चायाति नित्यशः ॥ ४३८ ॥

उपायशुद्धभावेन, प्रतिदिनं करोत्यसौ ।
प्रातःकाले द्विघण्टायां, धर्मशालासु सर्वदा ॥ ४३९ ॥
यावन्तो यात्रिकाः सन्ति, तावत्तेषां च सेवनम् ।
प्रतिज्ञा च कृता तेन, मङ्गलगुरुसाम्मुखे ॥ ४४० ॥
पथ्यादिसर्ववस्तूनां, तद्गृहे सोपयोगिता ।
औषधं च समानीय, स्वेनैव दीयते तदा ॥ ४४१ ॥
स्वल्पकालेन तेनापि, रोगशान्तिर्विधापिता ।
गुरुविहारकार्यं, तत्सम्प्रोक्तं सर्वसन्निधौ ॥ ४४२ ॥
प्रातःकाले समुत्थाय, त्रिघण्टारात्रिके तदा ।
गुरुपार्श्वे समागत्य, कृता च धर्मवार्त्तिका ॥ ४४३ ॥
प्रसङ्गेन समानीतं, मूर्त्तिपूजाविधापनम् ।
वार्त्ता च गुरुदेवानां, श्रुत्वाऽनुमोदना कृता ॥ ४४४ ॥
मूर्त्तिपूजां विना नैव, जैनप्राचीनता खलु ।
सिध्यति नैव कुत्रापि, प्रमाणस्य वियोगतः ॥ ४४५ ॥
शिलालेखनकार्यं च, तीर्थादिपुण्यभूमिका ।
प्रभुपूजनसामग्री, प्राच्यतासाधिका दृढा ॥ ४४६ ॥
सर्वाऽपि मूर्त्तिपूजां च, साधयति निरन्तरम् ।
सामग्री सैव सम्पूर्णा, पूजकानां करे गता ॥ ४४७ ॥
हस्तलिखितसिद्धान्तं, तत्सर्वं मूर्त्तिरूपकम् ।
न्यवस्ते मुक्तरूं तद्, गृहीत्वा परिश्रम्यताम् ॥ ४४८ ॥

तेनैव जैनधर्मस्य, प्राचीनता न सिध्यति ।
ढुण्ढकसाधुवेषोऽपि, न प्राचीनत्वसाधकः ॥ ४४९ ॥

साधुवेषश्च युष्माकं, सर्वथा सूत्रसम्मतः ।
दृश्यते नैव कुत्रापि, कया रीत्या च साध्यते ? ॥ ४५० ॥

महिषपुच्छसंकाशं, त्वत्साधूनां रजोहरम् ।
घोटकधान्यभोक्तव्य—काले मुखे नियोजनम् ॥ ४५१ ॥

तत्सदृशी च वस्त्रस्य, मुखे बन्धनता भवेत् ।
दैत्यसदृशवेषत्वं, सूत्रेषु नैव दृश्यते ॥ ४५२ ॥

धारितः केन योगेन, इति मया विचार्यते ।
विना मूर्त्तेश्च मन्तव्ये, वद सिध्यति किं कदा ? ॥ ४५३ ॥

नृसिंहेन तदा प्रोक्तं, मन्तव्यं मूर्त्तिपूजनम् ।
मयाप्याज्ञानदोषेण, मानितं नैव किञ्चन ॥ ४५४ ॥

तीर्थयात्रां करिष्यामि, इत्येवं कथितं तदा ।
विहारे खलु कर्त्तव्ये, काले च गुरवो नीता ॥ ४५५ ॥

स्वगृहे भक्तिभावेन, दत्ता शुभा च गोचरी ।
मङ्गलश्रुतिकालेषु, प्रभावना कृता तदा ॥ ४५६ ॥

सर्वजनस्य सामीप्ये, क्रोधस्य नियमः कृतः ।
द्विक्रोशदूरपर्यन्तं, गतश्च गुरुणा सह ॥ ४५७ ॥

अश्रुनिपातनं कृत्वा, कष्टतश्च ततो गतः ।
मालीआग्राममध्ये च, गत्वा तत्रोपदेशनम् ॥ ४५८ ॥

उपाश्रये च कर्त्तव्ये, दत्त्वा ततोऽपि निर्गतः ।
वनस्थल्यादि सद्ग्रामे, यात्रापि गुरुणा कृता ॥ ४५९ ॥
वेरावले च गन्तव्ये, गुरुणां सम्मुखे समे ।
आगताः श्रावकास्तत्र, श्राविका वृन्दसंयुताः ॥ ४६० ॥
ग्रामे गत्वा च मांगल्यं, श्रावितं गुरुणा तदा ।
शुद्धाचारं च संज्ञाप्य, क्रियाकाण्डेषु योजिता ॥ ४६१ ॥
ज्ञानस्योद्यापनं कार्यं, दामोदरादिनिर्णीतम् ।
नन्दकोराख्यया चैव, श्राध्द्या च कारितं शुभम् ॥४६२॥
गीतगानस्य कर्त्तव्ये, मण्डली च समागता ।
अतीवाऽऽनन्दपूर्वेण, महोत्सवः समापितः ॥ ४६३ ॥
पुस्तकानां प्रकाशाय, उपदेशः कृतस्तदा ।
मानितः सर्वभव्येन, जीर्णोद्धाराय सम्मतः ॥ ४६४ ॥
ततो विहृत्य प्राभासे, गुरवश्च गताः किल ।
लालबागाख्यस्थानेषु, उत्तरिताश्च योगतः ॥ ४६५ ॥
व्याख्यानं गुरुदेवानां, सर्वदा परिजायते ।
व्रतनियमकर्त्तव्ये, उपदेशः कृतस्तथा ॥ ४६६ ॥
सिद्धचक्रस्य माहात्म्यस्याराधना दिनेषु च ।
आचाम्लादि तपः कृत्यं, कर्त्तव्यमत्र पत्तने ॥ ४६७ ॥
जयन्ती वीरदेवानां, कर्त्तव्या सर्वसाक्षिका ।
प्रजाग्रंगस्य तद्ग्रामे, प्रयत्नोऽपि विधाप्यताम् ॥ ४६८ ॥

रामाऽनुजस्य तत्रैव, आचार्यस्तु समागतः ।
अनन्ताचार्य तन्नाम, प्रतिवादिभयङ्करः ॥ ४६९ ॥
हस्त्यश्वादिकसामग्री, संयुतास्तत्र चागताः ।
गुरुदेवस्य मित्रत्वं, तस्मिन्तिष्ठति सर्वदा ॥ ४७० ॥
स्वकीयपुरुषं प्रेष्य, गुरूणां प्रतिज्ञापितम् ।
आवयोर्मीलनं कुत्र, निश्चयतो विधीयताम् ॥ ४७१ ॥
संगमे मीलनं श्रेष्ठं, द्वाभ्यामित्येव निश्चितम् ।
गत्वा स्थण्डिलमार्गेण, मीलितौ तत्र तौ तदा ॥४७२॥
गुरुं प्रति च सम्प्रोक्तं, साधुता त्वयि विद्यते ।
अस्माकं भोगबाहुल्यं, साधुत्वं नाममात्रतः ॥ ४७३ ॥
परिग्रहस्य सद्भावे, साधुता विद्यते कथम् ? ।
अतो मयि न साधुत्वं, सर्वथा परितिष्ठति ॥ ४७४ ॥
यस्य स्याद्वादसिद्धान्तः, सर्वेषां शान्तिकारकः ।
विभिन्नदृष्टिरूपेण, सर्वेषां प्रेमपोषकः ॥ ४७५ ॥
वज्रमये च तद्दुर्गे, मायागोलकवेशनम् ।
जायते नैव कुत्रापि, इति मया विनिश्चितम् ॥ ४७६ ॥
प्रासङ्गिकी च तद्वार्त्ता, कृता विशुद्धयोगतः ।
जयन्तीं निकटे ज्ञात्वा, आमन्त्रणं कृतं तदा ॥ ४७७ ॥
मया विहारकर्त्तव्ये, ज्ञापिते सर्वसन्निधौ ।
विहारस्यैव सामग्री, भृत्यैश्च कारिता खलु ॥ ४७८ ॥

केचिद्गतास्ततोऽन्यत्र, केचित्तिष्ठन्ति सम्मुखे ।
उच्यतां किमु कर्त्तव्यं, त्वदाज्ञा पाल्यते पुनः ॥ ४७९ ॥

जयन्ती जगदीशानां, कृत्वा सुखेन गम्यताम् ।
अतो मयाऽपि गन्तव्यं, कार्यसिद्धिर्विधीयताम् ॥ ४८० ॥

मानितं गुरुदेवानां, वचनं तेन तत्क्षणे ।
आगतिर्वीरदेवानां, जयन्त्यर्थं च सम्मता ॥ ४८१ ॥

आडम्बरेण समायातः, वीरजन्मोत्सवे तदा ।
रामाऽनुजा जनाः सर्वे, ततः पश्चात्समागताः ॥ ४८२ ॥

हिन्दुसामाजिकाः सर्वे, व्याख्यानायैव चागताः ।
मुस्लीमाश्च समायाताः, देशनाश्रुतिहेतवे ॥ ४८३ ॥

सर्वेषां भाषणं जातं, अनन्ताचार्यकस्य वै ।
ततोऽनु भाषणं चैव, सञ्जातं शुभरूपकम् ॥ ४८४ ॥

वीरदेवं नमस्कृत्य, वीरजीवनतत्त्वकम् ।
उद्धृत्य जैनधर्माश्च, भाषितं शुद्धवोपतः ॥ ४८५ ॥

वास्तविकं च वैराग्यं, जैनदर्शनसाधुषु ।
विद्यते तादृशं नैव, धर्मान्तरे कदाचन ॥ ४८६ ॥

शुद्धसाधुत्वसद्भावः, पूर्णयमलमन्वितः ।
समितिगुप्तिधर्मादि, संवरेणैव पूरितः ॥ ४८७ ॥

पादचारि विहारित्वं, भैक्ष्यभोजनसंयुतम् ।
सामायिकस्वरूपत्वं, नान्यत्र परिदृश्यते ॥ ४८८ ॥

शुद्धं च संयमं यत्र, भावनया समन्वितम् ।
साधुगृहस्थधर्माणां, व्यवस्था यत्र सुन्दरा ॥ ४८९ ॥

सङ्घसंस्थापना शुद्धा, धर्मान्तरे न विद्यते ।
आत्मकल्याणमार्गत्वं, वीरधर्मे दृढं मतम् ॥ ४९० ॥

वीतरागत्वसद्भाव–सूचिका प्रतिमा मता ।
अन्यत्र रागसद्भावसूचिका परिदृश्यते ॥ ॥ ४९१ ॥

स्याद्वादशुद्धसिद्धान्तः लोकोपकारकः सदा ।
अपूर्वो वीरदेवेन, दर्शितो जैनशासने ॥ ४९२ ॥

प्रमाणनयचक्रे द्वे, जैनधर्मरथस्य वै ।
तत्त्वसप्तकदर्शित्वं, वीरतोऽन्यत्र नो भवेत् ॥ ४९३ ॥

संसारमुक्तिवस्तूनां साधकबाधकत्वतः ।
आश्रवबन्धसंचारनिर्जराः प्रतिपादिताः ॥ ४९४ ॥

शुद्धत्यागोदयोऽस्माकं, यदि मीलति चेत्तदा ।
वीरदेवस्य त्यागत्वमन्यत्स्वप्नेऽपि नो भवेत् ॥ ४९५ ॥

यदि च भोगबाहुल्यं मीलति संसृतौ तदा ।
गोस्वामिनां च भोगत्वं, गुरुत्वेन समायुतम् ॥ ४९६ ॥

गुरुश्च कथ्यते लोकैः, भोगस्तु परिभुज्यते ।
स्त्र्यादिकं सर्ववस्तुत्वं, समर्प्यते जनैः खलु ॥ ४९७ ॥

संसारवृद्धिहेतुत्वमतो मह्यं न युज्यते ।
हास्यरूपेण तत्प्रोक्तं, वस्तुगत्या न मन्यताम् ॥ ४९८ ॥

स्त्रीयोनिर्मील्यते तर्हि, आंगलस्त्रीषु मील्यताम् ।
अन्या न रोचतेऽस्माक-मित्येवं कथितं तदा ॥ ४९९ ॥
मोक्षप्राप्त्यै च विज्ञेयः, वीरधर्मश्च सर्वथा ।
मोक्षार्थं यस्य सद्भावः, समाश्रयतु तं सदा ॥ ५०० ॥
इत्येवं सारभूतं च, व्याख्यानं कथितं तदा ।
तदनुमन्दिरे गत्वा, दर्शनं विहितं शुभम् ॥ ५०१ ॥
जैनानां मन्दिरे नैव, गतास्तेऽपि महाशयाः ।
अद्यैव दर्शनं प्राप्य, स्वान्ते ते हर्षिताः खलु ॥ ५०२ ॥
सर्वेषां धन्यवादं च, दत्त्वा ततश्च निर्गताः ।
स्वामिवात्सल्यकं तत्र, कृतं च श्रावकैस्तदा ॥ ५०३ ॥
रथयात्रा महोत्साहपूर्वेण भ्राम्यते किल ।
भ्रान्त्वा च नगरे तस्मात्स्वस्थाने च समागता ॥ ४०४ ॥
चन्द्रप्रभोश्च सत्तीर्थं, प्राचीनकालयोगतः ।
पुरातनं तु विज्ञेयं, विशुद्धध्यानरूपकम् ॥ ५०५ ॥
चन्द्रप्रभासनामाख्यं, पत्तनं पूर्वकालिके ।
देवपत्तनसन्नाम, ततोऽनुपरिज्ञायते ॥ ५०६ ॥
प्रभासपत्तनं चाद्यमभिधानं च वर्त्तते ।
अष्टमन्दिरपङ्क्तिश्च, विद्यते चाधुना खलु ॥ ५०७ ॥
माङ्गरोलाभिधाने च, ततोऽनु गुरवो गताः ।
इन्द्रचन्द्रादिश्राद्धेन, भक्तिभावः प्रदर्शितः ॥ ५०८ ॥

चारित्रस्यैव साम्राज्यं, प्राक्काले प्रबलं मतम् ।
हीरजीभ्रातृवर्येण, त्रोटितं पुण्ययोगतः ॥ ५०९ ॥

व्याख्यानं गुरुदेवानां, स्कूलादौ च यदा भवेत् ।
विशुद्धजैनधर्मस्य, पोषकं पापनाशकम् ॥ ५१० ॥

मनोमोहनदेवस्य, पार्श्वप्रभोश्च दर्शनम् ।
पुष्पादिसर्वसामग्री युता पूजा च यादृशी ॥ ५११ ॥

जायतेऽप्यत्र ग्रामे च नान्यत्र तादृशी भवेत् ।
मूर्त्तिर्मनोहरा तत्र, जगन्नाथस्य शोभते ॥ ५१२ ॥

प्रागजीनेमिचन्द्राख्यौ, अभूतां भ्रातरौ तदा ।
गृहस्य वास्तुकार्याय, विहितं धर्मध्यानकम् ॥ ५१३ ॥

पूजानैकविधा ताभ्यां, कारिता शुभभावतः ।
वलेजातीर्थयात्रार्थं, सङ्घो निष्कासितस्तथा ॥ ५१४ ॥

पञ्चशती मनुष्याणां, समुदायस्तु विद्यते ।
पञ्चदशैव साधूनां, परिवारो निगद्यते ॥ ५१५ ॥

तत्तीर्थमार्गमध्ये च, सौराष्ट्रिकनरेण वै ।
कचरानामधेयेन, संघस्तु भोजितस्तदा ॥ ५१६ ॥

वलेजातीर्थयात्राऽपि, गत्वा कृता च भावतः ।
पूजाभक्तिविधानादिस्वामिवात्सल्यकं कृतम् ॥५१७॥

पोरबन्दरनामाख्ये, ग्रामे गन्तुं प्रवर्तितम् ।
तारस्ततः समायातः, तत्र गतिनिषेधकः ॥ ५१८ ॥

प्लेगरोगसमुत्पत्तिः, प्रचुरा चात्र वर्तते।
नागन्तव्यं ततोहेतोः, इत्येवं तत्र ज्ञापितम् ॥ ५१९ ॥
असत्यतारताख्यातिः, सङ्केन बोधिता तदा।
साधुचतुष्टयी तत्र, प्रेषिता गुरुणा खलु ॥ ५२० ॥
गत्वा च साधुभिस्तत्र, उपाश्रये स्थितिः कृता।
संक्षोभो मानसे जातः, श्रावकानां च तत्क्षणे ॥ ५२१ ॥
असत्यतारसम्भ्रान्तिः, तद्धृदि शल्यतां भजेत्।
तत्रत्यग्राममुख्यानां, मीलनं च कृतं तदा ॥ ५२२ ॥
ऑत्रायनस्तु तत्रैव, राज्यकार्यविधायकः।
तत्समीपे च गत्वैव, वार्तालापश्च कारितः ॥ ५२३ ॥
विदेशीविज्ञसम्बन्धात्सञ्जाता मित्रता ततः।
व्याख्यानस्यैव दानाय, प्रार्थना च कृता तदा ॥ ५२४ ॥
व्याख्यानाधिपता तस्य, संजाता सर्वसंनिधौ।
पोरबन्दरमध्ये च, जाता सुन्दरघोषणा ॥ ५२५ ॥
साधुभिः पण्डितैर्विज्ञैरस्मद्ग्रामं पवित्रितम्।
व्याख्यानस्यैव सौन्दर्यं, किमु मया निगद्यते? ॥ ५२६ ॥
विजयधर्मसूरीणां, शिष्या विज्ञतमाः खलु।
प्रौढपाण्डित्यसंयुक्ताः, चारित्रे नैव तादृशम् ॥ ५२७ ॥
आचारहीनता प्राक् च, प्रमादवशकार्यतः।
काचिच्च विज्ञता प्राक् स्यात्साऽपि नष्टा प्रमादतः ॥ ५२८ ॥

इत्येवं जनतः श्रुत्वा, तदा च निर्गतास्ततः ।
गोंडले च समागत्य, गुरुणा सह मीलिताः ॥ ५२९ ॥
वलेजातो गुरूणां च, विहारः परिजायते ।
वाट्वाग्राममध्ये च, गत्वा दत्ता च देशना ॥ ५३० ॥
मेम्मणाश्च समायाताः, व्याख्यानश्रुतिहेतवे ।
द्विसहस्रं च संख्याकाः, ज्ञायन्तां यवनास्तदा ॥ ५३१ ॥
अहिंसा-सत्यतायाश्च, व्याख्यानं च कृतं महत् ।
अनेकैर्यवनैस्तत्र, त्याजितं मांसभक्षणम् ॥ ५३२ ॥
धोराजीग्राममध्ये च, आगता गुरवस्ततः ।
देवदर्शनकार्यं च, कृतं सम्पूर्णयोगतः ॥ ५३३ ॥
जैनेतराः समागत्य, प्रार्थना गुरुसन्निधौ ।
व्याख्यानाय कृता तत्र, स्वीकृता गुरुणा तदा ॥ ५३४ ॥
चातुर्मासाय जैनैश्च, विज्ञप्तिर्बहुला कृता ।
राजदुर्गस्य वास्तव्याः, श्राद्धास्तत्र समागताः ॥ ५३५ ॥
चातुर्मासाय तेषां वै, विज्ञप्तिर्बहुभावतः ।
सर्वथा च ततो योग्यं, राजदुर्गे च स्वीकृतम् ॥ ५३६ ॥
सार्वजनीनकं तत्र, व्याख्यानं च चतुष्टयम् ।
दत्त्वा च गुरुणा, तस्माद्गोंडले हि समागताः ॥ ५३७ ॥
तत्रत्या लुम्पकाः सर्वे, शङ्कितमानसाः खलु ।
उत्तरणाय तत्स्थानं, न दत्तं द्वेषभावतः ॥ ५३८ ॥

१ राजकोट ।

पट्टिगृहाणि जैनानां, मूर्त्तिपूजाविधायिनाम् ।
चतुःशती निषेद्धानां, लुम्पकानां च तत्क्षणे ॥ ५३९ ॥

स्वीयबाहुल्ययोगेन, उन्मत्तता समागता ।
गुरुदेवेण नो किञ्चिज्जल्पितं शान्तभावतः ॥ ५४० ॥

राज्ञा ज्ञाता च तद्वार्त्ता, दत्तं विशालहर्म्यकम् ।
व्याख्यानं तत्र संजातं, प्रतिदिनं सुयोगतः ॥ ५४१ ॥

आमंत्रणं कृतं तत्र, मीलनाय गुरोस्तदा ।
गत्वा च साधुभिः सार्धं, राजधर्मो निरूपितः ॥ ५४२ ॥

पितापुत्रत्वसम्बन्धः, राजप्रजासु सम्मतः ।
प्रजासुखेषु सौख्यं च, मन्यन्ते राजभिः सदा ॥ ५४३ ॥

प्रजा पुत्रसमा ज्ञेया, पुत्राणां सौख्यदानता ।
राजसु शोभते नित्यं, प्रजात्वं नान्यथा भवेत् ॥ ५४४ ॥

प्रजानां दुःखदायित्वं, शोभते न कदाचन ।
परस्त्रीदर्शनं नैव, युज्यते सुदृशां किल ॥ ५४५ ॥

प्रजानां धर्ममार्गेषु, विघ्नता नैव युज्यते ।
सर्वदा सुखपूर्वेण, धर्मध्यानविधानकम् ॥ ५४६ ॥

प्रजानां च यदा शान्तिः, राज्ञां तदा च जायते ।
मार्गानुसारिता तत्र, कथिता गुरुणा शुभा ॥ ५४७ ॥

गुरुवचनमाधुर्यं, पीत्वा तेनैव जल्पितम् ।
सार्वजनीनकर्त्तव्यं, व्याख्यानं मत्पुरे तथा ॥ ५४८ ॥

राजकुटुम्बकेनैव, आगमिष्यामि तत्क्षणे ।
अधिकारीयवर्गेण, नगरबाह्यस्थानके ॥ ५४९ ॥

व्याख्यानं योजितं तत्र, सर्वा प्रजा समागता ।
साधूनां देशनापूर्वं, सञ्जाता च गुरोस्ततः ॥ ५५० ॥

गुरूणां देशनां श्रुत्वा, सर्वैस्तदा च घोषितम् ।
भवादृशाश्च नो दृष्टाः साधवो जगतीतले ॥ ५५१ ॥

आचारेषु च काठिन्यं, विचारे सूक्ष्मता मता ।
प्रखरविज्ञता तेषु, नान्यत्र परिदृश्यते ॥ ५५२ ॥

व्याख्यानपञ्चकं तत्र, सञ्जातं गोंडले पुरे ।
क्रियाकाण्डेषु भक्तानां, योजनं च कृतं तदा ॥ ५५३ ॥

देवदर्शनकार्याय, पूजाविधानकाय च ।
उपदेशेन सम्प्रेर्य, विहृतिर्गुरुणा कृता ॥ ५५४ ॥

राजदुर्गस्थवास्तव्यैः, सज्जनैस्तत्र चागतम् ॥
जैनजैनेतराणां च, भेदभावो न दृश्यते ॥ ५५५ ॥

चातुर्मासं कृतं पूर्वं, मङ्गलविजयादिभिः ।
शुद्धधर्मस्य बोधेन, सर्वं ततो विनिर्गतम् ॥ ५५६ ॥

अनेके सज्जनास्तत्र, मीलनाय समागताः ।
अष्टवार्षिकपर्यन्ता, स्थितिः काश्यां मता खलु ॥ ५५७ ॥

स्थानकवासिनः श्राद्धाः, माणिक्यमुनिभक्तकाः ।
तेऽपि तत्र समागत्य, जिज्ञासां दर्शयन्ति च ॥ ५५८ ॥

जसाजीस्वामिनः श्राद्धा, द्वेषभावसमन्विताः ।
निन्दां कुर्वन्ति ते सर्वे, माणिक्यभक्तकादीनाम् ॥ ५५९ ॥
राजकुमारकॉलिजे, युवराजस्य सम्मुखे ।
व्याख्यानं गुरुदेवानां, प्रथमं परिज्ञायते ॥ ५६० ॥
अनेकयुवराजाश्च, शृण्वन्ति गुरुदेशनाम् ॥
सुधासमां च तन्मत्वा, धारयन्ति च मानसे ॥ ५६१ ॥
धार्मिकनैतिको बोधः, दत्तश्चानेकरूपतः ।
तश्च टौनहालेषु, ततः श्रीमालिस्थानके ॥ ५६२ ॥
विभिन्नस्थानके ज्ञेया, गुरूणां देशना तदा ।
सर्वप्रजाश्च तत्रस्थाः, ददति धन्यवादकम् ॥ ५६३ ॥
चातुर्मासं च निर्णाय, व्याख्यानं प्रविधीयते ।
दैवयोगेन तत्राऽपि, प्लेगरोगः समुद्भवः ॥ ५६४ ॥
म्रियन्ते मूषकास्तत्र, न मनुष्यमृतिस्तया ।
मूषकमृत्युतां ज्ञात्वा, आगताः सर्वश्रावकाः ॥ ५६५ ॥
गमिष्यन्ति च सर्वेऽपि, अन्यत्र श्रावकाः खलु ।
प्लेगस्य हेतुता तत्र, गुरुणा कथितं तदा ॥ ५६६ ॥
यदि श्रद्धा भवेच्छ्रावन्ते, तदा भद्रं भविष्यति ।
स्वल्पकालेन सर्वत्र, राजदुर्गे च ज्ञायताम् ॥ ५६७ ॥
तथापि हृदयं तेषां, कम्पते प्लेगनामतः ।
गम्यतां सुखपूर्वेण, गुरुणा कथितं तदा ॥ ५६८ ॥

ज्येष्ठकृष्णदशम्यां च, विहारो गुरुणा कृतः ।
आषाढशुक्लपक्षे च, नगरेषु समागताः ॥ ५६९ ॥
आनन्दः सर्वसङ्घेषु, सञ्जातो पूर्वरूपतः ।
सर्वसंघेन सम्मील्य, उत्सवो विहितस्तथा ॥ ५७० ॥
हरजीजैनशालासु, विस्तारो नैव विद्यते ।
ज्ञानशालासु तद्धेतोः, विश्रामो गुरुणा कृतः ॥ ५७१ ॥
तपोगच्छीयस्थानेषु, प्रत्यहं देशना शुभा ।
हंसराजमहाभागः, श्रद्धालुः श्रावकः खलु ॥ ५७२ ॥
मर्मज्ञश्च गुणज्ञश्च, मिथ्यात्वपरिवर्जितः ।
सर्वज्ञधर्मसम्पन्नः, द्वादशव्रतधारकः ॥ ५७३ ॥
तत्रत्यमन्दिराण्येव, स्वर्गखण्डसमानि च ।
अपूर्वरचना तत्र, विद्यते च मनोहरा ॥ ५७४ ॥
वर्धमानकशाहेन, लक्षशोधनयोगतः ।
मन्दिरं कारितं शुभ्रं, भव्यकल्याणकारणम् ॥ ५७५ ॥
रायचन्द्रस्य तादृक्षं, मन्दिरं तत्र विद्यते ।
वासुपूज्यप्रभूणां च, नेमिनाथस्य मन्दिरम् ॥ ५७६ ॥
ज्ञानशालासु चैकं स्या–त्तेषां हि चैत्यवन्दनाम् ।
कृत्वा स्वकीयस्थानेषु, आगता गुरवः खलु ॥ ५७७ ॥
महामहोत्सवेनैव, पञ्चमाङ्गस्य वाचनम् ।
भावनासमये चैव, समरादित्यजल्पनम् ॥ ५७८ ॥

सहस्रशो जनानां च, व्याख्याने गणना भवेत् ।
जैनाः सर्वे समायान्ति, देशनाश्रुतिहेतवे ॥ ५७९ ॥
ताराचन्द्रादिकास्तत्र, स्थानकवासिनः सदा ।
आगत्य प्रश्नचर्चां च, कुर्वन्ति बहुभावतः ॥ ५८० ॥
प्रथमदशशङ्कानामुत्तरं सुविवेकतः ।
व्याख्याप्रज्ञप्तिटीकायां, स्पष्टरूपेण भाषितम् ॥ ५८१ ॥
तथैवात्र विवेकेन, ज्ञापितं गुरुणा तदा ।
उपोद्घातं च संश्रुत्य, सञ्जाता मुक्तसंशयाः ॥ ५८२ ॥
अनेकप्रश्नजिज्ञासा, भावतस्तैन दर्शिता ।
सर्वेषामुत्तरं तेषां, भाषितं धर्मयोगतः ॥ ५८३ ॥
सार्वजनीनकल्याण-हेतुका देशना मता ।
अजराजस्य शालायां, सर्वजनस्य सम्मुखे ॥ ५८४ ॥
एकदा जामराजेन, रणजीताख्यकेन वै ।
शूनां मारणकार्याय, आज्ञा च नगरे कृता ॥ ५८५ ॥
दृष्टिपथं च यो याति, श्वा शीघ्रं हन्यतां खलु ।
इत्येवं सैनिकानां च, अनुज्ञा परिघोषिता ॥ ५८६ ॥
स्थण्डिले गच्छतां साधूनां दृष्टो मारितश्च श्वा ।
आगत्य गुरुदेवानां, साधुभिः प्रार्थना कृता ॥ ५८७ ॥
व्याख्यानादि परित्यज्य, सर्वसाधुजनेन वै ।
राजप्रासादके गत्वा, मन्त्रिजनस्य सम्मुखे ॥ ५८८ ॥

मीलनाय क्षणः प्रोक्तः, दत्तस्तेनैव तत्क्षणः ।
तत्समीपे समागत्य, राजधर्मो निवेदितः ॥ ५८९ ॥

पश्चात्प्रासङ्गिकं तत्र, श्वमारणस्य हेतुकम् ।
पृष्टं च गुरुणा तेन, कथितं पापयोगतः ॥ ५९० ॥

मदीयाज्ञा च तत्कार्ये, निष्फला नैव जायते ।
हिन्दुराजस्य राज्यत्वे, न योग्यं तन्निगद्यते ॥ ५९१ ॥

अहिंसा परमो धर्मः, महाभारतपुस्तके ।
मा हिंस्यात्सर्वभूतानि, इति वेदवचः शुभम् ॥ ५९२ ॥

अनादृत्यैव तच्छास्त्रं, स्वेच्छया जल्प्यते कथम् ? ।
उन्मत्तवाक्यवत्तत्र, जल्पनं नैव युज्यते ॥ ५९३ ॥

शूनां च मारणे शान्तिः, तत्र राजसु सम्भवेत् ।
इत्येवं यदि जल्प्येत, तदा मयाऽपि कथ्यते ॥ ५९४ ॥

पापिनो ये च राजानः, विद्यन्ते खलु भारते ।
तदा तेषां च किं कार्यं, ये प्रजादुःखदायकाः ॥ ५९५ ॥

तदा तेनैव सम्प्रोक्तं, तादृशकार्ययोगतः ।
नरकं गम्यतेऽस्माभिः, युष्माकं तत्र किं भवेत् ॥ ५९६ ॥

धर्मगुरोश्च सद्भावे, नरके गम्यते कथम् ? ।
उपदेशप्रभावेन, कार्यं किं किं न सिध्यति ? ॥ ५९७ ॥

निर्भीकत्वं गुरूणां च, दृष्ट्वा तेन विचारितम् ।
अयं साधुर्न सामान्यः, किन्तु साधुशिरोमणिः ॥ ५९८ ॥

काशिराजस्य सन्मान्यः, गुरुतुल्यो महामतिः ।
महाराणादिराजानां, सम्मान्यश्चैव सर्वथा ॥ ५९९ ॥

भवतां दर्शनेनैव, प्राप्ता कृतार्थता मया ।
अद्यप्रभृति शूनां च, मारणं न विधीयते ॥ ६०० ॥

क्षमा कार्या च सर्वेषामुपरि, गुरुणा सदा ।
गुरुदेवेन सम्प्रोक्तं, क्षमारूपाश्च साधवः ॥ ६०१ ॥

भवद्धिताय चात्रैव, आगत्य कथितं मया ।
अतो हि गम्यते तत्र, व्याख्यानकार्यहेतवे ॥ ६०२ ॥

श्रीसंघेनैव तच्छ्रुत्वा, हर्षायितं च तत्क्षणे ।
गुरुदेवप्रभावश्च, सर्वत्र परिजायते ॥ ६०३ ॥

ओसवालाश्च श्रीमालाः, द्विविधाः श्रावकास्तथा ।
वीशादशादिभेदेन, दृश्यते भिन्नरूपता ॥ ६०४ ॥

पशुशालाप्रबन्धश्च, कारितो देशनादितः ।
ब्रह्मचर्यादिग्रन्थानां, निर्माणं तत्र कारितम् ॥ ६०५ ॥

इन्फ्लुंजाज्वररोगाणां, प्राचुर्यं भारते तदा ।
नगरे च समुत्पत्तिः, संजाता बहुरूपतः ॥ ६०६ ॥

सेवासमितिकासभ्याः, नियुक्ताः सर्वसन्निधौ ।
गृहिनिकेतने गत्वा, भैषज्यं तैः विधीयते ॥ ६०७ ॥

अतीवश्रमपूर्वेण तेषां, सेवाविधापनम् ।
रोगिणां सर्वथा शान्तिः, तदा तैश्च समर्पिता ॥ ६०८ ॥

भोजनादिकसामग्री, यत्र यस्य न विद्यते ।
तत्र तस्य गृहे गत्वा, सैव शुद्धा वितीर्यते ॥ ६०९ ॥
एकदा तत्स्थवास्तव्यैः, पारितोषविधापने ।
सभानियोजनं कृत्वा, वितीर्णा पत्रिका खलु ॥ ६१० ॥
तत्रस्थधारसीपुत्रैः, पारितोषप्रदानके ।
पदकदानजिज्ञासा दर्शिता, सर्वसन्निधौ ॥ ६११ ॥
सुवर्णपदकादाने, कथितं सर्वसन्निधौ ।
तादृशं पदकं तैश्च, प्रदत्तं चैकरूपतः ॥ ६१२ ॥
सुवर्णकारात्संप्राप्ता, सत्यवार्त्ता च तत्क्षणे ।
सुवर्णपदकं चैव, शुद्धसुवर्णरूपकम् ॥ ६१३ ॥
सर्वत्र नगरे तेषां, प्रशंसा प्रकटीकृता ।
गुरुणा शोचितं तत्र, कर्मणा किं न जायते? ॥ ६१४ ॥
केषां च कथितं नैव, किन्तु ज्ञातं च मानसे ।
शुद्धदया च कर्त्तव्या, सर्वेषां गुरुणा सदा ॥ ६१५ ॥
चातुर्मासे च सम्पूर्णे, गोवर्धननिकेतने ।
भक्त्या च स्वीयस्थानेषु, आनीता गुरवस्तदा ॥ ६१६ ॥
स्थानकवासिनो ज्ञेया, गुरूणां शुद्धबोधतः ।
सर्वं कार्यं कृतं तैश्च, अनुमतं च सज्जनैः ॥ ६१७ ॥

---

१ पोपटलालधारशिभिः ।

धुंवावग्राममध्ये च, प्रभूणां दर्शनं कृतम् ।
पूजाप्रभावनाकृत्यं, स्वामिवात्सल्यरूपकम् ॥ ६१८ ॥

ततोऽनु ध्रोलसद्ग्रामे, स्थिता दिनचतुष्टयी ।
सुधारणं च धर्मस्य, अनेकरूपतः कृतम् ॥ ६१९ ॥

मीलनाय समायातः, नृपश्च गुरुसन्निधौ ।
माणिकचन्द्रसंयुक्तः, देशनाश्रुतिहेतवे ॥ ६२० ॥

सप्तव्यसनसेवायाः, निषेधो गुरुणा कृतः ।
त्यक्तं च कतिचित्तेन, शुद्धोपदेशलाभतः ॥ ६२१ ॥

लतीपुरे ततो गत्वा, मोरवीनगरे ततः ।
तत्स्थनागरभव्यैश्च, सन्मानं च कृतं बहु ॥ ६२२ ॥

कानजीसंघमुख्याश्च, संघवीपदधारकाः ।
भक्तिभावस्य बाहुल्यं, कारितं धर्मयोगतः ॥ ६२३ ॥

व्याख्यानं स्थानके नित्यं, साधुमार्गिसमाग्रहात् ।
सर्वे तत्र समायान्ति, व्याख्यानश्रुतिहेतवे ॥ ६२४ ॥

प्रभावनादिकृत्यं च, तत्राऽस्ति सर्वेषां खलु ।
प्रबन्धकार्यता शुद्धा, दर्शिता बहुभावतः ॥ ६२५ ॥

डाह्यालालाख्यदीवाश्च, गुरुदेवप्रभावतः ।
दधति भावमाध्यस्थ्यमन्येऽपि तादृशा जनाः ॥ ६२६ ॥

दुष्कालस्य प्रयोगेन, मानवा दुःखितास्तदा ।
बहुमूल्यं च धान्यं हि, तदानि परिजायते ॥ ६२७ ॥

स्वल्पमूल्येन धान्यानां, दानार्थं देशना कृता ।
पञ्चदशसहस्राणि, जायन्ते रूप्यकानि च ॥ ६२८ ॥

द्वितामद्रव्यतो धान्यं, शेतिका परिमाणकम् ।
दातव्यमिति सर्वेण, निश्चितं सर्वसन्निधौ ॥ ६२९ ॥

लज्जालुसद्गृहस्थानां, गृहे च परिप्रेपणम् ।
याञ्चां कर्त्तुमशक्तानां, तदपि निश्चितं तदा ॥ ६३० ॥

सूरीश्वरश्च सम्राडा,—ख्यपुस्तकस्य मुद्रणे ।
स्वीकृतिश्च कृता तत्र, डाह्यालालेन तत्क्षणे ॥ ६३१ ॥

अनेकानि च कार्याणि, कृत्वा रंगपुरादिषु ।
गत्वा च दर्शनं कार्यं, मन्दिरस्य विधीयते ॥ ६३२ ॥

सार्वजनीनसद्बोधः मोरव्यां सप्तवारतः ।
कृतश्च गुरुदेवेन, अन्यत्रापि तथैव च ॥ ६३३ ॥

ततः टङ्कारके मध्ये, स्थानग्रामे ततः परम् ।
सायलाग्रामवास्तव्याः, श्राद्धाः सर्वे समागताः ॥ ६३४ ॥

ततोऽपि देशनां दत्त्वा, सायलासु समागताः ।
राजप्रजासु सत्प्रेमभावनावर्धिता तदा ॥ ६३५ ॥

राज्ञा तत्र समागत्य, व्याख्यानश्रुतिहेतुका ।
प्रार्थना च कृता तत्र, स्वीकृतिर्गुरुणा कृता ॥ ६३६ ॥

कुटुम्बेन सयुक्तेन, राजा तत्र समागतः ।
सर्वप्रजा समायाताः, यथा राजा तथा प्रजा ॥ ६३७ ॥

धार्मिकभावनापूर्वं, राजवर्गेषु सम्मता।
असद्वायुप्रयोगेन, सर्वा सा प्रपलायिता ॥ ६३८ ॥
न्यायमार्गश्च सर्वत्र, सैमादेयः सुनिर्मलः।
अनीतिकारका नैव, रक्षितव्याः कदाचन ॥ ६३९ ॥
देवद्रव्यस्य नाशत्वं, बहुलं तत्र वीक्षितम्।
सदुपदेशदानेन, सर्वं तच्च सुरक्षितम् ॥ ६४० ॥
राणपुरे ततो गत्वा, विहितं प्रभुदर्शनम्।
चतुर्थादिव्रतानां च, प्रतिज्ञा कारिता जनैः ॥ ६४१ ॥
समहोत्सवता तस्माद्धेतो–स्तत्र प्रजायते।
व्याख्यानं भावपूर्वेण, नागरदाससञ्ज्ञिनैः ॥ ६४२ ॥
कारितं गुरुदेशनां, समायोगेन भावुकैः।
सर्वजनाः समागत्य, गृह्णन्ति लाभपुष्कलम् ॥ ६४३ ॥
धोलेराबन्दरे तस्माद्विहारो गुरुणा कृतः।
अपूर्वमन्दिरं तत्र, विलोकितं च भावतः ॥ ६४४ ॥
उपाश्रयो विशालश्च, तद्ग्रामे परिशोभते।
प्राचीनपुस्तकागारः, विद्यते तत्पुरे तथा ॥ ६४५ ॥
व्यवस्था पशुशालायाः, शोचनीया च विद्यते।
नामतः पशुरक्षायाः, मृतिस्थानं च गुप्ततः ॥ ६४६ ॥
सार्वजनीनसद्बोधः, तत्क्षणे गुरुणा कृतः।
सर्वधवनलोकाश्च, व्याख्यानाय समागताः ॥ ६४७ ॥

पशूनां रक्षणं सर्वं, मनुष्याणां च सम्मतम् ।
हिन्दूम्लेच्छादिभेदश्च, कर्त्तव्यो न कदाचन ॥ ६४८ ॥
दधिदुग्धादितक्रादि, यवनैर्यदि भुज्यते ।
रक्षणं च तदा तत्र, कर्त्तव्यं सर्वसम्मतम् ॥ ६४९ ॥
दध्यादीनां च सद्भोगः, तैर्यदि न विधीयते ।
तदा तेषां कथं पुष्टिः? शरीरे यदि जायते ॥ ६५० ॥
घृताद्यं च कथं भुक्तं, दुग्धादि भुज्यते कथम् ।
क्षेत्रे शस्यसमुत्पत्तिः, खातस्य विरहे कथम् ? ॥ ६५१ ॥
कुरानादिकग्रन्थेषु, निषिद्धं नैव रक्षणम् ।
अतो हि न निषिध्येत, यवनैः पुरुषैस्तथा ॥ ६५२ ॥
साहाय्यदानकार्याय, देशना गुरुणा कृता ।
हिंदुमुस्लिमसर्वैश्च, दत्ता शुभा सहायता ॥ ६५३ ॥
रक्षणाकार्यकर्त्तव्ये, उत्साहः सर्वसज्जनैः ।
कृतो गुरूपदेशेन, सर्वेषां शान्तिहेतवे ॥ ६५४ ॥
तर्कपुरे ततो गत्वा, अरण्यरूपस्थानके ।
अवतारो गुरूणां च, सङ्गमेन प्रजायते ॥ ६५५ ॥
स्तम्भनपुरवास्तव्याः, श्राद्धाः सर्वे समागताः ।
अम्बालालीयशालायाः, आगताः सर्वभावुकाः ॥ ६५६ ॥
चलन्ति गुरुणा सार्धं, शृण्वन्ति देशनां सदा ।
सुखपूर्वेण तत्रैव, नगरे गुरवो गताः ॥ ६५७ ॥

प्रवेशादिमहोत्साहः, दर्शितः सज्जनैर्नरैः ।
शालासु चागताः सर्वे, कृत्वा च प्रभुदर्शनम् ॥ ६५८ ॥

प्राचीनमन्दिराणां च, सर्वेषां दर्शनं कृतम् ।
चतुःषष्टि च सङ्ख्यापि, तेषां तु परिवर्त्तते ॥ ६५९ ॥

हस्तलिखितसिद्धान्त–ग्रन्थाश्च सन्ति वैपुलाः ।
विद्यन्ते पुस्तकागारे, ताडपत्रेषु योजिताः ॥ ६६० ॥

दीपविजयसाधुश्च, ज्ञानशालासु विद्यते ।
हर्षविजयनामाख्यः, साधुश्च तत्र संमतः ॥ ६६१ ॥

सर्वे ते भीलनार्येव, गुरुपार्श्व समागताः ।
पूर्वपरिचितत्वेन, आदृता गुरुणा तदा ॥ ६६२ ॥

तत्रत्यपुस्तकानां च, विलोकनं कृतं ततः ।
नामजोशीति नाम्ना च, मन्त्री तत्र समागतः॥ ६६३ ॥

गढ़ां च विग्रहे राजा, स एव प्रणिगद्यते ।
उपदेशेन तत्काले, आकृष्टं तस्य मानसम् ॥ ६६४ ॥

प्रतिदिनं समायाति, देशनामृतहेतवे ।
तत्रत्या च प्रजा सर्वा, गुरुपार्श्वे समागता ॥ ६६५ ॥

प्रार्थना स्वीकृतिस्तेषां, विविधरूपतः कृता ।
यवनानां च सन्तोषः, दत्तः कुरानवाक्यतः ॥ ६६६ ॥

पशुशालासमुद्धार, विषये देशना तदा ।
प्रदत्ता गुरुदेवेन, सर्वेषां लाभहेतवे ॥ ६६७ ॥
यवना योजितास्तत्र, दानसन्मानकार्यके ।
द्वाभ्यां सहैव कार्यं च, कर्त्तव्यं मुख्यरूपतः ॥ ६६८ ॥
अहिंसा परमो धर्मः, मनुष्याणां निगद्यते ।
इन्सानत्वं च युष्माकं, विद्यते यदि सर्वथा ॥ ६६९ ॥
तदाऽत्र कार्यकर्तव्ये, द्रव्यव्ययं विधीयताम् ।
उपदेशेन तेषां च, स्वान्तं शुभं प्रजायते ॥ ६७० ॥
द्रव्यव्ययस्य तत्रापि, यवनैश्च कृतः खलु ।
हिन्दुधर्मानुकाराणां, पुष्कलं विद्यते तदा ॥ ६७१ ॥
नामजोशीति सन्नामा, सञ्जातो गुरुभक्तकः ।
स्तम्भननगरे तेन, उन्नतिश्च कृता बहु ॥ ६७२ ॥
पटेलजाति भव्यानां, देशना दृढभावतः ।
प्रदत्ता गुरुदेवेन, धर्मे तेऽपि दृढीकृता ॥ ६७३ ॥
काविनन्दरग्रामे च, यात्रेच्छा परिवर्तते ।
तत्रत्यसङ्घसार्थेन, धुंवावाख्यावतारके ॥ ६७४ ॥
गत्वा नावं समारूह्य, सर्वे तत्र समागताः ।
मन्दिरतीर्थरूपं च, दृष्ट्वा प्रमुदिताः समे ॥ ६७५ ॥
विशालं मन्दिरं तच्च, दर्शनेन मनोहरम् ।
बहुमूल्यं च तज्ज्ञेयं, स्थिता दिनद्वयी तथा ॥ ६७६ ॥

जगद्विख्यातश्वश्रूणां, नामतः पूर्वजं भवेत् ।
चधूनां मन्दिरं तादृक्, तत्रैव परिशोभते ॥ ६७७ ॥
त्रिशती सङ्के सर्वे, जनास्तत्र समागताः ।
भक्तिभावं च कुर्वन्ति, श्रावकश्राविकादयः ॥ ६७८ ॥
आमोदनगरं तस्माद्गुरुदेवैः पवित्रितम् ।
लाडश्रीमालसच्छ्राद्धाः, गुरुभक्तिपरायणाः ॥ ६७९ ॥
मन्दिरं वर्तते दिव्यं, व्याख्यानादि कृतं तदा ।
देशनातश्च सम्बोध्य, शमनीग्रामसन्निधौ ॥ ६८० ॥
भृगुकच्छपुरे तस्माद्गताश्च गुरवस्तथा
मुनिसुव्रततीर्थं तदश्वावतारनामकम् ॥ ६८१ ॥
शमलीचैत्यनामाख्यं, मन्दिरं वर्ततेऽधुना ।
यवनराज्यप्राबल्याद्गृहीतं यवनैः किल ॥ ६८२ ॥
मस्जीदरूपकं कृत्वा, यवनैर्हस्तसात् कृतम् ।
यथा स्तम्भनमध्ये च, तादृशमत्र ज्ञायताम् ॥ ६८३ ॥
श्रीमालिपोलमध्ये च, मन्दिरदशकं महत् ।
चमत्कारकरीमूर्त्तिः, सुव्रतस्वामिनः शुभा ॥ ६८४ ॥
यदि विशुद्धभावेन; अष्टमतपसा प्रभोः ।
आराधना विधीयेत, तदा शासनदेवता ॥ ६८५ ॥
प्रत्यक्षीभूय चागत्य, कथयति शुभाशुभे ।
जगदीशजिनेन्द्राणां, दर्शनं शुद्धभावतः ॥ ६८६ ॥

ध्यानं च तत्र सम्मील्य, विहितं भक्तिपूर्वकम् ।
धर्मध्यानेन किं कार्यं, न जायतेऽत्र कथ्यताम् ॥ ६८७ ॥

जयन्ती वीरदेवानामत्रैव विहिता तदा ।
अष्टाह्निकोत्सवस्तत्र, सङ्घेन योजितः खलु ॥ ६८८ ॥

दशालाटस्य वाट्यां च, व्याख्यानं जायते शुभम् ।
हिन्दुपार्सिकम्लेच्छाश्च, सर्वे तत्र समागताः ॥ ६८९ ॥

वीरजीवनरेखा च, जगत्कल्याणकारिका ।
जन्मतो मोक्षपर्यन्तं, वर्णिता गुरुणा तदा ॥ ६९० ॥

जैनेतरीयवर्गेण, वीरजीवनदेशना ।
अधिकरूपतः श्रुत्यै, प्रार्थना च पुनः कृता ॥ ६९१ ॥

द्वितीयदिवसे तत्त्वानां, चिन्ता च कृता बहु ।
जैनदर्शनमन्तव्या, दर्शिता श्रेष्ठता तदा ॥ ६९२ ॥

प्रशंसा भूरिशः सर्वैः, जनैस्तत्र कृता खलु ।
प्रतिदिनं च पूजाऽपि, क्रियतेऽतिमनोहरा ॥ ६९३ ॥

शिवश्री यमिनी तत्र, संयमशुद्धपालिका ।
नैकसाध्वीसमायुक्ता, आगता गुरुदर्शने ॥ ६९४ ॥

भावतो गुरुदेवानां, ताभिः कृता च वन्दना ।
शंकोत्तरं च निर्माय, स्वीयस्थाने समागता ॥ ६९५ ॥

रथयात्रा कृता सर्वैः, श्रावकैश्च मनोहरा ।
सहस्रशो जनाः सर्वे, आगच्छन्ति च भावतः ॥ ६९६ ॥

वेजलपुरमध्ये च, लाटश्रीमालभावतः ।
गच्छन्ति गुरवः सर्वैः, साधुभिश्च समायुताः ॥ ६९७ ॥

चैत्रिकपूर्णिमा यात्रा, कृता च पट्टद्वारतः ।
ततोऽनुव्रतदानादि, कार्यं च विहितं तथा ॥ ६९८ ॥

झगडीयाख्यतीर्थस्य, यात्रार्थे च ततो गताः ।
सुरतग्रामवास्तव्याः श्रावकास्तत्र चागताः ॥ ६९९ ॥

स्तम्भनतीर्थमध्ये च, नगीनचन्द्रमुख्यकाः ।
श्रावकाश्च समागत्य, कुर्वन्ति प्रार्थनां तदा ॥ ७०० ॥

चातुर्मासं च कर्त्तव्यं, मुम्बइनगरेऽधुना ।
मदीया प्रार्थना सा वै, स्वीक्रियतां च प्रेमतः ॥ ७०१ ॥

समयं दर्शयिष्यामः, इत्येवं कथितं तदा ।
आयान्ति तीर्थयात्रार्थे, श्रुत्वा च गुरुनामकम् ॥ ७०२ ॥

ढुंढकसाधुदीक्षाप्रदानं तत्रैव कारितम् ।
भृगुकच्छीयभव्याश्च, तेऽपि तत्र समागताः ॥ ७०३ ॥

सहस्रजनसंख्या च, तत्रापि मीलिता तदा ।
स्वामिवात्सल्यकार्यं च, सर्वैस्तत्र विनिर्मितम् ॥ ७०४ ॥

ततः कतारतीर्थेषु, यात्रा च विहिता शुभा ।
ततोऽनु सुरते ग्रामे, सर्वैश्च गुरवो गताः ॥ ७०५ ॥

हरिपुरासु श्रीमाली, लाटापूर्वाप्रकीर्तिताः ।
पूर्वं तत्रैव गत्वा च, मन्दिरदर्शनं कृतम् ॥ ७०६ ॥

गोपीपुरास्तु सच्छ्राद्धाः, नगीनचन्द्रकादयः ।
मीलित्वा गुरुदेवानां, उत्सवो विहितः खलु ॥ ७०७ ॥

प्रत्यहं देशना तत्र, जायते धर्मयोगतः ।
सर्वश्राद्धस्य सन्दोहः, वर्तते चैव तत्क्षणे ॥ ७०८ ॥

वृद्धिचन्द्रगुरूणां च, जयन्ती कारिता तदा ।
सभायोजनकार्यं च, सुन्दरं विहितं तथा ॥ ७०९ ॥

प्रतिबिम्बं च तेषां वै, तत्रैव स्थापितं मुदा ।
संघेन शुभभावेन, पूजादि विहितं किल ॥ ७१० ॥

लक्ष्मीचन्द्रेण भावेन, प्रभावना कृता तथा ।
व्याख्यानश्रेणिसद्भावः, सुरते परिजायते ॥ ७११ ॥

भिन्नप्रदेशतो भिन्नं, विषयकं च सम्मतम् ।
दीक्षा महोत्सवस्तत्र, कारितो गुरुणा तदा ॥ ७१२ ॥
आनन्दसागराख्यानामागतिस्तत्र जायते ।
पुस्तकसंग्रहो यावत्तत्पार्श्वे परिवर्तते ॥ ७१३ ॥
पुस्तकालयस्थाने च, रक्षणेच्छा प्रदर्शिता ।
भवनं तत्र संजातं, तस्योद्घाटनकं तदा ॥ ७१४ ॥
शुभलग्ने कृतं तेन, आहूय साधुवृन्दकम् ।
गुरुदेवाः समागत्य, कुर्वन्ति देशनां शुभाम् ॥ ७१५ ॥
अन्योऽन्यमीलनं तेषां, साधूनां परिजायते ।
वार्त्तालापश्च सद्बुध्या, शुद्धेन हृदयेन वै ॥ ७१६ ॥

तत्रैव सर्वसङ्घेषु, आनन्दो वर्तितः खलु ।
आनन्दवर्धकं नाम, योजितं ज्ञानमन्दिरम् । ॥ ७१७ ॥
संग्रहो ग्रन्थरत्नानां, दृश्यते ज्ञानमन्दिरे ।
सर्वदर्शनवाच्याश्च, ग्रन्थाश्च रक्षितास्तथा ॥ ७१८ ॥
कलेक्टरेण साकं वै, मीलनं परिजायते ।
साहित्यवर्धनी वार्ता, संजाता गुरुदेवतः ॥ ७१९ ॥
यूरोपीयनमित्राणां, परिचयस्य पुष्टिदा ।
जैनधर्मस्य वैशालं, गुरुणा दर्शितं तथा ॥ ७२० ॥
तत्प्रामुख्ये च तद्ग्रामे, व्याख्याने धर्मघोषणा ।
जायते गुरुदेवानां, स्याद्वादेन समन्विता ॥ ७२१ ॥
केनचित्तत्र सम्प्रोक्तं, गृहस्थप्रमुखे खलु ।
व्याख्यानं चैव साधूनां, युज्यते न कदाचन ॥ ७२२ ॥
तत्काले तेन सम्प्रोक्तं, प्रामुख्यं नैव साधूनाम् ।
किन्तु गृहस्थवर्गाणां, अव्यवस्थानिरोधकम् ॥ ७२३ ॥
केनचित्तत्र चागत्य, यदि च शुष्कवादतः ।
कथाविधानकं चैव, प्रारभ्यते च तत्क्षणे ॥ ७२४ ॥
तदा तस्य निरोधाय, उपायः कः प्रयुज्यते ? ।
साधूनां जल्पनं नैव, कलहकार्यसाधकम् ॥ ७२५ ॥
यदि साधोश्च साम्मुख्ये, यद्वा तद्वा विकथ्यते ? ।
तदा विधीयते किं वै, साधुना तत्र कार्यके ॥ ७२६ ॥

गृहस्थप्रमुखे तत्र, केनचिद्यदि जल्प्यते ।
तदा हस्तं गृहीत्वा च, निष्कास्यते मया किल ॥ ७२७ ॥
वितण्डादिकवादेन, जल्पनं च निषिध्यते ।
यादृशः खलु सोऽपि, स्यात्तादृशो भूयते मया ॥ ७२८ ॥
साधूनां च न धर्मोऽयं, प्रामुख्यं युज्यते ततः ।
इत्येवं ज्ञापितं तेन, जैनस्तुतिः कृता वहु ॥ ७२९ ॥
पुनश्च गुरुदेवानां, मीलनाय समागतः ।
जैनसिद्धान्तवार्ता च, श्रुता सा गुरुदेवतः ॥ ७३० ॥
सोहसय्यां विहाराय, शीघ्रं सङ्घेन ज्ञापितम् ।
नवसारीपुरे गत्वा, सर्वेषां धर्मलाभतः ॥ ७३१ ॥
व्याख्यानं दशकं चैव गुरुदेवेन कारितम् ।
पारसिजातिकाः सभ्याः, सहस्रशः समागताः ॥ ७३२ ॥
अतीव प्रेमपूर्वेण, श्रुता च गुरुदेशना ।
टावनहालस्थाने च, सार्वजनीनकं भवेत् ॥ ७३३ ॥
कालियावाडमध्ये च, संघविज्ञप्तियोगतः ।
गत्वा च दर्शनं कृत्वा, देशना विहिता शुभा ॥ ७३४ ॥
नेमिचन्द्रादिका श्राद्धाः, गुरुभक्तिपरायणाः ।
विद्यन्ते नवसार्याख्ये, ग्रामे च भद्रका जनाः ॥ ७३५ ॥
वीलीमोराख्यके ग्रामे, सङ्घाग्रहसुयोगतः ।
गत्वा च देशना दत्ता, त्रैकालिकी मनोहरा ॥ ७३६ ॥

वडशाले ततो गत्वा, लल्लुभ्रात्रादिभावतः ।
दर्शनं देवदेवस्य, कृतं च शुद्धयोगतः ॥ ७३७ ॥
न्यायविजयसाधोश्च, पीडादंष्ट्रासु जायते ।
तदर्थं स्थिरता तत्र, गुरुदेवैः कृता तदा ॥ ७३८ ॥
व्याख्यानसत्सर्के तत्र, योजितं संघसज्जनैः ।
हरजीवनकालीदासाद्यास्तत्र समागताः ॥ ७३९ ॥
मार्गानुसारिधर्मस्य, व्याख्यानं तत्र जायते ।
मिथ्यात्वत्याजनं तत्र, प्रदत्तं गुरुणा तदा ॥ ७४० ॥
ब्रह्मचर्यस्य पुष्ट्यर्थं, देशना विहिता शुभा ।
तद्ग्रामे चैव साधूनां, व्याख्यानं प्रथमं मतम् ॥ ७४१ ॥
उपाश्रये च सर्वेषां, साधूनां परिजायते ।
सार्वजनीनकं चैव, आद्यं तद्धर्मसूरीणाम् ॥ ७४२ ॥
पालडीपुरमध्ये च, गत्वा दत्तं च तादृशम् ।
धगवाडे ततो गत्वा, दर्शनं विहितं शुभम् ॥ ७४३ ॥
देवेन्द्रविजयस्यैव, सर्पदंशः प्रजायते ।
गुरुणा प्रभुध्यानेन, निर्विषत्वं च कारितम् ॥ ७४४ ॥
धोलवाडादिके स्थाने, सोपारके ततः परे ।
देणग्रामे ततो गत्वा, दर्शनं भावतः कृतम् ॥ ७४५ ॥
धार्मिकपाठशाला च, धर्माय नैव विद्यते ।
उपदेशेन तत्पार्श्वे, शाला च पाठहेतवे ॥ ७४६ ॥

कृता सङ्घेन तत्काले, ततश्च देशना तथा ।
ततो मल्हाडग्रामे च, गत्वा च गुरवः स्थिता ॥ ७४७ ॥
देवकरणहर्म्येषु, तस्यैव प्रार्थनादितः ।
उत्तीर्य देशना दत्ता, सर्वेषां बोधदायिका ॥ ७४८ ॥
सहस्रशो जनास्तत्र, सोहमयी समागताः ।
गुरुवन्दनकार्यं च, विहितं तैश्च भावतः ॥ ७४९ ॥
पूजा प्रभावना भक्तिः, स्वामिवात्सल्यपोषिका ।
कृता च बहुभावेन, गुर्वादीनां सुयोगतः ॥ ७५० ॥
पुत्तली श्राविका तत्र, व्याख्यानाय समागता ।
अनेकश्राविकासार्धं, श्रावका नैकसंख्यकाः ॥ ७५१ ॥
वैराग्यवाहिनी व्याख्या, धर्मरागप्रवर्धनी ।
आत्मकल्याणपुष्ट्यर्थं, संजाता गुरुदेशना ॥ ७५२ ॥
शान्ताक्रुझे ततश्चैव आगताः सर्वसाधवः ।
नरोत्तमस्य सत्स्थानं, गृहीतं च तदाज्ञया ॥ ७५३ ॥
स्वामिवात्सल्यकं तत्र, कृतं चातीव भावतः ।
वेद्यकर्मविनाशाय, कारितं प्रभुपूजनम् ॥ ७५४ ॥
गायकाश्च समायाताः, सामग्र्या सर्वसंयुताः ।
मंजुलशब्दघोषेण, कुर्वन्ति पूजनादिकम् ॥ ७५५ ॥
अध्यात्मभजनान्येव, गायन्ति प्रभुमन्दिरे ।
गाम्भीर्यार्थेन युक्तानि, श्रुतिमनोहराणि च ॥ ७५६ ॥

व्याख्यानमण्डपे पश्चात्सञ्जाता गुरुदेशना ।
यत्रोपदेशकानां च, प्राबल्यं परिवर्तते ॥ ७५७ ॥
तत्रैव धर्मबाहुल्यं, जगति परिजायते ।
सर्वोत्तमं च धर्मत्वं, जैनेषु परिगीयते ॥ ७५८ ॥
तत्त्वप्रमाणसद्रत्नं, स्याद्वादेन परिष्कृतम् ।
विद्यते जैनधर्मेषु, नान्यत्र तत्कदाचन ॥ ७५९ ॥
इत्येवं सारसंयुक्तं, व्याख्यानं गुरुणा कृतम् ।
यदि धर्मस्य वृद्ध्यर्थं, भावना जायते शुभा ॥ ७६० ॥
तदोपदेशकानां च, विद्यते हि प्रयोजनम् ।
तान्विना धर्मवृद्धिश्च, जायते नहि कर्हिचित् ॥ ७६१ ॥
ततश्च पारलाग्रामे, अन्धेरीतः समागताः ।
तत्रैव दर्शनं कृत्वा, माहिमे च समागताः ॥ ७६२ ॥
मरुदेशीय सच्छ्राद्धैः, पूजाप्रभावनादिकम् ।
वात्सल्यभावनाद्यं च, कृतं तैः पुण्ययोगतः ॥ ७६३ ॥
ततो भायखले गत्वा, तत्तीर्थं च विलोकितम् ।
भव्यं जिनालयं दृष्ट्वा, सञ्जाता शुद्धभावना ॥ ७६४ ॥
मोतीशाश्रेष्ठिवर्येण, कारितं जैनमन्दिरम् ।
अतीव सुन्दरं तच्च, भव्यपंकजबोधकम् ॥ ७६५ ॥
उपाश्रयादिकं सर्वं, तत्रैव तेन कारितम् ।
श्राद्धानां स्थितिकार्याय, गृहीता भूश्च पुष्कला ॥ ७६६ ॥

सिद्धाचलादि तीर्थेषु, पुष्कलधनयोगतः ।
विशालं मन्दिरं तेन, निर्मापितं च भावतः ॥ ७६७ ॥
द्वासप्ततिश्च सर्वत्र, मन्दिरावलिरागता ।
आदिदेवस्य तन्मध्ये, मन्दिरं दुःखनाशनम् ॥ ७६८ ॥
कोटिधनोपयोगश्च, कारितः शुद्धभावतः ।
खातिकायाश्च सम्पूर्त्तिः, कृता तेनैव तत्क्षणे ॥ ७६९ ॥
धर्मशाला च तत्रैव, यात्रिणां सुखहेतवे ।
विशाला कारितास्तेन, स्वर्गसुखं समीहता ॥ ७७० ॥
जीवदया च सम्पूर्णा, वसति मानसे सदा ।
धर्माय प्राणसम्पत्तिः, धनाय नैव गण्यते ॥ ७७१ ॥
गोतुल्यभाररूप्यानां, दानेन जीवमोचनम् ।
कारितं तेन भव्येन, स्वान्तं च तस्य कीदृशम् ॥ ७७२ ॥
धर्मात्मपुरुषाणां च, धर्म एव धनं मतम् ।
पापात्मानां च, रूप्याणि, धनानि पापयोगतः ॥ ७७३ ॥
क्षेमचन्द्रस्तु तत्पुत्रः, दृष्टान्तरूपको मतः ।
श्रद्धा च यादृशी तस्य, तादृशी नैव विद्यते ॥ ७७४ ॥
सूना स्थाने च गन्तव्ये, स्वात्मा च योजितस्तदा ।
न तु गवादिजीवानां, प्रेषणं तेन कारितम् ॥ ७७५ ॥
तस्य धर्मप्रभावेन, सूना स्थानस्य रज्जुका ।
त्रुटिता खलु तत्काले, त्रिवारं तादृशं भवेत् ॥ ७७६ ॥

गवर्मेण्टेन सम्प्रोक्तमभयं दीयतां किल ।
याचते सोऽपि तत्सर्वं, दीयतां राजशासनात् ॥ ७७७ ॥
मद्दृष्टौ मारणं स्नानास्थाने नरस्य नो भवेत् ।
इत्येवं याचना मह्यं, नान्या च वै कदाचन ॥ ७७८ ॥
मानीता राजनीत्यैव, तत्रत्यैः पुरुषैस्तदा ।
आगत्य देवदेवानां, दर्शनं विहितं बहु ॥ ७७९ ॥
धर्माच्च राज्यसम्पत्तिः, स्वर्गप्राप्तिश्च धर्मतः ।
मोक्षस्यापि च सम्प्राप्तिः, धर्मात्कि किं न जायते?॥७८०॥
धर्मात्माऽयं स विज्ञेयः, सर्वत्र जैनशासने ।
तस्येदं मन्दिरं चात्र, दर्शनेन मनोहरम् ॥ ७८१ ॥
पायधूनी समायाताः, अन्ये च श्रावकास्तथा ।
सहस्रशोजनाः सर्वे, आगता गुरुसम्मुखे ॥ ७८२ ॥
पुष्कला वाद्यसामग्री, श्राविकावर्गसंयुताः ।
आनयार्थं गुरूणां च, अतीव हर्षसंयुताः ॥ ७८३ ॥

॥ इति श्रीशास्त्रविशारद जैनाचार्य जगद्गुरु श्री
विजयधर्मसूरिशिष्येण न्यायविशारदन्यायतीर्थो-
पाध्यायमङ्गलविजयरचितधर्मजीवनप्रदीपे
पादलिप्त-शिहोर-भावपत्तन-मधुमती-कुण्ड-
लाऽमरेलि--जीर्णदुर्ग--गोंडल--राजदुर्ग--
जामनगर--मोरबी--स्तम्भनपुर--भृगु-
कच्छ-सुरतादि वर्णननामा षष्ठ-
परिच्छेदः समाप्तः

## सप्तमः परिच्छेदः

दशसहस्रसंख्याकाः, प्रारम्भे सन्ति श्रावकाः ।
पश्चादनेकसंख्याकाः, सञ्जाता भावुकास्तथा ॥ १ ॥

नैकरथ्यां परिभ्रम्य, पायधून्यां समागताः ।
गोडीजीपार्श्वनाथानां, विहितं दर्शनं ततः ॥ २ ॥

उपाश्रये समागत्य, प्रारब्धं मङ्गलं शुभम् ।
नालिकेरादि वस्तूनां, जाता प्रभावना तदा ॥ ३ ॥

अष्टादशमुनीनां च, आगतिः प्रथमा मता ।
सर्वे त एव विद्वांसः, आश्चर्यं च ततो महत् ॥ ४ ॥

जैनजैनेतराः सर्वे, आगता गुरुभक्तितः ।
आगत्य गुरुदेवाग्रे, कुर्वन्ति प्रश्नचर्चिकाम् ॥ ५ ॥

गांधी महाशयस्तत्र, मीलनाय समागतः ।
देशोन्नति विधीनाय, करोति पृच्छनं तदा ॥ ६ ॥

अहिंसा संयमेनैव, देशोन्नतिः प्रजायते ।
अन्यथा नव कर्हिचित्तदाशा सफला भवेत् ॥ ७ ॥

प्राधान्यं ब्रह्मचर्यस्य, भारते युज्यते किल ।
रसशून्येक्षुयष्टिवत्, नृत्वं च मन्यते मया ॥ ८ ॥

तादृशं वचनं श्रुत्वा, महाशयेन सम्मतम् ।
अहिंसा संध्वसे शून्ये, देशोन्नतिर्न जायते ॥ ९ ॥

शासङ्गिकं च वक्तव्यं, गुरुणा च कृतं तदा ।
अतीव प्रेमपूर्वेण, ततः स्थानाद्विनिर्गतः ॥ १० ॥

व्याख्यानं गुरुदेवानां, प्रत्यहं तत्र जायते ।
सिद्धान्तशैलिपूर्वेण, क्रियते नात्र संशयः ॥ ११ ॥

व्याख्याने स्थितिकर्त्तव्ये स्थानं न तिलमात्रकम् ।
अतिसङ्कीर्णरूपेण, तिष्ठन्ति भावुका जनाः ॥ १२ ॥

काश्यादिकप्रदेशानामनुभवात्मिका कथा ।
षड्दर्शनीय चर्चाऽपि, कथ्यते देशनादिषु ॥ १३ ॥

कोटस्थाः श्रावकाः सर्वे, आगत्य गुरुसन्निधौ ।
चातुर्मासाय विज्ञप्तिः, कृता च दृढभावतः ॥ १४ ॥

मङ्गलविजयादीनां, तत्रैव परिप्रेषणम् ।
प्राग्वाटधर्मशालायां, इन्द्रसूरेश्च प्रेषणम् ॥ १५ ॥

जयन्तविजयादीनां, प्रेषणं वालकेश्वरे ।
सर्वेषां धर्मलाभाय, व्यवस्था गुरुणा कृता ॥ १६ ॥

विभिन्नधर्मशालायां, व्याख्यानं चैकरूपतः ।
सञ्जातं तेन सर्वत्र, धर्मभावः प्रवर्धते ॥ १७ ॥

एकदा गुरुदेवानां, विचारो मानसे भवेत् ।
उपदेशकशून्येन, धर्मोन्नतिः कथं भवेत् ॥ १८ ॥

खण्डनं जैनधर्मस्य, रात्रौ केन विधीयते ।
साधुभिश्च कथं तत्र, तत्काले खलु गम्यते ॥ १९ ॥

गृहस्थो यदि विज्ञः, स्याद्वक्तृत्वेन समन्वितः ।
गम्यते च तदा तत्र, उत्तरं च करोत्यसौ ॥ २० ॥

सर्वेषु सम्प्रदायेषु, आर्यसमाजकादिषु ।
उपदेशकबाहुल्याद्धर्मप्रचारता बहु ॥ २१ ॥

वैष्णवाः कति संजाताः, सत्सङ्गिनश्च केचन ।
समाजिनश्च सञ्जाताः, लुम्पका धर्मलोपकाः ॥ २२ ॥

कोटिशो जनसंख्या च, यत्र धर्मे च प्रागभूत् ।
अधुना लक्षशः सन्ति, हृदि खेदो महान्भवेत् ॥ २३ ॥

उपदेशकता यत्र, विद्यते नैव काचन ।
अन्धकारस्ततो ज्ञेयः, तत्त्वज्ञानवियोगतः ॥ २४ ॥

इति विचार्यसभ्यानां, समीपे सैव योजना ।
प्रकटिता ततस्तैश्च, गृहीता शुद्धभावतः ॥ २५ ॥

बम्बइनगरीयानां च, सार्वजनीनरूपतः ।
सम्मीलनं कृतं सर्वैः, आगताः सर्वश्रावकाः ॥ २६ ॥

व्याख्यानं गुरुदेवानां, तद्विषये प्रजायते ।
श्रुत्वा सर्वैश्च सम्मील्य, विचारितं च मानसे ॥ २७ ॥

अवश्यमेव तत्कार्यं, कर्त्तव्यं जैनशासने ।
त्रुटिश्च तस्य सम्भाति, निष्कास्यतां ततः खलु ॥ २८ ॥

विना द्रव्यं न तत्कार्यं, जायते च कदाचन ।
लक्षशो रूप्यकानां च, व्ययेन तत्प्रजायते ॥ २९ ॥

द्रव्योपदेशकर्त्तव्ये, प्रयत्नो गुरुणा कृतः ।
षष्टिसहस्ररूप्याणां, वचनं मीलितं तदा ॥ ३० ॥

पश्चादपि गुरूणां च, उपदेशेन जायते ।
द्विलक्षरूप्यकानां च, एकत्रितं वचो मतम् ॥ ३१ ॥

समितियोजना तत्र, श्रीसङ्घेन कृता तदा ।
लक्ष्मीचन्द्रस्तु मुख्यः, स्यात्प्रमुखस्थानदीपकः ॥ ३२ ॥

पञ्चविंशतिसाहस्रं, रूप्यकानां समर्पितम् ।
औदार्यसर्वकार्येषु, मोहमय्यां प्रजायते ॥ ३३ ॥

षड्लक्षरूप्यकानां च, व्ययो गुरूपदेशतः ।
सन्मार्गे कारितस्तेन, कीर्तिलोलुपशून्यतः ॥ ३४ ॥

पर्युषणा च सर्वत्र, अतीवानन्दपूर्विका ।
मोहमय्यां च संजाता, गुरुदेवप्रभावतः ॥ ३५ ॥

जैनजैनेतरा भव्याः, व्याख्यानश्रुतिहेतवे ।
पर्युषणा क्षणे चैव, समागच्छन्ति भावतः ॥ ३६ ॥

जैनसाहित्यपोषाय, विट्ठलादिकभावुकैः ।
जैनेतरैश्च द्रव्याणां, सहस्राणां व्ययीकृतः ॥ ३७ ॥

अन्यैरपि क्षणं प्राप्य, विद्यादानादिकार्यके ।
सद्व्ययश्च स्वरूप्यानां, कारितो धर्मबोधतः ॥ ३८ ॥
बाहिरग्रामवास्तव्याः, जना नैके समागताः ।
नव्यजीर्णस्य चोद्धारं, मन्दिरस्य च मानसे ॥ ३९ ॥
गृहीत्वा द्रव्यलाभाय, तत्रैव शतशो जनाः ।
उपाश्रयसमुद्धारकार्याय चागताः कति ॥ ४० ॥
लक्षशो द्रव्यदानं च, कारितं चोपदेशतः ।
अन्यानि नैककार्याणि, चातुर्मासे कृतानि च ॥ ४१ ॥
द्रव्यव्ययं स्वस्वान्ते च, गणयन्ति च नो मनाक् ।
धर्मप्राप्त्यै महेच्छा च, सर्वेषां मानसे सदा ॥ ४२ ॥
नगीनचन्द्रको मुख्यः, गोडीजी मुख्यमन्दिरे ।
शान्तस्वभावसंयुक्तः, क्लेशलेशविवर्जितः ॥ ४३ ॥
स्वगृहे गुरुदेवानां, सम्पूर्णं परिवर्तनम् ।
चातुर्मासस्य तेनैव, कारितं तत्र भावतः ॥ ४४ ॥
भक्तिबाहुल्ययोगेन, माइखलस्य मन्दिरे ।
सिद्धाचलस्य यात्रार्थं, आनीता गुरवस्तदा ॥ ४५ ॥
गत्वा च गिरिराजस्य, दर्शनं स्तुतिपूर्वकम् ।
विहितं च ततः पश्चात्, निःप्रदक्षिणिका शुभा ॥ ४६ ॥
एकविंशतिनाम्नां, च स्तुतिरपि कृता तदा ।
[illegible]न्दनकार्यादि, नवीन तद कारितम् ॥ ४७ ॥

सम्पूर्णजैनसङ्घ्या च, तत्काले तत्र मन्दिरे ।
दृश्यते भव्यरूपेण, जैनपुरित्वसूचिका ॥ ४८ ॥

सुरतनगरात्तत्र, जीवनचन्द्रहट्टके ।
साधूनां च दलं चैकमा-गतं बुद्धिदोषतः ॥ ४९ ॥

उपदेशककार्यस्य, तेनैव निन्दनं कृतम् ।
दलं तु गुरुदेवानां, हस्ते च तत्समागतम् ॥ ५० ॥

दृष्ट्वा दलं गुरूणां च, मानसे हास्यता भवेत् ।
मुखे वदति कीदृक्षं, दले च लिखितं किमु ॥ ५१ ॥

द्विधा वचो विधातृणामुपरि भावतो दया ।
कर्त्तव्या भव्यजीवेन, आत्माभिनन्दिना तदा ॥ ५२ ॥

यादृशं क्रियते कर्म, तादृशं भुज्यते फलम् ।
रागद्वेषौ मया नापि, कर्त्तव्यश्च मनागपि ॥ ५३ ॥

आरब्धं येन सत्कार्यं, विधातव्यं च पूर्णकम् ।
तेनैव सज्जनेनैव स्वान्ते सा-मान्यता शुभा ॥ ५४ ॥

श्रेयांसि बहु विघ्नानि, आगच्छन्ति पदे पदे ।
अश्रेयसि प्रवृत्तानां, क्व यान्ति विघ्ननायकाः ॥ ५५ ॥

वीरलापारला मध्ये, उद्घाटितं च श्रावकैः ।
वीरतत्त्वोपदेशानां, मण्डलं स्थापितं शुभम् ॥ ५६ ॥

राजधन्यस्य वास्तव्यः, मोतीलालाभिधानकम् ।
तद्धस्तेनैव तद्ग्रामे, कार्यं च विहितं शुभम् ॥ ५७ ॥

चातुर्मासं च तत्रैव, कर्त्तव्ये प्रार्थना कृता ।
संङ्घेनैव समागत्य, तत्क्षणे सर्वसन्निधौ ॥ ५८ ॥
लाभालाभौ विचार्यैव, गुरुणा स्वीकृतं तदा ।
शान्ताक्रुझादिके भ्रान्त्वा, मोहमय्यां समागताः ॥ ५९ ॥
जेकोसलाविस्थानस्थः, पेट्रोलसाहबस्तदा ।
साहित्यसेविताकार्ये, कौशल्यं तस्य वर्तते ॥ ६० ॥
मीलनं गुरुदेवानां, सञ्जातं तत्र स्थानके ।
साहित्यजैनधर्मस्य, प्रश्नचर्चा कृता बहु ॥ ६१ ॥
सतीश्चन्द्रादि वङ्गीयाः, भावुका गुरुदर्शने ।
आगताः पुण्ययोगेन, कुर्वन्ति धर्मवार्त्तिकाम् ॥ ६२ ॥
टेसीटोरि महाभागः, आगतः स्वीयदेशतः ।
पुनरागत्य साहित्य, सेवाधर्मं करोत्यसौ ॥ ६३ ॥
चातुर्मासे द्वितीयस्मिन्, नैकधर्मस्यकार्यक्रम् ।
विहितं युक्तिपूर्वेण, धर्मविशुद्धिहेतवे ॥ ६४ ॥
डाक्तरटोमसेनैव, दलं चैकं तु पाठिनम् ।
गवर्नरमहाभाग,मीलनार्थेव तत्क्षणे ॥ ६५ ॥
तत्प्रासादे गताः, पञ्च साधुभिर्गुरवः खलु ।
सेक्रेटरी समागत्य, गुरूणां प्रार्थना कृता ॥ ६६ ॥
आभ्यन्तरे गुरूणांच, मीलनाय निमंत्रितः ।
गवर्नरेण तत्रैव, अन्ये निष्काशिताः मेप ॥ ६७ ॥

त्रिसाधुगुरुवर्याश्च, अनुवादस्य कारकः ।
चैकस्तु श्रावको ज्ञेयः, गवर्नरस्तु पञ्चमः ॥ ६८ ॥
प्रारम्भे सुखशान्त्यर्थं, परस्परं च पृच्छनम् ।
मीलनहेतुता तेन, ज्ञापिता गुरुसन्निधौ ॥ ६९ ॥
भायखलीयभूभाग–विषये प्रश्नता कृता ।
जैनानां स्थानकाभावे, कष्टं चातीव जायते ॥ ७० ॥
मोतीशाश्रेष्ठिवर्येण, स्वबन्धुहितकांक्षिणा ।
जैनानां सुखशान्त्यर्थं, तादृशी रक्षिता क्षमा ॥ ७१ ॥
अतो जैनस्य वासार्थं, विधीयन्ते गृहाणि च ।
गवर्मेण्टस्य भूमीनां, त्रुटिस्तु नैव विद्यते ॥ ७२ ॥
तदा तेनैव सम्प्रोक्तं, क्षमां विक्रीय नाणकम् ।
गृहीतं जैनश्राद्धेन, सञ्जातं च रजिस्टरम् ॥ ७३ ॥
वार्तां च तादृशीं श्रुत्वा, चमत्कृता च मानसे ।
श्राद्धेन कथितं कीदृग्, कार्यं च कीदृशं कृतम् ॥ ७४ ॥
मनस्यन्यद्वचस्यऽन्यच्च, एकं च नैव जल्पनम् ।
विश्वासश्च कथं कार्यः, सर्वथा त्रुटिनां खलु ॥ ७५ ॥
इत्येवं मानसे स्मृत्वा, अन्यच्च कथितं तथा ।
येन केन प्रकारेण, दातव्या खलु सा क्षमा ॥ ७६ ॥
कथितं तेन तत्काले, विचार्य चोत्तरं किल ।
वितन्यते मया पश्चात्सर्वेषां सुखहेतवे ॥ ७७ ॥

अन्यापि गुप्तवार्ता च, कारिता धर्मयोगतः ।
मानिता तेन तत्सर्वा, गुरुणा सह प्रेमतः ॥ ७८ ॥

उपाश्रये ततः सूरिः, आगतः साधुभिः सह ।
श्रावका दर्शनायैव, आगताः सर्वसन्निधौ ॥ ७९ ॥

भायखलीयवार्ता च, ऋषीनां दोपयोगतः ।
विपरीतस्वरूपा सा, ज्ञापिता सर्वसन्मुखे ॥ ८० ॥

मत्पार्श्वे भूमियाञ्चायाः, विषये जल्पनंतनु ।
विक्रीता चेति नो प्रोक्ता, मयि प्रतारणा कृता ॥ ८१ ॥

सर्वत्र कपटं नैव, युज्यते भाग्यशालिनाम् ।
गुरूणां निकटे चैव, कर्त्तव्या शुद्धवार्त्तिका ॥ ८२ ॥

साधारणगृहस्थानां, गृहाणां चैव शून्यतः ।
अशान्तिः परिजायेत, तिष्ठन्ति दुःखिताश्च ते ॥ ८३ ॥

तेषां शान्तिप्रदानादौ, उचितस्य विधापने ।
सर्वथा विमुखास्तेस्युः, स्वदेहपुष्टिकारकाः ॥ ८४ ॥

अधिकारिजनाः प्रायः, धर्मोपेक्षाविधायकाः ।
यत्रैव धनसम्पत्तिः, तेषां तत्रैव स्वामिता ॥ ८५ ॥

परोपकारबुद्धिश्च, विद्यते विरले जने ।
त एव चोत्तमा ज्ञेया, ये परोपकारकारिणः ॥ ८६ ॥

कतिचिद्दिवसात्पश्चा-द्रोममसाहसस्तथा ।
भारते च समायातः, ज्ञातं वर्तमानपत्रतः ॥ ८७ ॥

गुरुदेवेन सर्वांश्च, आहूय कथितं किल ।
आबूतीर्थादिचैत्यानां, शातनानाशकारकः ॥ ८८ ॥

आगच्छति स चात्रैव, मोहमहीपुरीवरे ।
श्रावकोचितकार्यं च, कर्त्तव्यं श्रावकैः शुभम् ॥ ८९ ॥

विज्ञंमन्येन केनचिद्विघ्नं क्षिप्तं च तत्क्षणे ।
अस्माभिश्च कथं कार्यं, तस्य सन्मानकारणम् ॥ ९० ॥

समुद्रस्य तटे यत्र, वोहित्थं परितिष्ठति ।
बन्दरनामधेयं तत्, भाषायां प्रणिगद्यते ॥ ९१ ॥

गुरूणामुपदेशेन, जैनसेवाविधायिनी ।
स्वयंसेवकनामाख्या, संस्था च स्थापिता तदा ॥ ९२ ॥

स्वामिवात्सल्य–यात्रादौ, कस्मिंश्चिद्धर्मकार्यके ।
सेवा करणबुद्ध्या च, मण्डलं योजितं तदा ॥ ९३ ॥

तन्मण्डलं च तत्रैव, सेवाकरणभावतः ।
गतं तत्रापि तेषां वै, मीलनं नैव जायते ॥ ९४ ॥

गवर्नरस्य हर्म्येषु, तत्सेवकैः समानीतः ।
प्राघूर्णकश्च तेषां वै, अतस्तत्रैव नीयते ॥ ९५ ॥

तत्प्रासादे च गत्वैव, गुरुदलं समर्पितम् ।
अकृत्वा भोजनाद्यं च, आगता गुरुदर्शने ॥ ९६ ॥

पुष्पाहारादि सामग्री, तत्कण्ठे तैश्च रोपिता ।
यंत्रगन्त्र्यां समारोप्य, उपाश्रये समानीतः ॥ ९७ ॥

गुरूणां दर्शनं कृत्वा, धन्यं स्वकं च मन्यते ।
अद्य मे दर्शनं पुण्यरूपं च तत्र जायते ॥ ९८ ॥

नमस्कारं च कृत्वैव, उपविष्टः सुखासने ।
परमाण्वादिवादानां, चर्चा च विहिता शुभा ॥ ९९ ॥

सप्तघटिकपर्यन्तं, तिष्ठति गुरुसन्निधौ ।
विस्मृतं भोज्यपानादि, धर्मचर्चापरायणे ॥ १०० ॥

मन्दिरे पार्श्वनाथानां, दर्शनं विहितं शुभम् ।
सुवर्णनाणकं तेन, भण्डारे च समर्पितम् ॥ १०१ ॥

सूक्ष्मदृष्टिप्रयोगेन, मन्दिरं वीक्षितं तदा ।
सप्तसहस्रसंख्या च, जनानां मिलिताः किल ॥ १०२ ॥

अधिकारि समायाताः, सर्वे च तस्य दर्शने ।
सर्वैः साकं च तस्यैव, मीलनं तत्र जायते ॥ १०३ ॥

तस्य सन्मानकार्याय, दिवसो योजितः शुभः ।
शुक्लचतुर्दशीघस्रे, अभिनन्दनपत्रकम् ॥ १०४ ॥

जैनसङ्घेन सम्मील्य, दत्तं सहारपूर्वकम् ।
बहुमूल्यश्च तद्धारः, अन्यदपि समर्पितम् ॥ १०५ ॥

आशीर्वादात्मकं दत्तम्-एकं गुरुणा तदा ।
यानि च धर्मकार्याणि, कृतानि तेन भावतः ॥ १०६ ॥

तेषामुल्लेखकं तत्र, योजितं चाष्टके शुभम् ।
गुरुणा तत्र सम्प्रोक्तं, श्रूयतां सावधानतः ॥ १०७ ॥

तत्पत्रकप्रदाने च, मम कीर्त्तिर्न ज्ञायताम् ।
कृतज्ञता च जैनानां, तेनैव प्रकटीयते ॥ १०८ ॥

पत्रग्रहणवुद्ध्या च, युष्माकं नैव चागतिः ।
भारतदेशदृष्ट्यै, आगतो गुरुसन्निधौ ॥ १०९ ॥

प्रतिदिनं गुरूणां च, निकटे धर्मचर्चनम् ।
यत्र शङ्का समुत्पन्ना, शोधिता साऽपि तत्क्षणे ॥ ११० ॥

शङ्काशोधनकार्यं च, कृतं चातीव भावतः ।
महानुभावता तस्य, आकृत्या चानुमीयते ॥ १११ ॥

परोपकारकार्यं च, क्रियतां हि पदे पदे ।
जैनधर्मस्य सेवाऽपि, विष्मियतां न कर्हिचित् ॥ ११२ ॥

तेनापि जल्पितं तत्र, मया किञ्चिन्न तन्यते ।
गुरुप्रेमप्रकर्षेण, मया सेवापि कारिता ॥ ११३ ॥

आशीर्वादो गुरूणां च, यदि ममापि जायते ।
तदाहं सर्वकार्येषु, कौशल्यमादधामीति ॥ ११४ ॥

गुरुकृपां विना नैव, जायते लेशमात्रकम् ।
यूयं च सर्वथा धन्याः, येषां गुरुकृपा सदा ॥ ११५ ॥

इत्यादिसर्ववक्तव्यं, मुद्रितं जनपत्रके ।
पश्चाद्भारतयात्रायै, नागरदाससंयुतः ॥ ११६ ॥

सर्वत्र भारते चैत्ये, दर्शनं तेन कारितम् ।
पुस्तकागारदृष्टानि, स्तम्भनादिप्रदेशके ॥ ११७ ॥

पश्चान्मोहमयीग्रामे, आगतो गुरुदर्शने ।
व्याख्यानं योजितं तस्य, जैनधर्मविशालजम् ॥ ११८ ॥

सर्वधर्मेषु साङ्कीर्णं, येन केन प्रकारतः ।
मोक्षादिविषये जैनैरुदारता प्रदर्शिता ॥ ११९ ॥

परमाण्वादिवादानां, सूक्ष्मबुध्या विचारणम् ।
दृश्यते जैनधर्मे च, नान्यत्र सा गवेषणा ॥ १२० ॥

व्याख्याप्रज्ञप्ति प्रज्ञापनादिसूत्रेषु तादृशी ।
चर्चा च विहिता सूक्ष्मबुद्धित्वपारदृश्वरी ॥ १२१ ॥

व्याख्यानं मुद्रितं सर्वं, गुरूणां तत्र देशना ।
सिद्धान्तपरिपूर्णा सा, रहस्यपरिदर्शिनी ॥ १२२ ॥

काश्यां च तादृशी चर्चा, जायते न कदाचन ।
इकोयणचि सूत्राणां, चर्चापि बहुला मता ॥ १२३ ॥

चर्चान्ते गालिदानादि, मुष्टामुष्टि प्रजायते ।
केशाकेशि च कुत्रापि, दण्डादण्डि च कुत्रचित् ॥१२४॥

धर्मवादविधानेन, धर्मतत्त्वप्रदर्शिनी ।
विद्यते नैव चर्चापि, धर्मवादप्रवर्धनी ॥ १२५ ॥

वितण्डावादसम्पूर्णा, कथा यत्र प्रजायते ।
तत्र सद्बोधता नैव, दृश्यते कर्हिचित्खलु ॥ १२६ ॥

धर्मवादे च कर्तव्ये, तत्त्वबोधः प्रजायते ।
अन्यथा तत्त्वनाशः, स्यान्मूलोच्छेदश्च सर्वथा ॥ १२७ ॥

अनेकसुखि भव्यानां, यत्काले मीलनं भवेत् ।
तदा कलहनाशाय, योजितं घृतजल्पनम् ॥ १४८ ॥

वर्धते जल्पने यो हि, पूजयेत्प्रथमं च सः ।
पूजयन्ति परे पश्चादित्येवं योजनं कृतम् ॥ १४९ ॥

पूजकश्च यदा चैकः, तदा कोऽपि न जल्पति ।
समवाये नृणां चैव, जल्पनं सर्वसम्मतम् ॥ १५० ॥

एवं रीत्या च सर्वत्र, जल्पनं जायते किल ।
क्लेशशान्तिश्च सञ्जाता, आयश्च मन्दिरे भवेत् ॥ १५१ ॥

शास्त्रीयं जल्पनं नैव, आयार्थं परिकल्पितम् ।
परिवर्तनताकार्ये, दोषस्तु नैव विद्यते ॥ १५२ ॥

यदि सिद्धान्तमान्यं स्यात्पूजादि प्रविधानके ।
सर्वत्र भारते चैव, एकप्रकारता यथा ॥ १५३ ॥

तथैव पूजनादीनां, जल्पनं चैकरूपकम् ।
भिन्नप्रकारकं चैव, सवत्र परिदृश्यते ॥ १५४ ॥

कुत्रचिद्घृतभावश्च, षोडशरूप्यको मणः ।
एकरूप्यमणश्चैव, अन्यत्र परिदृश्यते ॥ १५५ ॥

अतः शास्त्रीयकं नैव, ज्ञातव्यं जल्पनं सदा ।
परिवर्तने कर्त्तव्ये, दोषलेशो न विद्यते ॥ १५६ ॥

इत्येवं गुरुणा, यावल्लिखितं जैनपत्रके ।
तावत्सागरसाध्वाद्यैः, घोषितं पत्रके खलु ॥ १५७ ॥

अनेकजैनशास्त्रेषु, जलस्नस्य विधानकम् ।
लिखितं परिहर्तव्यं, मिथ्या दुष्कृतता तथा ॥ १५८ ।
विधीयतां त्वया चैव, अन्यथा चर्चनं भवेत् ।
इत्यादि लिखितं तैश्च, गुरोरुपरि तत्क्षणे ॥ १५९ ॥
सर्वत्र घोषितं तैश्च, देवद्रव्यस्य नाशकः ।
काठियावाडश्राद्धानां, भक्षणायैव यत्नता ॥ १६० ॥
देवद्रव्यविनाशाय, यतते सर्वथा किल ।
रक्षणाय प्रयत्नश्च, सर्वेण प्रविधीयताम् ॥ १६१ ॥
देवद्रव्यविनाशस्य, कारका भाविनारकाः ।
तदुपेक्षां च कर्त्तारः, तेऽपि नरकगामिनः ॥ १६२ ॥
अतः सर्वप्रयत्नेन, प्रचारः प्रविधीयताम् ।
अन्यथा तस्य सामर्थ्याद्देवद्रव्यं विनश्यति ॥ १६३ ॥
गालिप्रदानकार्यं च, विहितं मन्दबुद्धिभिः ।
गालिना चोत्तरं नैव, वालितं गुरुणा कदा ॥ १६४ ॥
युक्तिपूर्वेण वक्तव्ये, भीतिश्च नैव विद्यते ।
निर्भीकत्वं च सर्वत्र, गुरुणा परिदर्शितम् ॥ १६५ ॥
अनेकोपायता तैश्च, योजिता जैनशासने ।
कस्मिंश्चिदपि कार्ये च, कौशल्यं नैव धारितम् ॥ १६६ ॥
यत्र यत्क्रियते तत्र, तत्सर्वं प्रकटीयते ।
गुरुणा यद्विधीयेत, तल्लेशो नैव दृश्यते ॥ १६७ ॥

अत्यन्तक्रूरचित्तेन, वादश्च निष्फलो मतः ।
क्लेशसम्पत्तिकार्याणि, जायन्ते च पदे पदे ॥ १२८ ॥

परमाणुविचारश्च, यथा च जैनदर्शने ।
दर्शनान्तरशास्त्रेषु, तादृशो नैव दृश्यते ॥ १२९ ॥

किं वर्णगन्धता युक्तः, कः स्पर्शो रससम्मतः ।
संस्थानं कीदृशं तस्य, केनोत्पत्तिर्भवेत्खलु ॥ १३० ॥

इत्यादि सर्वचिन्ता च, जैनसूत्रेषु कारिता ।
वक्तव्यं दर्शितं, किञ्चिद्व्याख्यानं च समापितम् ॥१३१॥

प्रभूणां जयघोषेण, सर्वे तस्माद्विनिर्गताः ।
जैनधर्मगुरूणां च, स्तुतिः सर्वत्र जायते ॥ १३२ ॥

तस्य सन्मानकार्याय, यशोशीयनसभ्यकाः ।
गुरुपार्श्वे समागत्य, प्रार्थना विहितास्तथा ॥ १३३ ॥

भवदाज्ञानुसारेण, सन्मानं च वितन्यते ।
अस्माभिः शुद्धिस्वान्तेन, अनुज्ञां दीयतां खलु ॥१३४॥

अनुज्ञां च विना नैव, गृहणन्तितेऽपि सज्जनाः ।
तदा च गुरुदेवेन प्रोक्तं धर्मोचित्तं यथा ॥ १३५ ॥

क्रियतां येन जैनानां, शोभा च परिजायते ।
कृतज्ञता च सर्वत्र, जायते भवतां सदा ॥ १३६ ॥

अभिनन्दनपत्रं च, तेन तत्र प्रदापितम् ।
व्याख्यानादिकृतं सर्वैरन्योन्यस्तुतिरूपकम् ॥ १३७ ॥

गुरुदेवशरीरं च, ज्वरेण क्षीणतांगतम् ।
सेवाकरणकार्यस्य, हानिश्च महती भवेत् ॥ १३८ ॥
अनेकवैद्यवर्येण, श्राद्धेन सेवनं कृतम् ।
नानचन्द्रमहाभागैः, डाक्तरैः शुद्धभावतः ॥ १३९ ॥
मोतीलालेन सेवायाः, कार्यं तदा कृतं महत् ।
लक्ष्मीचन्द्रादि भव्यैश्च, धनव्ययः कृतो महान् ॥१४०॥
साधूनां मानसे चिन्ता, गुरूणां ज्वरयोगतः ।
किं कर्त्तव्ये विमूढाः स्युः, तत्काले सर्वसाधवः ॥ १४१ ॥
नानचन्द्रस्य सेवायाः, मूल्यं च नैव जायते ।
चिन्ता च नैव कर्त्तव्या, इत्येवं तेन जल्पितम् ॥ १४२ ॥
स्वल्पकालेन पूज्यानां, देहे व्यथा विनश्यति ।
अवसरो न चिन्तायाः, शोच्यते मानसे कथम् ॥१४३॥
प्रत्यहं गुरुदेवेन, धर्मध्यानं च स्वीकृतम् ।
अन्यत्सर्वं परित्यक्तं, विशुद्धध्यानयोगतः ॥ १४४ ॥
रोगस्य मन्दभावेन, स्वास्थ्यं च विग्रहे खलु ।
सर्वधर्मप्रभावेन, जायते नात्र संशयः ॥ १४५ ॥
एकदा गुरुदेवेन, चर्चा कृता स्वभावतः ।
देवद्रव्यस्य कार्याय, विचारपरिपुष्ट्ये ॥ १४६ ॥
पूजादि सर्वकार्याय, घृतानां जल्पनं भवेत् ।
न्यूनाधिकभावाश्च, दृश्यन्ते जैनशासने ॥ १४७ ॥

प्रश्नकरणपूर्वं च, मुद्रीयते हि चोत्तरम् ।
दृष्ट्वा चमत्कृतिं तेऽपि, विस्मयन्ते च मानसे ॥ १६८ ॥

शुद्धाशयस्वरूपेण, चर्चायाश्च विधानकम् ।
क्रियते गुरुणा नित्य-मन्येषां कूटरूपता ॥ १६९ ॥

धर्मवादस्वरूपेण, चर्चां कर्तुं चिकीर्षया ।
गुरुणा घोषितं तच्च, स्वीकृतं नैव तैस्तदा ॥ १७० ॥

एकतः साधवो नैके, अन्यतो गुरुदेवकाः ।
गुरुरूपेण चान्येऽपि, साधवः सम्मता किल ॥ १७१ ॥

गुरुदेवस्य पुण्येन, सिद्धान्तशुद्धज्ञानतः ।
निरुत्तराश्च ते सर्वे, सञ्जाता युक्तिशून्यतः ॥ १७२ ॥

मोहमयीविहारश्च, गुरूणां परिजायते ।
भायखले समायाताः, सहस्रशो जनास्तदा ॥ १७३ ॥

देशना गुरुदेवानां, अन्तिमा तत्र जायते ।
सर्वेषां शान्तिदानाय, आत्मकल्याणहेतवे ॥ १७४ ॥

यत्र कषायसद्भावः, तत्रैव कर्मबन्धता ।
यत्र कषायमन्दत्वं, तत्रैव चात्मशान्तिता ॥ १७५ ॥

आत्मज्ञानं च येनैव, सम्प्राप्तं धर्मयोगतः ।
पापप्रवेशता तत्र, जायते न कदाचन ॥ १७६ ॥

आत्मनो लक्षणं ज्ञात्वा, धर्ममार्गे प्रवर्त्तताम् ।
अन्यत्सर्वं परित्यज्य, युज्यतां योगमार्गके ॥ १७७ ॥

अशुचिमूतदेहार्थं, मोहं च सर्वथा त्यजेत् ।
आत्मार्थं परिकर्त्तव्यं, ध्यानं च सुखकांक्षिणा ॥ १७८ ॥
इत्येवं देशनां दत्त्वा, गुरुणा मौनमाश्रितम् ।
तदा च श्राद्धवर्येण, कथितं शुद्धभावतः ॥ १७९ ॥
देवद्रव्यस्य चर्चायामाक्षेपा नैक रूपतः ।
अज्ञानिना जनेनैव, कृता तथापि मौनता ॥ १८० ॥
केवलयुक्तिपूर्वेण, सभ्यभाषाप्रयोगतः ।
सर्वेषामुत्तरं चैव, दीयते शांतचेतसा ॥ १८१ ॥
चातुर्मासौ द्वयौ चात्र, श्राद्धप्रार्थनया कृतौ ।
धर्मप्रचारता वह्वी, गुरुदेवेन कारिता ॥ १८२ ॥
धर्मोन्नतिश्च यादृशी, गुरुदेवप्रसादतः ।
संजाता द्वयवर्षेषु, तादृशी नैव कर्हिचित् ॥ १८३ ॥
उपकारश्च युष्माकं, कदापि न विष्मायते ।
पुण्योदयेन चास्माकं, दर्शनं मीलितं शुभम् ॥ १८४ ॥
पुनश्च दर्शनं देयं, इत्येवं प्रार्थना कृता ।
अश्रुपूर्णेन नेत्रेण, ततोऽपि च गृहे गताः ॥ १८५ ॥
स्वामीवात्सल्यता तत्र, सञ्जाता श्राद्धभावतः ।
अनेके च समायाताः, ततश्च माहिमे गताः ॥ १८६ ॥
गोडवाडीयभव्याश्च, वसन्ति भावनायुताः ।
भक्ति च गुरुदेवानां, कुर्वन्ति बहुरूपतः ॥ १८७ ॥

ततः शान्ताक्रुझे ग्रामे, नरोत्तमस्य भावतः।
तिष्ठन्ति गुरवस्तत्र, तन्वन्ति धर्मदेशनाम् ॥ १८८ ॥
वात्सल्यं कारितं तेन, पूजाधानपूर्वकम् ।
विरलापारले तस्मा–द्रामचन्द्रनिकेतने ॥ १८९ ॥
गताश्च तत्र तेनैव, पूजाविविधानकार्यकम् ।
कृतं च भक्तिपूर्वेण, स्वामिवात्सल्यतायुता ॥ १९० ॥
ततोऽन्धेरीपुरे ग्रामे, भोगिलालनिकेतने ।
गुरूणां स्थिरता जाता, श्रावकाश्च समागताः ॥ १९१ ॥
वीरतत्त्वप्रकाशस्य, वार्षिकोत्सवता तदा ।
योजिता श्राद्धसन्दोहैः, परीक्षादानसंयुता ॥ १९२ ॥
व्याख्यानं सर्वछात्राणां, संजातं सर्वसन्निधौ ।
पारितोषिकदानं च, भोगिलालेन योजितं ॥ १९३ ॥
सहस्रशः समायाताः, श्राद्धा मोहमयीपुरात् ।
तेषां च भोजनं तत्र, भोगिलालेन कारितम् ॥ १९४ ॥
ततोऽन्धेरी पुरे वर्ये, प्रभूणां मन्दिरं शुभम् ।
दर्शनं तत्र गत्वैव, कृतं सर्वेण तत्क्षणे ॥ १९५ ॥
नगीनदासचत्येषु, दर्शनं विहितं खलु ।
ततो मल्हाडग्रामे च, देवकरणभावतः ॥ १९६ ॥
तस्य हर्म्ये समुत्तीर्य, व्याख्यानादि कृतं तथा ।
कुत्र देशे च गन्तव्यं, विचारो विहितस्तथा ॥ १९७ ॥

गोर्जरे मङ्गलाद्यैश्च, विहारेच्छा प्रदर्शिता ।
लक्ष्मीचन्द्रेण चागत्य, तत्काले प्रार्थना कृता ॥ १९८ ॥
मया मन्दिरनव्यं च, निष्पादितं हि चाधुना ।
प्रतिष्ठा गुरुदेवानां, हस्तेन कार्यते खलु ॥ १९९ ॥
अतः कृपां विधायैव, उग्रपुरे प्रयाणकम् ।
विधीयतां च भावेन, गुरुणा च दयालुना ॥ २०० ॥
प्रार्थना निष्फला नैव, जायते च कदाचन ।
गुरुणा प्रार्थना तस्य, स्वीकृत्य विहृतिः कृता ॥ २०१ ॥
घाटकोपरसद्ग्रामे, ततश्च गुरवो गताः ।
छोटालालादि श्राद्धेन, भक्तिभावश्च दर्शितः ॥ २०२ ॥
भव्यजिनालयं दृष्ट्वा, कृता च चैत्यवन्दना ।
उपाश्रये समागत्य, व्याख्यानं च कृतं तदा ॥ २०३ ॥
सुधारणं च धर्मस्य, कृतमनेकरूपतः ।
सङ्घभक्तिश्च तेनैव, कारिता शुभभावतः ॥ २०४ ॥
पूजाप्रभावना भव्या, विहिता शुभयोगतः ।
ततश्च गुरुदेवेन, विहारो विहितः खलु ॥ २०५ ॥
शाहपुरे ततो गत्वा, भीमडी च ततः परम् ।
देवेन्द्रदर्शनं कृत्वा, प्रदत्ता धर्मदेशना । ॥ २०६ ॥
जैनशालां विधायैव, धार्मिकस्य प्रपाठनम् ।
आवश्यकादिशुद्धेन, घोषेण क्रियते ततः ॥ २०७ ॥

चांदवडादिग्रामे च, गत्वा दत्ता च देशना ।
प्रभूणां दर्शनं कृत्वा, शिक्षादानं विधीयते ॥ २०८ ॥
ततो घुटीकनामाख्य-ग्रामे ततश्च कावनौ ।
ततो नाशिकतीर्थेषु, गत्वा च दर्शनं कृतम् ॥ २०९ ॥
चन्द्रप्रभप्रभूणां च, यात्रा तत्तीर्थमध्यके ।
विना गत्वा न जायेत, अतस्तत्रैव गम्यते ॥ २१० ॥
तीर्थकल्पादिशास्त्रेषु, नाशिकतीर्थवर्णनम् ।
रत्नमयं च तद्बिम्बं, तद्ध्यानं सुखशान्तिदम् ॥ २११ ॥
माले ग्रामे ततो गत्वा, दर्शनं विधिपूर्वकम् ।
कृत्वा च देशना दत्ता, प्रसिद्धा धर्मवर्द्धिनी ॥ २१२ ॥
श्रावकनाख्यशालायां, सार्वजनीनबोधनम् ।
गुरुणा साधुभिश्चैव, व्याख्यानं प्रविधीयते ॥ २१३ ॥
धूलीया नगरे तस्मा-द्गताश्च गुरव खलु ।
मन्दिरं विहितं श्राद्धैः, गत्वा च दर्शनं कृतम् ॥ २१४ ॥
नव्यमन्दिरनिर्माणं, कारितं नत्थु हस्ततः ।
अधस्ताद्भूमिभागे च, भांडागाराणि नैकशः ॥ २१५ ॥
चौरभीतिप्ररक्षार्थै, सर्वेषां च धनं किल ।
अत्रैव परिक्षेप्तव्यं, इतीच्छा मानसे यदा ॥ २१६ ॥
तदैव तादृशं स्थानं, निर्माप्यते च तेन वै ।
अन्यथा लघुस्थानेषु, कथं तादृग् विधीयते ॥ २१७ ॥

आगन्तुकाश्च सर्वे ते, गौर्जराः कच्छवासिनः ।
नव्यमन्दिरनिर्माणं, कुर्वन्ति तादृशं कथम् ? ॥ २१८ ॥
अतीवोच्चतमं ज्ञेयं, मूलमन्दिरदर्शनम् ।
वृद्धाशक्तजनानां च, जायते नैव दर्शनम् ॥ २१९ ॥
द्रव्यं सर्वं व्यर्थीभूतमपूर्णं मन्दिरं भवेत् ।
नत्थुनां मृत्युता योगे, पूर्णं नैव प्रजायते ॥ २२० ॥
चातुर्मासाय विज्ञप्तिः, श्रावकेन कृता तदा ।
अत्याग्रहवशेनैव, स्वीकृता गुरुणा खलु ॥ २२१ ॥
मन्दिरकार्यपूर्णाय, उपदेशश्च कारितः ।
चातुर्मासे च तत्सर्वं, क्रियते चोत्तरं तथा ॥ २२२ ॥
अमलनेरभव्यानां, भावना धर्मपोषिका ।
तेषां च प्रार्थना योगा-द्गताश्च गुरवस्ततः ॥ २२३ ॥
वैद्यादि सर्वसामग्री, भक्तिभावविधायिका ।
योजिता श्राद्धवर्येण, विहितं मासकल्पकम् ॥ २२४ ॥
सखारामीय मेलायां, षष्टिसहस्रमानवाः ।
आगता बाह्यस्थानेषु, व्याख्यानं तत्र योजितम् ॥२२५॥
सर्वधर्मस्य लाभाय, मार्गानुसारिदेशना ।
कृता च गुरुदेवेन, पण्डिता नैकशो मता ॥ २२६ ॥
स्याद्वादखण्डनायैव, उद्यमो विहितश्च तैः ।
मङ्गलन्यायसामीप्ये, कियच्चिष्ठन्ति ते चिरम् ? ॥ २२७ ॥

एकान्तवादिनां पार्श्वे, युक्तिश्च चैकदेशीया ।
अनेकदृष्टिरूपेण, वस्तूनां दर्शनं नहि ॥ २२८ ॥

नम्रीभूतास्ततस्तेऽपि, कुर्वन्ति गुरुवन्दनाम् ।
स्तुतिं च जैनधर्मस्य, तन्वन्ति ते पुनः पुनः ॥ २२९ ॥

दाक्षिणत्यास्ततो नष्टाः, पण्डिता न्यायपाठिनः ।
हस्तयुगलयोगेन, प्रार्थयन्ति क्षमां तथा ॥ २३० ॥

कुसंपताऽत्र सर्वेषां, जैनानां मानसे तदा ।
गुरुणामुपदेशेन, निष्कासिता च भावतः ॥ २३१ ॥

मासिकी स्थिरतां कृत्वा, शालादीनां सुधारणा ।
विहिता गुरुदेवेन, शेशयिके ततो गताः ॥ २३२ ॥

नवसंख्याकपूज्यश्च, लविंगं तादृशं मतम् ।
सर्करा नवसङ्ख्याकाः, फलादीनां तु का कथा?॥ २३३ ॥

गायन्ति वल्लयोगेन, उच्चस्वरेण घोषणाम् ।
शुष्कपूजां च तां दृष्ट्वा, गुरुणा जल्पितं तदा ॥ २३४ ॥

उपलम्भं च दत्त्वैव, हितशिक्षाविधानकम् ।
पूजाविधिश्च तत्पार्श्वे, दर्शिता सूत्रयोगतः ॥ २३५ ॥

ततश्च धूलिआग्रामे, चातुर्मासाय गम्यते ।
सखारामस्य हर्म्येषु, तदाज्ञयैव स्थीयते ॥ २३६ ॥

मन्दिरपूर्णकर्त्तव्ये, गुरुणा कथितं तदा ।
यद्द्रव्यं विद्यते तत्र, उपयोगो विधीयताम् ॥ २३७ ॥

सर्वगृहस्थपार्श्वेषु, यथाशक्ति च गृह्यताम् ।
तदा कच्छीयश्राद्धाश्च, तत्कार्यात्तु पृथग्भूताः ॥ २३८ ॥
सखारामस्य तज्ज्ञेयं, तेनैव परिपूर्यताम् ।
अस्माभिश्च कथं द्रव्यं, तन्मन्दिरे निक्षिप्यते ॥ २३९ ॥
शान्तभावेन तेषां च, ज्ञापनं च कृतं तदा ।
न मानितं च तैस्तत्र, कषायवृद्धियोगतः ॥ २४० ॥
मरुदेशीयसच्छ्राद्धैः, स्वीकृता योजना खलु ।
मन्दिरकार्यपूर्णाय, प्रयत्नो विहितस्तदा ॥ २४१ ॥
चातुर्मासे च सम्पूर्णे, विहारो गुरुणा कृतः ।
शिरपुरे च गत्वैव, स्थिरता विहिता तथा ॥ २४२ ॥
विजयवीरसूरीणां, आगतिर्गुरुसम्मुखे ।
गृहीत्वा सर्वश्राद्धांश्च, आगत्य वन्दना कृता ॥ २४३ ॥
अन्योऽन्यं प्रेमसद्भावः, दृष्टश्च संघसज्जनैः ।
पुरप्रवेशकार्यं च, कृतं प्रबलभावतः ॥ २४४ ॥
पद्मप्रभप्रभूणां च कृता च, चैत्यवन्दना ।
अन्यस्मिन् मन्दिरे गत्वा, दर्शनं विहितं तदा ॥ २४५ ॥
शिरपुरीयका श्राद्धाः, विवेकेन समन्विताः ।
विशुद्धा गुरुभक्तिश्च, दर्शिता धर्मकार्यतः ॥ २४६ ॥
उपधानस्य मालार्थं, गुरूणां प्रार्थना कृता ।
समयाभावतस्तस्मा—द्विहारो विहितस्तदा ॥ २४७ ॥

कति श्राद्धा विहारे च, गुरुणा सह चागताः ।
मण्डपदुर्गयात्रायै, प्रयाणं च कृतं खलु ॥ २४८ ॥
गुर्जरीग्रामतः सर्वे, गता मण्डपदुर्गके ।
शरीरशक्तिराहित्यात्तत्रैव, गुरवः स्थिताः ॥ २४९ ॥
मङ्गलो गुरुसेवायां, गतो न मण्डपे तदा ।
यात्रा च सर्वसाध्वाद्यैः, विहिता शुभभावतः ॥ २५० ॥
इन्द्रपुरी समायाताः, श्रावका भक्तिभावतः ।
आगत्य प्रार्थना तैश्च, कृता तत्रैव गम्यते ॥ २५१ ॥
इन्द्रपूर्यां च गन्तव्यं, गुरुणा प्रथमं खलु ।
पश्चादन्यत्र ग्रामेषु, गम्यतां च सुखेन वै ॥ २५२ ॥
बालचन्द्रादयः सर्वे, आगताः संघनायकाः ।
अतीव भक्तिभावेन, कुर्वन्ति वन्दनां तदा ॥ २५३ ॥
उपदेशस्य लाभाय, चलन्ति पादयोगतः ।
वार्त्तालापविनोदेन इन्द्रपूर्यां समागताः ॥ २५४ ॥
राज्ञां च सर्वसामग्री, संयुता गुरुसम्मुखे ।
प्रवेशो विहितस्तैश्च, अन्ये सर्वे चमत्कृताः ॥ २५५ ॥
दिगम्बराश्च तत्पार्श्वे, आगताः श्रुतिहेतवे ।
अधिकारिमहाभागाः, तेऽपि तत्र समागताः ॥ २५६ ॥
सहस्रशो जनैनैव, संयुक्ताः प्रभुमन्दिरे ।
कृत्वा च दर्शनं तस्मा–दुपाश्रये समागताः ॥ २५७ ॥

माङ्गलिकी च सद्व्याख्या कृता धर्मोपदेशतः।
कल्याणकारिणी ज्ञेया, देशना धर्मपोषिका ॥ २५८ ॥
मध्याह्ने धर्मचर्चायै, नैके जनाः समागताः।
दिगम्बरादिकाः सर्वे, कुर्वन्ति प्रश्नवार्त्तिकाम् ॥ २५९ ॥
प्रश्नोत्तरं च कृत्वैव, संजाता निश्चिता हृदि।
उपकारं च मन्वानाः, सर्वे स्वीयगृहे गताः ॥ २६० ॥
सार्वजनीनिका व्याख्या, कृता प्रसिद्धस्थानके।
अधिकारिजनाः सर्वे, अन्ये नगरसम्भवाः ॥ २६१ ॥
भारतधर्मव्याख्याने, को धर्मः शिवकारणम्।
समालोचनकर्त्तव्ये, शुद्धोधर्मोऽवशिष्यते ॥ २६२ ॥
स्त्रीशूद्रौ नाधियेते, इति वै वैदिकी श्रुतिः।
शूद्राणां मतिदातव्ये, नरकगामिता स्मृता ॥ २६३ ॥
षण्णां वै पदार्थानां, तत्त्वज्ञानेन मुक्तिता।
वैशेषिकेषु ज्ञातव्या, षोडशतत्त्वज्ञानतः ॥ २६४ ॥
नैयायिकमते मुक्तिः, प्रकृत्यादेश्च ज्ञानतः।
सांख्यदर्शनमुक्तिश्च, इत्येवं कल्पना सका ॥ २६५ ॥
स्त्रीशूद्राणां च शास्त्रस्य, अध्यापने वै दोषता।
कथमायाति वक्तव्यं, विचार्य बुद्धिशालिना ॥ २६६ ॥
जन्मना जायते शूद्रः, संस्काराद्‌द्विज उच्यते।
वेदपाठी भवेद्विप्रः, ब्रह्म जानाति ब्राह्मणः ॥ २६७ ॥

इति श्रुत्यनुसारेण, सर्वे यूयं च शूद्रकाः ।
संस्काराद्यदि कथ्येत, कथं तेषु न विद्यते ॥ २६८ ॥

स्त्रीणां च देशनादाने, अध्यापने न हानिता ।
हानि चेत्तर्हि वक्तव्या, अन्यथा पक्षपातता ॥ २६९ ॥

संकोचो यत्र धर्मे स्या-दुपादेयः स नो मतः ।
ज्ञानदर्शनचारित्रं, यत्र स्यात्तत्र मुक्तिता ॥ २७० ॥

शूद्राणां मतिदाने च, यदि नरकगामिता ।
जन्मना सर्वे च शूद्राः स्युः, तेषां संस्कारता कथम् ? ॥२७१॥

संस्कारे मतिदानं स्यात्ततो नरकगामिता ।
अतः संस्कारता नैव, कर्त्तव्या केन कर्हिचित् ॥ २७२ ॥

संस्कारं च विना नैव, द्विजत्वं हि कदाचन ।
विना द्विजत्वकर्त्तव्ये, विप्रता नैव जायते ॥ २७३ ॥

विना विप्रेण संस्कारः, क्रियते नैव केनचित् ।
अतोऽपि शूद्रता चैव, सर्वस्मिन्परितिष्ठति ॥ २७४ ॥

अतो धर्मः स विज्ञेयः, सर्वथा फल्गुरूपकः ।
जैनधर्मेषु सर्वेषामधिकारश्च विद्यते ॥ २७५ ॥

पठने पाठने चैव, चतुर्णामधिकारता ।
चतुर्णां मोक्षता ज्ञेया, स्त्रीणामपि च सम्मता ॥ २७६ ॥

रत्नत्रयं च यत्रैव, विद्यते तत्र मुक्तिता ।
स्त्रीषु वा नृषु यत्रैव, मुक्तिस्तत्र कथं न सा ॥ २७७ ॥

तत्त्वज्ञानस्य मात्रेण, मुक्तिरतु नैव जायते ।
रत्नत्रयस्य सद्भावे मुक्तिरतु प्रतिपादिता ॥ २७८ ॥

जहा खरो चन्दन भारवाही,
भारस्स भागी न हु चंदणस्स ।
तहा खु नाणी चरणेन हीणो,
नाणस्स भागी न हु सु गइए ॥ २७९ ॥

इत्यादि देशनां श्रुत्वा, सर्वेश्चान्ते चमत्कृता ।
न श्रुतं कुत्रचित्तादृग्, पक्षपातविहीनकम् ॥ २८० ॥

सर्वेण तत्र सम्मील्य, स्थैर्यार्थं प्रार्थना कृता ।
अष्टदिवसपर्यन्तं, स्थास्यामि नगरे तव ॥ २८१ ॥

व्याख्यानं तत्र कृत्वैव, आगता स्वीयस्थानके ।
प्रातःकाले शरीरं स्वं, दृश्यते रोगसंयुतम् ॥ २८२ ॥

शरीरे शोफता जाता, अशक्ति बहुला मता ।
बालचन्द्रेण तज्ज्ञात्वा, गुरूणां कथितं खलु ॥ २८३ ॥

संजातं च शरीरे किं, रात्रौ गुरो ! तवाधुना ।
तत्काले वैद्यमाहूय, दर्शितं विग्रहं तथा ॥ २८४ ॥

नैवशान्तिश्च सञ्जाता. शरीरे लेशमात्रतः ।
वैद्यसम्मेलनं तत्र, कारितं गुरुदर्शने ॥ २८५ ॥

सर्वेषामनुमत्या च, भेषजं तेन कारितम् ।
ततो नैव शरीरेषु, शान्तिश्च परिजायते ॥ २८६ ॥

धूलिआ नगराच्चैव, आहूता देशपाण्ड्यकाः ।
तस्योपचारकार्येण, सुखेषु शोफता गता ॥ २८७ ॥
नरेन्द्रडॉक्तरस्यैव, तत्पार्श्वे परिरक्षणम् ।
गोसावी नामकस्यैव, तेनाऽप्यनुभवः कृतः ॥ २८८ ॥
गोसावी प्रतिकाराय, करोत्युद्यमतां तदा ।
मुम्बइजातरोगश्च, नष्टश्च नैव सर्वथा ॥ २८९ ॥
शनैः शनैः प्रयोगेन, रोगशान्तिश्च जायते ।
अतस्त्वरा न कर्त्तव्या, रोगसच्छान्तिकाङ्क्षिणा ॥ २९० ॥
आहारः सर्वथा नष्टः, जातं दुर्बलविग्रहम् ।
साधूनां सुखशान्तिश्च, तदा तत्र न विद्यते ॥ २९१ ॥
मंगलं च समाहूय, कथितं गुरुणा तदा ।
काश्यां त्वया च गन्तव्यं, शालोद्धाराय तत्क्षणे ॥ २९२ ॥
रोगिणं च गुरुं मुक्त्वा, कथं मया हि गम्यते ?
कृतघ्नता च तादृक्षीममापि शोभते नहि ॥ २९३ ॥
सेवाकरणकालेषु, मुक्त्वा गुरुं यो गच्छति ।
कृतघ्नः स सदा ज्ञेयः, पातकी सर्वथा मतः ॥ २९४ ॥
अतो मया न गन्तव्यमु-पायेन च केनचित् ।
तदा च गुरुणा प्रोक्तं, श्रूयतां वचनं मम ॥ २९५ ॥
यत्रैव गुरुदेवाज्ञा, तत्र नैव कृतघ्नता ।
आज्ञाविहीनकर्त्तव्ये, तिष्ठन्ति सर्वदा च सा ॥ २९६ ॥

वंगदेशसमुद्धारे, जिज्ञासा मानसे मम ।
शालोद्धारं विधायैव, सवैश्च तत्र गम्यते ॥ २९७ ॥

सहस्रशो जनानां च, धर्मप्राप्तिस्तु जायते ।
प्रचारो जैनधर्मस्य, जायते नात्र संशयः ॥ २९८ ॥

शाक्तमतप्रचारेण, हिंसानां च प्रवेशता ।
विपुला तत्र संजाता, देशनातः विनक्ष्यति ॥ २९९ ॥

त्वया प्रागेव गन्तव्य-मा गमिष्यामि प्रायशः ।
उग्रपुरे प्रतिष्ठां च, कारयित्वा ततः परम् ॥ ३०० ॥

महत्पुण्यं च गन्तव्ये, जायते नात्र संशयः ।
गुर्वाज्ञा च त्वया मान्या, कृतज्ञतां समिच्छता ॥ ३०१ ॥

त्वया विना च तत्कार्यं, केनचिन्न विधीयते ।
अतो योग्यं च विज्ञाय, आज्ञा मयापि दीयते ॥ ३०२ ॥

गुर्वाज्ञां च शिरोधार्य, कथितं मङ्गलेन वै ।
आशिर्वादं तवाग्रे च, सम्प्राप्य गम्यते मया ॥ ३०३ ॥

तव सेवाविधानाय, सहायकरणे तथा ।
साधुत्रयी च प्रेष्येत, सर्वदा शान्तसेवधिः ॥ ३०४ ॥

जयन्तविजयश्चैकः विशालगुरुभक्तराट् ।
तृतीयोऽपि लघुर्ज्ञेयः, चमरेन्द्रश्च नामतः ॥ ३०५ ॥

वैशाखशुक्लपक्षे च, तृतीयायां तिथौ तथा ।
निष्कासितं मुहूर्त्तं, तत्काशिगमनहेतवे ॥ ३०६ ॥

वलूटग्रामवास्तव्यः, प्राग्वाटकुलदीपकः ।
वनेचन्द्रात्मजश्चैव, दीक्षादीनोऽपि निर्णीतः ॥ ३०७ ॥

अष्टाह्निकोत्सवस्तत्र, कारितः सङ्घसज्जनैः ।
पूजाप्रभावनाभक्तिः, जायते शुद्धभावतः ॥ ३०८ ॥

वार्षिकदानदातव्ये, शिबिका योजिता शुभा ।
हस्त्यादि सर्वसामग्री, आनीताः संघसज्जनैः ॥ ३०९ ॥

अत्याडम्बरपूर्वेण, दीक्षामहोत्सवः कृतः ।
गुरुदेवस्य हस्तेन, दीक्षान्तिमा च जायते ॥ ३१० ॥

हिमांशुविजयाभिख्या, योजिता गुरुणा तदा ।
महामङ्गलकारित्वं, कार्यं तेन कृतं तदा ॥ ३११ ॥

सोढं चातीव कष्टं, प्राग् दीक्षार्थं तैश्च भावुकैः ।
त्यागोऽपि तीव्रभावेन, विहितो गुरुसन्निधौ ॥ ३१२ ॥

सार्धवत्सरपर्यन्तं, गुरूणां निकटे स्थितः ।
यदाज्ञा पितॄणां प्राप्ता, तदा प्राप्तं व्रतं खलु ॥ ३१३ ॥

सागरानन्दसूरिश्च, ह्यनेकसाधुसंयुतः ।
इन्द्रपुरे समायातः, कथितं बालचन्द्रकैः ॥ ३१४ ॥

अशान्तिः गुरुदेवानां, शरीरे महती भवेत् ।
दर्शनार्थं च नायातः, व्यवहारो न पालितः ॥ ३१५ ॥

व्यवहारो गृहस्थानामन्योऽन्यं च सेवनं ।
साधूनां नैव तादृक्षी, दृश्यते व्यवहारता ॥ ३१६ ॥

सुखशान्तिप्रपृच्छार्थं, आगता न भवादृशाः ।
अयोग्यं च कृतं कार्यमत्र जनेन कथ्यते ॥ ३१७ ॥
लज्जया चागतास्तत्र, तिष्ठन्ति गुरुसन्निधौ ।
विचारे मे च भिन्नत्वं, नान्यत्र परिगम्यते ॥ ३१८ ॥
परस्परं च सम्मील्य, पृष्टा च सुखशान्तिता ।
वार्त्ता विनोदभावेन, क्षणमात्रं च जायते ॥ ३१९ ॥
डॉक्तरं प्रतिसम्प्रोक्तं, निरोगत्वं विधीयताम् ।
अनेन साधुना सार्धं, शास्त्रार्थस्तन्यते मया ॥ ३२० ॥
बालचन्द्रेण सम्प्रोक्तं, मच्छिष्याः समर्थकाः ।
करिष्यन्ति च शास्त्रार्थं, तत्कार्ये नैव संशयः ॥ ३२१ ॥
शास्त्रार्थपत्रिका शिष्यैः, प्रेषिताः पश्चद्वारतः ।
उत्तरे मौनतां कृत्वा, कुर्वन्ति ते विहारकम् ॥ ३२२ ॥
मण्डपदुर्गमध्येषु, गत्वा च जैनमन्दिरे ।
पूजारिणा च सार्धं वै, संक्लेशश्च कृतस्तदा ॥ ३२३ ॥
महत्कष्टं च तत्रैव, धर्मसंकटरूपकम् ।
आपतितं च तत्काले, बालचन्दश्च प्रेषितः ॥ ३२४ ॥
गुरुदेवेन सम्प्रोक्तं, येन केन प्रकारतः ।
गत्वा तत्रैव तेषां च, मोचनं प्राग् विधीयताम् ॥ ३२५ ॥
गुरुप्रबलपुण्येन, मोचितो बहुकष्टतः ।
शासनहितकार्यं च, कृत्वा तत्र समागतः ॥ ३२६ ॥

बालचन्द्रेण सम्प्रोक्तं, भवदाज्ञानुसारतः ।
सर्वं शुभं च संजातं, गुरुदेवप्रतापतः ॥ ३२७ ॥
पूजारिणश्च जैनानां, विद्यन्ते द्वेषिणः समे ।
रक्षणं तत्र तेषां वै, तीर्थहानिविधानकम् ॥ ३२८ ॥
होलकरो महाराजः, गुरुदर्शनहेतवे ।
आगतो डॉक्तरेणैव सार्धं च गुरुसन्निधौ ॥ ३२९ ॥
दर्शनं गुरुदेवानां, कृत्वा शृणोति देशनाम् ।
अमृतपानसादृक्षी आत्मनि मन्यते तदा ॥ ३३० ॥
चातुर्मासाय विज्ञप्तिः, राज्ञा तदा च कारिता ।
अत्याग्रहवशेनैव, सम्प्रोक्तं शुभभावतः ॥ ३३१ ॥
राज्ञो गमनकालेषु, अश्वरत्नोपहारकम् ।
पूर्णचन्द्रेण तत्काले, प्रदत्तं दर्शनागतौ ॥ ३३२ ॥
संघेन सर्वरूपेण प्रार्थना च कृता तदा ।
मण्डपदुर्गयात्रायै, ततश्च गुरवोगताः ॥ ३३३ ॥
अश्रुपूर्णेन नेत्रेण, मङ्गलविजयादिभिः ।
विहारः काशिगन्तव्ये, कृतो गुरुनिदेशतः ॥ ३३४ ॥
आषाढशुक्लपक्षे च, द्वितीयायां तिथौ तथा ।
काश्यां प्रवेशकार्यं च, विहितं श्रावकैः सह ॥ ३३५ ॥
मण्डपदुर्गतीर्थस्य, यात्रा च गुरुणा कृता ।
पूर्वं भग्नविशेषं च, तन्नगरं प्रविलोकितम् ॥ ३३६ ॥

शक्त्यभावे विहारे च, कर्त्तव्ये शोफरोगता ।
पुनरपि च संजाता, विहारश्च ततः कृतः ॥ ३३७ ॥
इन्द्रपुरीयभक्तानां, प्रार्थना नैव स्वीकृता ।
उग्रपुरेषु गन्तव्ये, प्रयाणं बहुवेगतः ॥ ३३८ ॥
मक्षितीर्थस्य सद्यात्रां, कृत्वा च शाहजापुरे ।
सारङ्गपुरग्रामे च, ततोऽपि ब्यावरे गताः ॥ ३३९ ॥
सर्वत्र मन्दिराणां च, दर्शनं चैत्यवन्दना ।
क्रियते भावपूर्वेण, ततः पेंची ततो वीने[1] ॥ ३४० ॥
रुटीयाइ गुनाग्रामे, ततः शिवपुरीं गताः ।
तत्रत्याः श्रावकाः सर्वे, भक्तिभावेषु तत्पराः ॥ ३४१ ॥
विहारं कर्त्तुमिच्छायाः, संरोधश्च कृतस्तदा ।
श्रावकभक्तियोगेन, वायूनामनुकूलतः ॥ ३४२ ॥
डॉक्तरस्यानुकूल्यं च, रोगानुभवयोगतः ।
सेवाकरणकार्यं च, कर्पूरेणैव स्वीकृतम् ॥ ३४३ ॥
टोडरकर्णमल्लाश्च, हिम्मतपुष्पचन्द्रकाः ।
सम्भूय श्रावकैः सर्वैः, प्रार्थना बहुला कृता ॥ ३४४ ॥
लक्ष्मीचन्द्रेण चागत्य, तेषां दृष्टा च भावना ।
गुरूणां तत्र स्थातव्ये, तेनापि प्रार्थना कृता ॥ ३४५ ॥

१ वीनागंजे ।

वयं चात्रागमिष्यामः, गुरुसेवनहेतवे ।
चातुर्मासं करिष्यामः, निश्चितं सर्वसन्निधौ ॥ ३४६ ॥

गौर्जराः सौरताः केचि–दुग्रपुरीयश्रावकाः ।
गुरुसेवा विधातव्ये, आगता भक्तिभावतः ॥ ३४७ ॥

उपचारस्य बाहुल्यं, नकवैद्योपदेशतः ।
कारितं तत्र संघेन, रोगाणां शान्तिहेतवे ॥ ३४८ ॥

असाध्यरोगतां ज्ञात्वा, कर्पूरेणैव ज्ञापितम् ।
भक्तिभावो विधातव्यः, रोगनाशो न जायते ॥ ३४९ ॥

धर्मध्यानं च स्वान्तेषु, प्रत्यहं शुभभावतः ।
सम्पूर्णदिवसे सूत्रस्वाध्यायादि विधीयते ॥ ३५० ॥

साधूनां च तदा प्रोक्तमन्या वार्त्ता न तन्यताम् ।
समाधिध्यानकार्यं च, पूर्णभावेन तन्यते ॥ ३५१ ॥

आराधना विधातव्ये, साधूनां कथितं तथा ।
परिपाटिक्रमेणैव, आराधना च कार्यताम् ॥ ३५२ ॥

चतुःशरणपूर्वं च, कथ्यतां च पुनः पुनः ।
अर्हतां सिद्धदेवानामाचार्यादिपदान्विताम् ॥ ३५३ ॥

परमेष्ठिनमस्काराः, क्रियंते च पुनः पुनः ।
अन्तिमाराधना नित्यं, कार्यतां सुखहेतवे ॥ ३५४ ॥

तादृशं पुस्तकं पार्श्वे, रक्षित्वा वाचयन्ति ते ।
स्वयं वा पर सामीप्ये, कुर्वन्ति गुरुवाचनाम् ॥ ३५५ ॥

अनेकश्रावकास्तत्र, आगच्छन्ति च दर्शने ।
धर्मलाभं विना नैव, जल्पन्ति ते कदाचन ॥ ३५६ ॥

मङ्गलविजयादीनां, दलं पठन्ति ते तदा ।
गृहस्थानां दलं नैव, पठन्ति तेऽपि तत्क्षणे ॥ ३५७ ॥

वङ्गदेशसमुद्धारे, भावना नैव पूर्यते ।
इत्येवं कार्यशेषत्वं, दूयते मानसे ततः ॥ ३५८ ॥

अधिकारिजनाः सर्वे, चातुर्मासे समागताः ।
गुरूणां दर्शनार्थैव, आगच्छन्ति क्रमे क्रमे ॥ ३५९ ॥

सील्वनलेविनां तत्र, आगतिर्गुरुदर्शने ।
फ्रांसराज्येनिवासश्च, तेषां हि परिजायते ॥ ३६० ॥

सस्त्रीकेन समायाताः, गताश्च राज्यमन्दिरे ।
प्राघूर्णकाश्च राज्ञां वै, भूत्वा तत्र समागताः ॥ ३६१ ॥

दर्शनं गुरुदेवानां, कर्त्तव्येच्छा गरीयसी ।
प्रातःकाले च तेषां वै, दर्शनं नैव जायते ॥ ३६२ ॥

देहशैथिल्ययोगेन, परिस्फुटं न जप्यते ।
अष्टौ घण्टीयपश्चाच्च, स्वच्छं सर्वं प्रजायते ॥ ३६३ ॥

सस्त्रीकेन समागत्य, गुरूणां दर्शनं कृतम् ।
अतीव भावपूर्वेण, जिज्ञासा परिदर्शिता ॥ ३६४ ॥

गुरुणां यदि चेच्छास्यात्किंचित्तदा तु पृच्छ्यते ।
कथितं गुरुदेवेन, यथा सुखं विधीयताम् ॥ ३६५ ॥

लक्षणं जैनधर्मस्य, कथ्यतां स्फुटरूपतः ।
येन मसाऽपि बोधः स्याद्दर्शनं सफलं भवेत् ॥ ३६६ ॥
स्याद्वादो वर्तते यस्मिन्पक्षपातो न विद्यते ।
नास्त्यन्यपीडनं किञ्चिज्जैनधर्मः स उच्यते ॥ ३६७ ॥
स्याद्वादस्य स्वरूपं च, कथितं बुद्धियोगतः ।
द्विघंटाकालपर्यन्तमस्खलितस्वरूपतः ॥ ३६८ ॥
आत्मानं च समालम्ब्य, नित्यानित्यादिरूपता ।
दर्शिता गुरुदेवेन, श्रुत्वा तेऽपि चमत्कृता ॥ ३६९ ॥
अन्त्यावस्थासमापन्ने, अर्थगाम्भीर्यदेशना ।
तादृशी खलु नान्यत्र, धर्मेषु परिजायते ॥ ३७० ॥
जैनधर्मे च सप्तार्थाः, कथिताः पूर्णरूपतः ।
मोक्षोपयोगिनस्तेऽपि, सर्वेषां सुखहेतवे ॥ ३७१ ॥
वस्तुस्वभावधर्मत्वं, कथितं जैनशासने ।
रत्नत्रितयरूपत्वं, आत्मनो लक्षणं मतम् ॥ ३७२ ॥
गुणेषु चानुरागत्वं, पक्षपात स सम्मतः ।
गुणद्वेषि स्वरूपत्वं, पक्षपातो न शोभते ॥ ३७३ ॥
प्रमत्तयोगयोगेन, प्राणिनां परिपीडनम् ।
निषिद्धं जैनशास्त्रेषु, वीतरागेण सर्वदा ॥ ३७४ ॥
अहिंसा परमो धर्मः, जैनेषु सार्थको मतः ।
अन्यत्र नामतश्चैव, दर्शितः स्वीयशास्त्रतः ॥ ३७५ ॥

---

१ सप्तपदार्थाः

संसारे ये मया दृष्टाः, तेषु च धर्मसूरयः ।
प्रथमाङ्के च ज्ञातव्याः, प्रज्ञाचारित्रयोगतः ॥ ३७६ ॥
यत्र प्रज्ञापि विद्येत, नो तत्र साधुता खलु ।
बाह्या च साधुता यत्र, दृष्टा प्रज्ञा न तत्र वै ॥ ३७७ ॥
सम्यक् प्रज्ञापि सर्वत्र, विद्यते न कदाचन ।
प्रज्ञाचारित्रसद्योगः, गुरुषु च विलोक्यते ॥ ३७८ ॥
मोहनलालगांधी च, द्वितीयाङ्के विधीयते ।
रवीन्द्रनाथटागोरः, तृतीयाङ्केषु गण्यते ॥ ३७९ ॥
लौकिकमान्यतायोगात्कथितं च मया खलु ।
गुरूणां तूलना नैव, जायते हि जगत्त्रये ॥ ३८० ॥
तादृक् स्तुतिं विधायैव, करोति याचनां ततः ।
श्रावके शिष्यता यादृक्, तादृग्मयि विधीयताम् ॥ ३८१ ॥
मस्तकोपरि–वासक्षेप प्रदानं वितन्यताम् ।
मदीया याचना नैव, निष्फला परिजायते ॥ ३८२ ॥
वासक्षेपं समादाय, शिरसि दीयते तदा ।
धर्मलाभं च सम्प्राप्य, मुदितः स्वगृहे गतः ॥ ३८३ ॥
अतीव व्याधिकोपेन, मूर्च्छा तत्र समागता ।
कर्पूरेण तदागत्य, उपचारश्च कारितः ॥ ३८४ ॥
मोहमय्यादिके ग्रामे, तारैश्च ज्ञापितं तदा ।
व्याधिप्रकोपबाहुल्यं, वाराणस्यां च मुख्यतः ॥ ३८५ ॥

१. भाषामां टेलीफोन ।

मूर्च्छायाः प्रतिकारे च, स्वच्छता च समागता ।
समाधिर्गुरुदेवेन, तत्क्षणे धारितः शुभा ॥ ३८६ ॥
वार्त्तालापं परित्यज्य, मौनमेव समाश्रितम् ।
शुभासनं विधायैव, हृध्धृतं सिद्धचक्रकम् ॥ ३८७ ॥
चतुःशरणमादाय, जिनराजस्तवावलिः ।
क्रियते शुद्धस्वान्तेन, नासाग्रे नेत्रता कृता ॥ ३८८ ॥
सार्धाहोरात्रपर्यन्तं, गुरुणा ध्यानमाश्रितम् ।
चतुरशीति जीवानां, योनीनां लक्षभेदकम् ॥ ३८९ ॥
त्रिकरणत्रियोगेन, स्मृत्वा च परिक्षाम्यते ।
विशेषेण कृता तेन, क्षामणा येन जल्पेन ॥ ३९० ॥
नामग्राहं गृहीत्वैव, शुद्धस्वान्तेन तत्क्षणे ।
पूर्वमुनिवरेन्द्राणां, ध्यानं च शुभचेतसा ॥ ३९१ ॥
तृषायाः परिलग्ने च, काले तैश्च विधीयते ।
अर्हन्नका मुनीन्द्राश्च, अवन्तिसुकुमारकाः ॥ ३९२ ॥
मेतार्यमुनिवर्याश्च. सुकोसलादयस्तथा ।
स्कन्धकमुनिवर्याश्च, गजसुकुमारादयः ॥ ३९३ ॥
स्वनामधन्यकाः सर्वे, शुद्धचारित्रपालकाः ।
पणीकृत्य स्वप्राणांश्च, आश्रयन्ति स्वधर्मताम् ॥ ३९४ ॥
चर्मणां च समुत्तारे, आरार्टिर्न कृता मनाक् ।
तैरेव पुरुषैर्धन्यैः, धात्री सा पवित्रीकृता ॥ ३९५ ॥

येषां च नामध्यानेन, कल्याणं परिजायते ।
तैरेव वीरदेवैश्च, पोढं कष्टं च कीदृशम् ॥ ३९६ ॥

वलं जगद्ध्वंसनरक्षणक्षमं,
कृपा च सा संगमके कृतागसि ।
इतीव सञ्चिन्त्य विमुच्य मानसं,
रुपव रोपस्तव नाथ! निर्ययौ ॥ ३९७ ॥

कपायेन प्रपूर्णत्वं, येषां च दोपपूर्णता ।
तैश्च वाहुल्यदोपेण हहा भवो विडम्बितः ॥ ३९८ ॥

कल्याणमेकदा भावि, निस्तारो नैकदा भवेत् ।
तृपासहनकाले च, आकुल्यं मानसे कथम् ॥ ३९९ ॥

निकटभव्यजीवानां, समता सर्वदा भवेत् ।
क्रोधाग्निना मया दग्धं, दष्टो मानाहिना सदा ॥ ४०० ॥

मायाजालेषु वद्धोऽस्मि, लोभाजगरदंष्ट्रता ।
अहो! मोहेन संसारः, स्वाधीनस्वीकृतः सदा ॥ ४०१ ॥

धन्यास्ते पुरुपा ज्ञेया, यैश्च, मोहः विनाशितः ।
स्वराज्यं यैश्च सम्प्राप्तं, स्मर्तव्यास्ते नराः सदा ॥ ४०२ ॥

इत्यादि भावनां कृत्वा, पडावश्यकता कृता ।
वीरवीरेति कर्त्तव्ये, प्राणाश्च त्याजितास्तदा ॥ ४०३ ॥

चतुर्दश्याः प्रभाते च, मङ्गलवारके खलु ।
इन्दुनिधानसर्पि, प्रातिहार्यं समे तथा ॥ ४०४ ॥

गुरूणां स्वर्गवासत्वं, सञ्जातं भारते तदा ।
शोकाग्निज्वलितस्तत्र, वाराणस्यां त्वराऽऽगतः ॥ ४०५ ॥

स्वर्गे सङ्गीतसामग्री, आनन्दोत्सवता बहु ।
जयजयेति शब्दानां, ध्वनिस्तत्र प्रजायते ॥ ४०६ ॥

तत्काले सर्वश्राद्धाश्च, देशान्तरात्समागताः ।
बहुमूल्यं विमानं च, निर्मापितं च तत्क्षणे ॥ ४०७ ॥

चन्दनादिकसामग्री, घृतादिना च संयुता ।
स्नानालंकारता तत्र, कृता च श्रावकैस्तदा ॥ ४०८ ॥

कर्पूरदक्षु वर्षा च, कृत्वा जल्पति तत्क्षणे ।
सेवा मे निष्फला जाता, मां त्यक्त्वा गुरवो गताः ॥४०९॥

साधूनां हृदयं शून्यं, सञ्जातं तद्वियोगतः ।
किं कर्त्तव्ये च मूढाः स्युः, जल्पन्ति नैव किञ्चन ॥४१०॥

अहो मे मन्दभाग्यत्वं, गुरूणां देशना कदा ।
अस्माकं पुण्यहीनानां, मीलिष्यतीति कथ्यताम् ॥४११॥

गुरुसेवा परोधर्मः, जगति नैव विद्यते ।
प्राप्तोऽपि पुण्यहीनैश्च, अस्माभिर्हारितः खलु ॥ ४१२ ॥

वैराग्यवासना द्वारा, पश्चात्स्वान्तं च वारितम् ।
यो जातो म्रियते सोऽपि, संसारे निश्चितं सदा ॥ ४१३ ॥

कथं शोकस्तु कर्त्तव्यः, तत्स्थाने भवभावना ।
भाव्यते भव्यजीवैश्च, सर्वेषां तादृशी स्थितिः ॥४१४॥

इत्यादिभावनां कृत्वा, पश्चात्क्रिया ततः परम् ।
क्रियते गुरुदेवानां, अश्रुपूर्णितनेत्रतः ॥ ४१५ ॥
सङ्घन स्वीय कृत्यं, तत्सर्वं कृतं च तत्क्षणे ।
तेनाऽपि शोकपूर्णेन, हृदयेन विधापितम् ॥ ४१६ ॥
पञ्चशतानि ताराणां, प्रेपितानि च श्रावकैः ।
सर्वत्र शोकसञ्चारः, सञ्जातः सर्वभारते ॥ ४१७ ॥
जर्मनी–फ्रांस–देशेषु, इटल्यमरिकादिषु ।
लण्डनादिप्रदेशेषु, ताराश्च कारितास्तथा ॥ ४१८ ॥
अग्निसंस्कारकार्याय, भूमिका तत्स्थराजभिः ।
विशाला परिदत्ता च, विशुद्धहृदयेन च ॥ ४१९ ॥
तन्मातुर्भूमिका दूरे, अटव्यां मीलिता तदा ।
गुरूणां धूम्रगन्त्याश्च, स्थितिस्थाने च दापिता ॥४२०॥
सर्वत्र नगरे शोकः, राजप्रजासु सर्वथा ।
श्मशाने दाहकार्याय, गुरूणां नीयते तदा ॥ ४२१ ॥
पञ्चसहस्रसङ्ख्याकाः, जनास्तत्र समागताः ।
विमानोत्पाटनार्थेन, अहमहमिका तथा ॥ ४२२ ॥
जय नन्देति घोषेण, जयभद्रेतिचोषतः ।
आकाशं गुञ्जितं सर्वैः, मधुरध्वनिभिस्तथा ॥ ४२३ ॥
शिबिकां तत्र गत्वैव, रक्षिता च ततः परम् ।
दाहकार्यस्य कर्तव्ये, निरुत्साहाः समे तदा ॥ ४२४ ॥

गुरूणां च कथं दाहः, मया खलु विधीयते ।
आचारोऽयं गृहस्थानामतो वितन्यन्ते खलु ॥ ४२५ ॥

अग्निदाहं विधायैव, आगताः श्रावकाः समे ।
देववन्दनकार्याणि, कुर्वन्ति साधवः समे ॥ ४२६ ॥

पश्चात्क्रियाऽपि सर्वा सा, कारिता तत्र तत्क्षणे ।
उपदेशादिदानं च, विहितं शोकपूर्वकम् ॥ ४२७ ॥

लक्ष्मीचन्द्रादिश्राद्धाश्च, ततः केचित्समागताः ।
गुरूणां स्वर्गवासं च, श्रुत्वा तेऽपि चमत्कृताः ॥४२८॥

अहो मे मन्दभाग्यत्वं, न जातं गुरुदर्शनम् ।
अग्निसंस्कारस्थानेषु, गत्वा तत्रैव रोदितम् ॥ ४२९ ॥

समाधिमन्दिरस्यैव, योजना तत्र कारिता ।
विशालं च करिष्यामः, गुरुभक्तिप्रयोगतः ॥ ४३० ॥

आगच्छति धनं येषां, भक्तितस्तस्य गृह्यते ।
अन्यत्सर्वं मदीयं च, तत्रोपयुज्यते खलु ॥ ४३१ ॥

पूर्णिमादिवसे तैश्च, मुहूर्तं मन्दिरस्य वै ।
कृतं च स्वीयहस्तेन, शुभयोगे च तत्क्षणे ॥ ४३२ ॥

मन्दिरकार्यप्रारब्धं, तत्रत्यश्रावकैः किल ।
मूर्त्तिनिर्मापनायैव, जयपुरे च जल्पितम् ॥ ४३३ ॥

प्रतिबिम्बानुसारेण, मूर्त्तीनां च विधापनम् ।
यदि स्यात्तर्हि गृह्येत, अन्यथा न कदाचन ॥ ४३४ ॥

वेदी च सुन्दराकारा, निर्माप्यते च तत्र वै ।
व्यवस्था सङ्घहस्तेषु, लक्ष्मीचन्द्रैः समर्पिता ॥ ४३५ ॥
वाराणस्यां च शोकाग्निः, मानसे मङ्गलादिके ।
प्रज्वलितश्च वेगेन, सञ्जाता शून्यमानसाः ॥ ४३६ ॥
गुरूणां विरहो नैव, सह्यते साधुभिस्तदा ।
मां मुक्त्वा च कथं यूयं, गता हि स्वर्गधामनि ॥ ४३७ ॥
प्रेषितश्च कथं देवैः, वाराणस्यां वयं किल ।
अपराधश्च को मह्यं, स्पष्टरूपेण कथ्यताम् ? ॥ ४३८ ॥
दीक्षादिनाच प्रारम्भ्य, अद्यावधि न सर्वदा ।
विरहो गुरुदेवानां, सोढो मादृशपामरैः ॥ ४३९ ॥
वाराणस्यां च गन्तव्ये, मङ्गलाद्यैः प्रजल्पितम् ।
वयं च नो गमिष्यामः, गुरून्मुक्त्वा कदाचन ॥४४०॥
तदा त्वयापि सम्प्रोक्तं, आगमिष्यामि शीघ्रतः ।
अतो मयाऽपि तत्रैव, गतं च साधुभिः सह ॥ ४४१ ॥
वचनं परिदत्त्वैव, पालितं न भवादृशैः ।
अतोऽत्र किं मया कार्यं, हृदयं दूयते मुहुः ॥ ४४२ ॥
देववन्दनकार्याय, सङ्घस्तत्र समागतः ।
उच्चारणं न जायेत, मुखतः कस्यचित्तदा ॥ ४४३ ॥
सङ्घेन कथितं तत्र, रुध्यते चेद्भवादृशैः ।
अस्माकं पामराणां च, तदा च किं भविष्यति ॥ ४४४ ॥

हृच्छोकं च परित्यज्य, क्रियतां देवचन्दना ।
हृदयं कठिनं कृत्वा, कारितं देववन्दनम् ॥ ४४५ ॥
उपदेशं विधायैव, अष्टाह्निकमहोत्सवः ।
कारितस्तत्र सङ्घेन, गुरुविरहकार्यके ॥ ४४६ ॥
पण्डिता गुरुदेवानां, श्रुत्वा च स्वर्गवासताम् ।
दुःखितास्तेऽपि संज्ञाताः, स्मृत्वा तदुपकारकम् ॥४४७॥
सर्वेषां मानसे शोकः, काश्यां च परिजायते ।
मङ्गलसाधुपार्श्वे च, समागच्छन्ति ते जनाः ॥ ४४८ ॥
दुःखितहृदये तेषां, बोधनं क्रियते च तैः ।
शालापि छात्रराहित्याच्छून्या भूतनिवासिनी ॥ ४४९ ॥
भोगिलालेन सर्वं तदकार्यं कारितं खलु ।
निष्कासिताश्च सच्छात्राः, द्रव्यं सर्वं विनाशितम् ॥४५०॥
दुर्बुद्धित्वप्रयोगेन, कार्यं च तादृशं कृतम् ।
जैनेतरमनुष्याणां, जातं निवासस्थानकम् ॥ ४५१ ॥
शालोपयोगिवस्तूनां, सङ्घोपयोगिनां तथा ।
मन्दिरयोग्यवस्तूनां, विनाशस्तेन कारितः ॥ ४५२ ॥
अतिपरिश्रमेणैव, गुरूणामुपदेशतः ।
सञ्चयस्तत्र वस्तूनां, सङ्घेनैव कृतस्तथा ॥ ४५३ ॥
कुलकलङ्कदातॄणां, तेषां च का गतिर्भवेत् ।
पूजारी वटुकनामाख्यः, अयोग्येषु शिरोमणिः ॥ ४५४ ॥

तस्यैव प्रेमपात्रः सः, धर्मनिन्दाविधायकः ।
आशातना प्रभूणां च, करोति मूर्खराट् सदा ॥ ४५५ ॥
मण्डलं च ततः पश्चाद्वाराणस्यां समागतम् ।
स्थानस्य विरहेणैव, मीलुपुरे स्थितं तदा ॥ ४५६ ॥
तिष्ठति पारले पूर्वं, मोहमयी समीपतः ।
मङ्गलविजयस्यैव, पार्श्वे च प्रेषितं तदा ॥ ४५७ ॥
गुरूणां विरहेणैव, प्रतिष्ठा कृतिहेतवे ।
समाधिमन्दिरस्यैव, विहारोऽपि प्रजायते ॥ ४५८ ॥
काशिनरेशसन्देशः, मीलनाय समागतः ।
समस्तसाधुछात्राश्च, गतास्तत्स्थानके तदा ॥ ४५९ ॥
नरेन्द्रेण समागत्य, गुरूणां स्वर्गवासता ।
जाता तद्विषये तेन, शोकोऽतीव प्रदर्शितः ॥ ४६० ॥
उपकारी महात्मा स, शुद्धधर्मोपदेशकः ।
तादृशो न श्रुतो दृष्टः, अद्यावधि मया खलु ॥ ४६१ ॥
अहिंसा-धर्मबोधाय, हिंसानिवृत्तिहेतवे ।
गृहीतो गुरुणा जन्म, भारते दोषवारके ॥ ४६२ ॥
मादृशामुपदेशस्य, दाता चाद्य गुरुर्मतः ।
साधूनां सहवासस्तु, मया कृतो न कर्हिचित् ॥ ४६३ ॥
प्रशमरतिशास्त्रे च, शान्तिर्या च समर्पिता ।
तादृशी नैव चान्यत्र, मीलिता मे कदाचन ॥ ४६४ ॥

१ वीरतत्त्वप्रकाशकमण्डलं ।

अहो से मन्दभाग्यत्वं, दर्शनं न पुनः कृतम् ।
तेषां ममोपकारस्तु, विस्मियते न कर्हिचित् ॥ ४६५ ॥

मङ्गलविजयेनैव, दत्ता च देशना तदा ।
तच्छ्रुत्वा च नरेन्द्रेण, धर्मश्रद्धाप्रवर्धिता ॥ ४६६ ॥

धर्मलाभं ततो दत्त्वा, साधवो निर्गताः किल ।
वाराणस्यां च गत्वैव, विहारो ज्ञापितो मुदा ॥ ४६७ ॥

आशातनादि सर्वं च, यथा शक्त्या विनाशितम् ।
तीर्थस्य परिरक्षार्थं, दत्ता च देशना तदा ॥ ४६८ ॥

जन्मकल्याणकं कृत्वा, चन्द्रावत्यां गता यदा ।
शिवपुरीसमायातः, मुन्निलालस्तु श्रावकः ॥ ४६९ ॥

अन्ये च श्रावकाः सार्धं, विहाराय समागताः ।
शिवपुर्यां च गत्वैव, दृष्टं समाधिस्थानकम् ॥ ४७० ॥

उपाध्यायेन्द्रसाध्वाद्याः, मीलिता बहुभावतः ।
वन्दनादिविधायैव, पृष्टा च स्वर्गवार्तिका ॥ ४७१ ॥

सर्वं विस्तृतरूपेण, पाठकेनैव ज्ञापितम् ।
शतशः पत्रमध्ये च, आगतं गुरुजीवनम् ॥ ४७२ ॥

शतशः टेलिफोनाश्च, देशान्तरात्समागताः ।
सहस्रशोकपत्राणि, आगतानि च तत्क्षणे ॥ ४७३ ॥

महच्चित्रं च तज्जातं, यद्दिने स्वर्गवासता ।
तद्दिने मोहमय्यां च, समाचारो विलोकितः ॥ ४७४ ॥

प्रतिग्रामं च तद्दिने, आपणं बन्धकारितम् ।
शोकशोभा च सर्वत्र, भृता तत्रत्यमानवैः ॥ ४७५ ॥

अष्टाह्निकोत्सवाद्यं च, कार्यं सर्वत्र जायते ।
प्रभुभक्तिविशेषेण, कारिता श्रावकैस्तदा ॥ ४७६ ॥

प्रतिष्ठा कार्यकर्त्तव्ये, लक्ष्मीचन्द्रेण धीमता ।
स्वद्रव्यस्य व्ययस्तत्र, ज्ञापितः सर्वसन्निधौ ॥ ४७७ ॥

पत्रिका स्वाभिधानेन, निष्कासिता च वेगतः ।
नैकग्रामात्समायाताः, श्रावका भक्तिहेतवे ॥ ४७८ ॥

माघशुक्लस्य पूर्णिमा, निर्धारिता तिथिस्तथा ।
शुद्धक्रिया विधातारः, आगतास्तत्र मण्डपे ॥ ४७९ ॥

आग्रादिल्लीगिरिस्थाश्च, वाराणस्याश्च श्रावकाः ।
जयपुरीयमेवाडाः, मरुदेशीयसज्जनाः ॥ ४८० ॥

सौराष्ट्रा गौर्जरास्तत्र, मोहमयीसमागताः ।
सहस्रशो जनाः सर्वे, आगता गुरुदर्शने ॥ ४८१ ॥

पारस्याङ्गलदेशीयाः, तेऽपि तत्र समागताः ।
गुरुदेवप्रतिष्ठार्थं, उत्साहः सर्वमानसे ॥ ४८२ ॥

हिन्दुजातिजनाः सर्वे, सेवाकार्ये च तत्पराः ।
अधिकारिजनास्तेऽपि, सेवार्थे चागता खलु ॥ ४८३ ॥

१ गोपगिरि—ग्वालियर ।

इटलीदेशतो मूर्तिः, धातुमयी समागता ।
जयपुरात्समायाता, मूर्त्तिप्रस्तरनिर्मिता ॥ ४८४ ॥
स्थापनीया च का मूर्त्तिः, समाधिमन्दिरे खलु ।
इति शङ्का च सर्वेषां, मानसे परिजायते ॥ ॥ ४८५ ॥
सर्वेण तत्र सम्मील्य, जयपुरीया निर्णीता ।
देशीयशिल्परक्षार्थं, देशीया तत्र स्थाप्यते ॥ ४८६ ॥
सुनापालामहाभागः, सज्जनेषु शिरोमणिः ।
गुरुभक्तिविधानाय, ददाति तत्क्षणे ॥ ४८७ ॥
महोपकारसञ्जातः, गुरूणां च ममोपरि ।
अज्ञानकर्दमाच्चैव, उद्धृतो गुरुबोधतः ॥ ४८८ ॥
अस्थिमज्जासु सर्वत्र, प्रविष्टो नैव गच्छति ।
अधन्यो दर्शनं तेषां, कर्त्तुं तत्रैव नागतः ॥ ४८९ ॥
विशालं हृदयं तेषामर्थगाम्भीर्यदेशना ।
अगणितगुणानां च, आकरा गुरवो मताः ॥ ४९० ॥
आबालकालिकी ब्रह्मचारिणी श्राविका मणिः ।
साऽपि तत्र समायाता, प्रतिष्ठाकार्यहेतवे ॥ ४९१ ॥
कालिकातासु स्थित्वैव, चातुर्मासं विधाय च ।
प्रतिष्ठायै समायाताः, साध्व्यश्च लाभहेतवे ॥ ४९२ ॥
चतुर्विधश्च संघोऽपि, सञ्जातस्तत्र तत्क्षणे ।
पूजा प्रभावना नित्यं, सर्वोत्तमा प्रजायते ॥ ४९३ ॥

हीराकुंवरभव्यात्मा, श्राविकावृन्दयोगतः ।
सुरताच्च समायाता, मन्छुभ्रातृकेन संहः ॥ ४९४ ॥

स्वयंसेवकसच्छ्राद्धाः, आगता भक्तिहेतवे ।
रतिलालादयो मुख्याः, कार्यकरणतत्पराः ॥ ४९५ ॥

रथयात्रोत्सवस्तत्र, अपूर्वः परिजायते ।
तद्ग्राममन्दिरस्यैव, प्रतिष्ठा च प्रभोस्तथा ॥ ४९६ ॥

ध्वजादण्डसमारोपे, प्रतिष्ठाऽपि च तद्दिने ।
अपूर्वभावभक्त्या च, रथयात्रा मनोहरा ॥ ४९७ ॥

सम्पूर्णनगरे भ्रान्त्वा, वाद्यादिगीतपूर्वकम् ।
सङ्गीतमण्डली तत्र, पादलिप्तात् समागता ॥ ४९८ ॥

अध्यात्मभजनेनैव, आनन्दिताः समे जनाः ।
समाधिमन्दिरे तस्मा–द्रथयात्रा समागता ॥ ४९९ ॥

स्नात्रादिकं विधायैव, प्रभूणां मन्दिरे गता ।
लश्करमण्डलीमिश्र, सङ्गीतं श्रावितं शुभम् ॥ ५०० ॥

प्रभूणां च प्रतिष्ठायै, घृतादिजल्पनंकृतम् ।
द्रव्यसमागमस्तत्र, सञ्जातः साधुबोधतः ॥ ५०१ ॥

समाधिममन्दिरे चैव, प्रतिष्ठा श्रेष्ठिना तदा ।
अपूर्वोत्साहपूर्वेण, कारिता शुभभावतः ॥ ५०२ ॥

वासक्षेपः क्रिया तत्र, साधुभिः सर्वसन्निधौ ।
वर्धमानीयविद्याभिः, कृता च प्रतिमोपरि ॥ ५०३ ॥
प्रभुमन्दिरमध्ये च, प्रतिष्ठाकृतिहेतवे ।
सकलसङ्घसार्धं च, साधवस्तत्र सङ्गताः ॥ ५०४ ॥
प्रतिष्ठा कारिता सङ्घैः, वासक्षेपविधिस्तथा ।
साधुभिश्च कृतस्तत्र, आत्मकल्याणहेतवे ॥ ५०५ ॥
चैत्यवन्दनकार्यादि, कृतं च शान्तिपूर्वकम् ।
उपवासतपस्तत्र, विहितं नैकसज्जनैः ॥ ५०६ ॥
उपदेशश्च मध्याह्ने, साधूनां परिजायते ।
समाधिमन्दिरायैव, जातं द्रव्यं महत्तदा ॥ ५०७ ॥
दशसहस्रसङ्ख्याकाः, श्रेष्ठिनां द्रव्यसद्व्ययः ।
मन्दिरे खलु सञ्जातः, प्रतिष्ठा च पृथग्मता ॥ ५०८ ॥
आशारामात्मजेनैव, विट्ठलेन समर्पितम् ।
द्विशतरूप्यकानां च, पूजायै पट्टकादिकम् ॥ ५०९ ॥
गोपगिरिमहाराजैः, शिन्दे माधवनामकैः ।
भूमिकारूप्यकानां च, त्रिसहस्रं समर्पितम् ॥ ५१० ॥
सर्वजातीयविज्ञानां, द्रव्योपहार संमतः ।
देशविदेशिनां चैव, भेदभावो न किञ्चन ॥ ५११ ॥
पञ्चाशत्सहस्राणां, मुद्राणामागतिः खलु ।
तद्व्ययो मन्दिरे ज्ञेयः, धर्मसूरिविभूषिते ॥ ५१२ ॥

सर्वेषां नमनं तत्र, राज्ञीनां च विशेषतः ।
प्रत्यहं परिजायेत, गुरुदेवमाहात्म्यतः ॥ ५१३ ॥
संस्थोद्घाटनता सर्वा, साक्षात्किंवा परम्परा ।
गुरुदेवोपदेशेन, सर्वत्र परिजायते ॥ ५१४ ॥
गुरुदेवेषु संस्थोपज्ञत्वं च जैनशासने ।
विद्याप्रचारकार्यं च, मूलमन्त्रसमं मतम् ॥ ५१५ ॥
ज्ञानमन्दिरनामाख्यं, गुरुदेवोपदेशतः ।
उंग्र वेलनगञ्जे च, लक्ष्मीचन्द्रस्य मन्दिरे ॥ ५१६ ॥
पञ्चविंशति साहस्रं, पुस्तकानां च सङ्ग्रहः ।
लिखितमुद्रितानां च, जैन–जैनेतरस्य वै ॥ ५१७ ॥
यावच्च गुरुदेवेन, सङ्ग्रहश्च कृतस्तथा ।
तावत्पुस्तकसन्दोहः, तत्रैव परिरक्षितः ॥ ५१८ ॥
विशालं भव्यस्थानं च, श्रेष्ठिना परिनिर्मितम् ।
चारुरूपेण तच्छिष्यैः, स्थापितं तत्र सर्वथा ॥ ५१९ ॥
यशोविजयनामाख्या, ग्रन्थमाला हि चागता ।
वाराणसीयस्थानाच्च, भावनगरग्रामके ॥ ५२० ॥
पुस्तकानि च तत्रैव, गुरुणा लिखितानि च ।
तच्छिष्य लिखितान्येव, मुद्रितानि च सन्ति वै ॥ ५२१ ॥
श्रेष्ठिनिर्मापितं चैव, उग्रपुरे च मन्दिरम् ।
प्रतिष्ठा तस्य कर्त्तव्ये, पाठकादिकसाधवः ॥ ५२२ ॥

१ उग्रपुरे

अत्याडम्बरपूर्वेण, प्रतिष्ठा सर्व साधुभिः ।
कारिता बहु हर्षेण, महामहोत्सवेन च ॥ ५२३ ॥
रचना पञ्चतीर्थानां, समवसरणं तथा ।
भावश्चानेकरूपेण, पट्टेषु परिचित्रितः ॥ ५२४ ॥
एकलक्ष्यं च रूप्यानां, प्रतिष्ठायां व्ययः कृतः ।
नवदिवसपर्यन्तं, स्वामिवात्सल्यता कृता ॥ ५२५ ॥
वैशाखशुक्लपञ्चम्यामाचार्यस्य पदोत्सवः ।
कारितः श्रेष्ठिवर्येण, वेलनगञ्जमध्यके ॥ ५२६ ॥
इन्द्रविजयसाधूनामाचार्यपददापनम् ।
मङ्गलविजयस्यैव, उपाध्यायत्वस्थापनम् ॥ ५२७ ॥
कारितं विधिपूर्वेण, श्रीसङ्घेन सुलग्नके ।
अनेकवस्त्रवस्तूनामुपहारः समागतः ॥ ५२८ ॥
निषिद्धः किन्तु तत्सर्वं, वस्त्रयुगलरक्षितम् ।
बहूनां सङ्ग्रहे कार्ये, ममता तत्र जायते ॥ ५२९ ॥
साधूपयोगि सङ्ग्राहे, संयमरक्षणं भवेत् ।
विजयेन्द्रेण संयुक्तं, सूरि सन्नामस्थापितम् ॥ ५३० ॥
तद्दिने ज्ञानसंस्थाया, उद्घाटनं च जायते ।
व्याख्यानं तत्र साधूनां, जायते शुद्धभावतः ॥ ५३१ ॥
सप्तम्यां च प्रतिष्ठायाः, कार्यं च सूरिहस्ततः ।
सञ्जातं शुभलग्नेषु, ततश्च शान्तिस्नात्रता ॥ ५३२ ॥

सङ्घेन सहितं तत्र, चैत्यवन्दनकार्यकम् ।
बृहच्छान्तेश्च पाठेन, सर्वं तत्र समापितम् ॥ ५३३ ॥
विधिकर्तृयतीनां च, आह्वानं स्वीयग्रामतः ।
साधवो न हि कर्त्तारः, वासक्षेपस्य दायकाः ॥ ५३४ ॥
व्रतज्ञा व्रतधर्तारः, भवभीरुत्वसंयुताः ।
विशुद्धाचारसम्पन्नाः, विधिकारकसम्मताः ॥ ५३५ ॥
यतिवर्गेषु तन्नैव, दृश्यते च कदाचन ।
परन्तु द्रव्यलोभेन, कारयन्ति विधिं खलु ॥ ५३६ ॥
गुरुदेवस्य शिष्येषु, कीर्तिविजय आद्यकः ।
द्वितीयांके च ज्ञातव्या, श्रीविजयेन्द्रसूरयः ॥ ५३७ ॥
ऐतिहासिककार्येषु, कौशल्यं वर्तते सदा ।
समाचारादिपत्राणां, पाठनं बहुप्रेमतः ॥ ५३८ ॥
यादृशी प्राच्यसामग्री, समस्ति जैनशासने ।
प्रायेण ज्ञानता तस्याः, विद्यते बुद्धियोगतः ॥ ५३९ ॥
भावविजयनामाख्यः, साधुश्च परिवर्तते ।
त्रयः शिष्याश्च ज्ञातव्याः तस्यैव परिचारकाः ॥ ५४० ॥
मङ्गलविजयो ज्ञेयः, तृतीयाङ्के च साधुषु ।
न्यायव्याकृतिसाहित्य–सिद्धान्तपरिज्ञायकः ॥ ५४१ ॥
द्रव्यानुयोगग्रन्थाश्च, लिखिता तेन नैकशः ।
नवविंशति-सङ्ख्याका, केचिच्च मुद्रिताः किल ॥ ५४२ ॥

१ श्रेष्टि वर्येण लक्ष्मीचन्द्रेण फलोदितः

क्षमाकराख्यतच्छिष्यः, विद्यते निपुणः सदा ।
गुरुभक्तौ सदा लीनः, जीर्णोद्धारादि कार्यके ॥ ५४३ ॥
भक्तिविजयसाधुश्च, चतुर्थाङ्के समागतः ।
पंन्यासपदता तस्य, अधुनाचार्यभाग् भवेत् ॥ ५४४ ॥
विंशतिः साधवस्तस्य, विद्यन्ते चाधुना खलु ।
क्रियाकाण्डेषु कौशल्यं, वर्तते सर्वदा तथा ॥ ५४५ ॥
विद्याविजयनामाख्यः, साधुः शासनदीपकः ।
व्याख्यानकारको ज्ञेयः, ग्रन्थानां लेखकस्तथा ॥ ५४६ ॥
जैनदर्शनसाधूनां, मध्ये व्याख्यानकारकः ।
तत्सदृशो द्वितीयश्च, प्रायेण विद्यते नहि ॥ ५४७ ॥
लेखको नैव तादृक्षः, देशकालानुसारतः ।
ग्रन्थनिर्माणकौशल्यमद्भुतं तस्य वर्तते ॥ ५४८ ॥
हिमांशुविजयो ज्ञेयः, तच्छिष्यः पण्डितः खलु ।
न्यायसाहित्यतीर्थत्वं, विद्यते बुद्धियोगतः ॥ ५४९ ॥
ग्रन्थनिर्माणकार्यं च, अधुना परितन्यते ।
व्याख्यानादिककार्येषु, नैपुण्यं परिवर्त्तते ॥ ५५० ॥
रत्नविजयसत्साधुः, योगीन्द्रो योगनिष्ठकः ।
समाधिध्यानसम्पन्नः, गुरुभक्तिपरायणः ॥ ५५१ ॥
अष्टादश च वर्षाणि, ढुण्ढके गालितानि च ।
पश्चात्संवेगतापन्नं, साधुत्वं परिपालितम् ॥ ५५२ ॥

कीर्त्तिरत्नौ च साधू द्वौ, स्वर्गवासं गतौ किल ।
रत्नविजयसाधूनां, विद्यन्ते पुस्तकानि च ॥ ५५३ ॥
जयन्तविजयः साधुः, शान्तप्रकृतिकः सदा ।
गुरुभक्तेश्च कर्त्तव्ये, विद्यतेभावना शुभा ॥ ५५४ ॥
शिलालेखादिसङ्ग्राहे, स्थिरबुद्धिनियोगतः ।
कौशल्यं सर्वदा ज्ञेयं, विनयानम्रकः सदा ॥ ५५५ ॥
आबूप्रभृतिग्रन्थानां, लेखकश्च निरूपितः ।
विशालविजयाभिख्यः, तच्छिष्यः परिजायते ॥ ५५६ ॥
सुभाषिताख्यग्रन्थस्य, चतुर्भागाश्च योजिताः ।
मुद्रितौ तत्र वर्तेते, द्वौ भागौ चाधुना खलु ॥ ५५७ ॥
न्यायविजयसाधुश्च, सदा न्यायप्रवीणभाग् ।
तर्ककौशल्यग्रन्थाश्च, निर्मितानैकसङ्ख्यकाः ॥ ५५८ ॥
प्रचण्डवक्तृता तस्य, न्यायतीर्थविशारदः ।
विचारेषु च स्वातन्त्र्यं, वर्तते सर्वदा खलु ॥ ५५९ ॥
देवेन्द्रधरणेन्द्रौ द्वौ, गुरुशिष्यौ च सम्मतौ ।
निपुणाः स्वस्वकार्येषु, गुरुध्यानपरायणौ ॥ ५६० ॥
प्रशिष्या दर्शितास्तस्मा–दन्ये च सन्ति साधवः ।
नामोल्लेखेन नात्रैव, दर्शिता ग्रन्थगौरवात् ॥ ५६१ ॥
विशालसाधुसन्दोहं, मुक्त्वा च गुरवो गताः ।
जैनशासनकार्येषु, दत्त्वा गुरूपदेशनम् ॥ ५६२ ॥

स्थापिता गुरुणा शाला, मोहमय्यां च या खलु ।
ततः सापि गता काश्यां, तत उग्रपुरे गताः ॥ ५६३ ॥
छात्रवृद्धिस्ततो नैव, सञ्जाता दैवयोगतः ।
छात्राश्चातीव दूरेषु, नागच्छन्ति च भारतः ॥ ५६४ ॥
लक्ष्मीचन्द्रादिसच्छ्राद्धैः, साधुभिश्च विचारितम् ।
किं कर्त्तव्यं च शालायाः, उपायः कोऽपि नो भवेत् ॥५६५॥
सर्वानुमतियोगेन, शिवपुर्यां समानीता ।
यदि चेत्तत्र वृद्धिः स्यात्तर्हि च सुन्दरं भवेत् ॥ ५६६ ॥
अन्यथोत्थापनं श्रेष्ठ–मित्येवं परिशोचितम् ।
शिवपुर्यां समानीता, वृद्धिकरणहेतवे ॥ ५६७ ॥
गुरुदेवस्य पुण्येन, स्वल्पमात्रेण कालिके ।
वृद्धिं गता च तत्रैव, विद्यार्थिधनसञ्चयात् ॥ ५६८ ॥
जर्मनीतः समायाता, क्रोझे नामाख्या वैदुषी ।
पारसी जैनशास्त्राणां, पठने भारते खलु ॥ ५६९ ॥
पारसी स्वल्पकालेन, पठिता बुद्धियोगतः ।
जैनसाहित्यपाठाय, शिवपुर्यां समागता ॥ ५७० ॥
गुरुदेवस्य सा भक्ता, प्रागपि स्वीयदेशके ।
आगत्य धर्मसाहित्यं, पठितं साधुसन्निधौ ॥ ५७१ ॥
विद्याविजयबोधेन, व्रतेच्छा परिजायते ।
ज्ञातं च व्रतसर्वस्वं, सम्यग्दर्शनपूर्वकम् ॥ ५७२ ॥

व्यावरग्राममध्ये च, समारोहस्य पूर्वकम् ।
आगत्य व्रतस्वीकारः, कृतश्च शुद्धियोगतः ॥ ५७३ ॥
नैकोपहारसामग्री, आगता बहुदेशतः ।
श्राविका प्राप्तिकालेषु, सुभद्रानाम योजितम् ॥ ५७४ ॥
देव्यन्तं परिज्ञातव्यं, दत्तं च व्रतसप्तकम् ।
आचार्यविजयेन्द्रेण, अनेकजनसंयुतैः ॥ ५७५ ॥
व्रतानां सान्त्वनं तत्र, जयन्तेनैव कारितम् ।
परिस्फुटं कृतं तत्र, मङ्गलविजयैस्तथा ॥ ५७६ ॥
जैनसङ्घेन तत्सार्धं, भोजनादिकसत्क्रिया ।
प्रभुपूजादिभक्तिश्च, दर्शिता समभावतः ॥ ५७७ ॥
भेदभावस्य वार्ताऽपि, केनाऽपि न प्रदर्शिता ।
समानधार्मिके सर्वे, मादृशं परिशोभते ॥ ५७८ ॥
विद्यार्थिवर्गसाकं च, शिवपुर्यां ततः पुनः ।
आगत्य पठनं नित्यं, करोति बहुभावतः ॥ ५७९ ॥
स्थाल्यां च भोजनं चैव, स्वहस्तेन विधीयते ।
पट्टकोपरि स्थित्वैव, पानं चोष्णजलं तथा ॥ ५८० ॥
सर्वसात्विकरूपेण, कार्यं तया विधीयते ।
धार्मिकतत्त्वज्ञानस्य, जिज्ञासा परिवर्धते ॥ ५८१ ॥
शाला प्राणसमा नित्यं, स्वमानसे च मन्यते ।
तस्योन्नतिविधानाय, क्रियते सूचनं तया ॥ ५८२ ॥

सिन्दे सकाशपार्श्वाच्च, साहाय्यं मीलितं खलु ।
शतं च प्रतिमासं हि, रूप्यकानां च सर्वदा ॥ ५८३ ॥
क्वचित्प्रसङ्गसञ्जाते, विशेषमपि दीयते ।
सप्तसहस्रसंख्याक, रूप्यका मीलिताः समे ॥ ५८४ ॥
सर्वसहायदानेन, शाला च परिवर्धिता ।
साधूनां विहृतिर्जाता, गतिशीलाश्च साधवः ॥ ५८५ ॥
स्वानुभवानुयोगेन, जीवनं लिखितं मया ।
विद्याध्ययनकार्यं च, जीवनमन्त्ररूपकम् ॥ ५८६ ॥
अनेककार्यमध्ये च, यत्स्मृतं तत्प्रयोजितम् ।
मादृशां हीनबुद्धीनां, पूर्णस्मृतिश्च नो भवेत् ॥ ५८७ ॥
पशुप्राय मनुष्याणां, करोति किं न त्वत्कृपा ।
मादृशां तादृशं कार्यं, सञ्जातं गुरुदेवतः ॥ ५८८ ॥
त्वदुपकारतायाश्च, प्रतिकारो न संभवेत्
कथंच मादृशैस्तर्हि, प्रतिकारो विधीयते ॥ ५८९ ॥
यच्छासनं त्वया प्राप्तं, सार्थकंच कृतं गुरो ।
स्वपरमोक्षहेतुत्व, साधनदानकार्यतः ॥ ५९० ॥
ममाऽपि भवहेतुत्व, साधनस्य विनाशतः ।
कल्याणहेतुमुख्यत्व, तच्छासनस्य प्राप्तितः ॥ ५९१ ॥
त्वदीयविरहः किन्तु, दुनोति हृदयं मम ।
अन्तिमसमये देव, कथं त्वया दूरीकृतः ? ॥ ५९२ ॥

पितृणां मृत्युता नैव, दुःखदा सर्वकालिका ।
त्वदीयशोधवाक्येन, स्वल्पकाले विनिर्मिता ॥ ५९३ ॥

त्वद् वियोगजदुःखेन, सर्वदा हृदयं मम ।
संतप्तं नैव शक्नोमि, वक्तुं कस्यापि संमुखे ॥ ५९४ ॥

देशनामृतधारा च, यदा पतति हृद्भुवि ।
तदा तापत्रयाणां च, अवकाशो न जगत्रये ॥ ५९५ ॥

मदीयमन्दभाग्येन, दुर्दैवेनैव साहृता ।
यथा भरतभूमीनां, अर्धकल्पसमागमः ॥ ५९६ ॥

त्वदीय दर्शनं देव, भविष्यति कदा मम ।
त्वदीयदेशनापानं, मिलिष्यति कदा गुरो ! ॥ ५९७ ॥

त्वदीयनाममंत्रस्य, शुद्धस्यान्तने ध्यानतः ।
किं किं सिध्यति नो देव ! कार्यं हि सर्वदा मम॥ ५९८ ॥

शासनं वीरदेवानां, प्राप्तं गुरो ! प्रसादतः ।
त्वदीयनाममंत्रश्च, प्राप्तस्त्वदीयसंगमात् ॥ ५९९ ॥

जगत्रप्येकवीराणां, देवानां शरणं खलु ।
परममुक्तसिद्धानां, *द्वितीयं शरणं* सदा ॥ ६०० ॥

स्वपरकल्याणकर्तॄणां, साधूनां शरणं प्रभो ! ।
शुद्धसर्वज्ञधर्मस्य, प्राप्तं तव कृपा बलात् ॥ ६०१ ॥

---

१ इदानीं कल्पवृक्षफलसंप्राप्तिः ।

त्वया किं किं च नो दत्तं, धर्मदानेन हे गुरो ।
सर्वनाशोपकारश्च, विस्मियते नकर्हिचित् ॥ ६०२ ॥

शास्त्रप्रमाणहीनं च, लिखितं यन्मया खलु ।
मिथ्यादुष्कृतकं, भूयात्त्रिकरणत्रियोगतः ॥ ६०३ ॥

॥ इति श्रीशास्त्रविशारद–जैनाचार्य जगत्पूज्य जङ्गम-युगप्रधानसर्वदेशीयजनप्रतिबोधक विद्यासाहित्यधर्म्मोद्धारक-पूज्यपादाराध्यदेव-श्रीविजयधर्म-सूरीश्वरचरणारविन्द भृङ्गायमाणेन न्याय-विशारदन्यायतीर्थोपाध्यायमङ्गलविजयेन विरचिते धर्मजीवनग्रन्थे मोहमयी नाशिकधूलेग्रामामलनेरेन्द्रपुरी-शिव-पुरीवर्णनविषयकसप्तमः परिच्छेदः समाप्तः ॥

तत्समाप्तौ च ग्रन्थोऽपि समाप्तः ॥

समाप्त

# परिशिष्टम्

या काचिज्जैनधर्मेषु, संस्थोद्घाटनता कृता ।
नाममात्रेण निर्देशः, क्रियते स्मृतिहेतवे ॥ १ ॥

मधुमत्यां च शालायाः, आद्यमुद्घाटन कृतम् ।
वीरमग्राममध्ये च, धर्मविजयनामकम् ॥ २ ॥

पुस्तकालयकं तत्र, सर्वेषां ज्ञानहेतवे ।
म्हेसाणाग्राममध्ये च, सर्वेषां हितकारिका ॥ ३ ॥

यशोविजयनामाख्या, संस्कृतपाठशालिका[1] ।
गुरूणामुपदेशेन, धार्मिकज्ञानदातृका ॥ ४ ॥

वाराणस्यां च तन्नामा, शाला च परिस्थापिता ।
जैनशासनविद्यायाः, प्रचारकार्यकारिका ॥ ५ ॥

स्थापिता ग्रन्थमाला च, गुरुदेवेन तत्र वै ।
भावपत्तनग्रामे च, ततः परं समागता ॥ ६ ॥

पादलिप्ते गुरुणा च, गुरुकुलं त्वद् बोधतः ।
अमृतलालद्वारेण, संस्थापितं सुयोगतः ॥ ७ ॥

आग्रानगरमध्ये च, ज्ञानमन्दिरशोभनम् ।
गुरुदेवानुमत्या वै, स्थापितं धर्मयोगतः ॥ ८ ॥

---

१ यशोविजय पाठशालायाः पश्चाद् यशोविजयगुरुकुलम् ।

नयानगरमध्ये च, शान्तिशालोपदेशनम् ।
गुरुणा विहितं तत्र, चातुर्मासिकमध्यके ॥ ९ ॥

ओशोयापाठशालायाः, स्थापनं रत्नसाधुभिः ।
गुरुदेवस्य सङ्केतात्कृतं च धर्मयोगतः ॥ १० ॥

वरकाणासु संस्थायाः, स्थापने गुरुदेशना ।
आद्यहेतुर्निगद्येत, कुशलादिक[1] योगतः ॥ ११ ॥

लींबडीग्राममध्ये च, धार्मिकज्ञानलब्धये ।
बोर्डींगनामरूपेण, संस्थोद्धाटनता कृता ॥ १२ ॥

मधुमत्यां च ज्ञातव्यं, बालाश्रमं च सुन्दरम् ।
स्थापितं गुरुवर्येण, अबोधज्ञानहेतवे ॥ १३ ॥

मण्डलं वीरतत्त्वानां, मोहमय्यां च योजितम् ।
विद्यते शिवपुर्यां, तज्ज्ञानध्यानस्य पोषकम् ॥ १४ ॥

इत्याद्यनेकसंस्थायाः, स्थापनं गुरुणा कृतम् ।
विशुद्धभावपूर्वेण, शुद्धशासनरागतः ॥ १५ ॥

जीर्णोद्धारप्रतिष्ठा च, कारिता गुरुणा बहु ।
योगोपधानकार्यं च, विस्मृतं न कदाचन ॥ १६ ॥

महानिशीथपर्यन्तं, सूत्राणां योगता कृता ।
गुरुणा स्वीयशिष्याणां, योगक्रिया च कारिता ॥ १७ ॥

---

१ कुशलपाल ऋषभदास प्रभृति ।

प्रतिरोमैवरागश्च, धर्मस्य मानसे निजे ।
शासनधर्मकार्याय, प्राणा अपि पणीकृता ॥ १८ ॥

तपोध्यानादि कार्यं च, स्वाध्यायशुद्धरोपणा ।
ग्रन्थनिर्माणता बह्वो, गुरुणा प्रविधीयते ॥ १९ ॥

धर्मयोगे सदाध्यानं, ज्ञानयोगस्तु पुष्कलः ।
धर्मध्याने सदा दृष्टिः, कृता च गुरुणा खलु ॥ २० ॥

सेवाधर्मो गुरूणां च, परममन्त्ररूपकः ।
यावज्जीवत्व पर्यन्तं, तेषां वै परिज्ञायताम् ॥ २१ ॥

## न्यायविशारद न्यायतीर्थ परमपूज्य उपाध्याय श्रीमंगलविजयजी महाराजकृत ग्रन्थाः-

( संस्कृत )

१ जैन तत्त्वप्रदीप
२ धर्मदीपिका व्याकरण
३ आदर्शविभूति
४ योगप्रदीप
५ वीरधर्म पट्टावली
६ व्युत्पत्तिवाद टीका अमुद्रित
७ शक्तिवाद टिप्पन ,,
८ नय प्रदीप ,,
९ बंगविहार प्रकरण ,,
१० धर्मबोध व्याकरण एक अध्याय मूलसूत्र ,,
११ उल्लासकल्लोलिनी भ्रमशोधक ,,

( हिन्दी )

१२ जैन साहित्य में पदार्थ की व्यवस्था
१३ वेदरहस्य संक्षेप (अमुद्रित)
१४ महाभारत रहस्य प्रदर्शन ,,
१५ मनुस्मृति रहस्य संक्षेप ,,
१६ कर्मपुराण रहस्य (अमुद्रित

( गुजराती )

१७ आर्हतदर्शन दीपिका
१८ धर्मजीवन प्रदीप
१९ धर्मप्रदीप
२० गुरुदेव पूजा योगगर्भित ( छोटी )
२१ गुरुदेव पूजा बड़ी
२२ सम्यक्त्वप्रदीप
२३ द्रव्यप्रदीप
२४ तत्त्वाख्यान पूर्वार्द्ध
२५ तत्त्वाख्यान उत्तरार्द्ध
२६ सप्तभंगीप्रदीप
२७ कवलाहार प्रकरण ( अमुद्रित )
२८ गहुंलीसंग्रह ,,
२९ ईश पूजा ,,

## मुनिराजश्री प्रभाकरविजयजी- कृत ग्रंथाः—

१ सराक जाति
२ आदर्श जैनदर्शन ( जैन तत्त्व प्रदीप)का अनुवाद(अमुद्रित)

## प्रशस्तिः

नमः श्रीवर्धमानाय, जगदीशाय तायिने ।
त्रिलोकीजनपूज्याय, योगीन्द्रध्येयरूपिणे ॥ १ ॥
तत्पट्टीयाऽऽद्यभूपाय, गणधारिणे योगिने ।
संपूर्णलब्धिलब्धाय, गौतमस्वामिने नमः ॥ २ ॥
सुधर्मधर्मरूपाय, सुधर्मधर्मदेशिने ।
सुधर्मयोगयोगाय, सुधर्मस्वामिने नमः ॥ ३ ॥
तत्पट्टेष्वभवन्नैके, सूरयो धर्मनायकाः ।
जैनधर्मप्रभावं च, कुर्वन्ति नैकयोगतः ॥ ४ ॥
निर्ग्रन्थेत्यभिधा येषां, जैनानां प्राक् प्रसिद्धिभाक् ।
ततश्च चन्द्रगच्छाख्या, प्रसृता जगतीतले ॥ ५ ॥
वडगच्छाऽभिध्येयत्वं, तस्य नामान्तरं मतम् ।
वटवृक्षे सुयोगेन, आचार्यपददानतः ॥ ६ ॥
यावज्जीवं तपोयोगाच्छुद्धचारित्रधारिणाम् ।
जगत्पूज्यजगच्चन्द्र सूरीणां राजयोगतः ॥ ७ ॥
बहुतपोऽभिधानत्वोपाधेश्च परिलाभतः[१] ।
तपोगच्छत्वरूपा सा, प्रसिद्धिर्भारतेऽभवत् ॥ ८ ॥
क्रियाशुद्धिश्च तत्रैव, पारंपर्यविशुद्धितः ।
शुद्धपरंपरा यत्र, क्रियाशुद्धिश्चतत्र वै ॥ ९ ॥

---

१ मेदपाटीय–महाराणा द्वारा ।

तन्नभोमणिरूपाश्च, जगदुद्धारकारकाः ।
अनेके स्वर्गयोजाताः, जैनशासनभास्कराः ॥ १० ॥

प्रतिवर्षं च षण्मास–पर्यन्ताऽमारिघोषणा ।
कारिताऽक्बरपार्श्वाच्च, देशनाऽमृतयोगतः ॥ ११ ॥

जैनधर्मप्रभावश्च, कारितो यैर्महात्मभिः ।
विजयहीरसूरीशैः, तेभ्यो नमश्च सर्वदा ॥ १२ ॥

तत्पट्टं भूषयामासुः, तत्पश्चान्नैकसूरयः ।
अद्यावधिश्च तत्पट्टं, अलंचक्रुश्च सर्वदा ॥ १३ ॥

तत्र जातस्तपोमूर्तिः, वैराग्यरसकूपिका ।
मणिविजय इत्याख्या, दादा चेति पराऽभिधा ॥ १४ ॥

तच्छिष्याश्च जगद्वन्द्याः, पांचालोद्धारकारकाः ।
लुम्पकोद्धारकर्तारः, प्रसिद्धा जैनशासने ॥ १५ ॥

बुद्धिविजय सन्नाम–धारकाः पापनाशकाः ।
यदीयं दर्शनं पुण्यं, नैके शिष्यविधायकाः ॥ १६ ॥

तत्सर्वशिष्यरत्नानां, आद्याश्च मूलचन्द्रकाः ।
वृध्धिचन्द्रास्ततो ज्ञेयाः, गुरुसेवासु तत्पराः ॥ १७ ॥

येषां निर्मलचारित्रं, येषां वचनचातुरी ।
येषां व्याख्यानशैली च, वैराग्यं परमं तथा ॥ १८ ।

देशनाऽमृतधारा यन्मुखाद् वर्षति सर्वदा ।
तत्कालिकमुनीन्द्रेभ्य–स्तेषु विशेषतोऽधिका ॥ १९ ॥

तेषां च पूज्यपादानां, शिष्या नैकेऽभवंस्तदा ।
तेषु मध्ये जगत्ख्याताः, चरित्रनायकाः स्मृताः ॥ २० ॥
विजयेन्द्राऽऽख्यसूरिश्च, द्वितीयः शिष्येषु राजते ।
प्राचीनतत्त्ववेत्ता वै, प्राच्यवस्तुगवेषकः ॥ २१ ॥
तत्परे मंगलाद्याश्च, देवेन्द्रान्ताः प्रकीर्तिताः ।
तेषां च वर्णनं सर्वं, कृतं योगप्रदीपके ॥ २२ ॥
विस्तृतं तत्प्रशस्तौ वै, गुणानां वर्णनं मतम् ।
ततस्तत्रैव ज्ञातव्यं, गुणदर्शिजनैः खलु ॥ २३ ॥
गुरुदेवचरित्रे यत्कृतमज्ञानदोषतः ।
तन्मिथ्यादुष्कृतं भूयात्, त्रिकरणत्रियोगतः ॥ २४ ॥
रघुनाथपुरे रम्ये, वसन्ति मरुभूमिजाः ।
गौरीदत्ताद्यश्चैव, संजाताः चारुश्रावकाः ॥ २५ ॥
श्राद्धगृहाणि चत्वारि, उपदेशेन कृतानि वै ।
वसन्तादिकतत्पुत्रैः, गुरुभक्तिपरायणैः ॥ २६ ॥
विद्यावल्लभसूरीणां, मंगलादिमुनेस्तथा ।
तदीयधर्मशालायां चातुर्मासंच कारितम् ॥ २७ ॥
समिति पर पट्काय, तीर्थंकरसमे खलु।
वीरनिर्वाणतो ज्ञेयः, प्रशस्तिसमयः किल ॥ २८ ॥
गुरुदेवकृपायाश्च, फलमत्र निगद्यते ।
अन्यथा मादृशैर्बुद्धि-मान्द्यैः कथं निरूप्यते १ ॥ २९ ॥

१ श्रीवृद्धिचन्द्रगुरूणाम् ।

# शुद्धिपत्रकम्

| अशुद्ध | शुद्ध | पंक्ति | पृष्ठ |
|---|---|---|---|
| मध्यस्थ | मध्यस्थे | ५ | ४ |
| येव | यैव | १२ | ८ |
| ताँ | ता | ९ | ११ |
| ता | ताः | ३ | १३ |
| म | मः | ८ | १[illegible] |
| चत्वारः | चतस्रः | ७ | १४ |
| श | शं | १४ | १६ |
| च | चैव | ४ | १७ |
| नव | नैव | ८ | १८ |
| दि | दिं | १८ | २१ |
| अशान्तिः | शान्तिः | १० | २८ |
| त | तं | १४ | ३० |
| श्र | श्रु | १५ | ३७ |

| अशुद्ध | शुद्ध | पंक्ति | पृष्ठ |
|---|---|---|---|
| ङ्ग | ङ्घे | १६ | ३४ |
| मे | मे | ९ | ३४ |
| मे | मेच | २ | ३८ |
| तत्रच | तत्रवै | १२ | ३९ |
| ना | नां | ९ | ५० |
| कम् | काम् | ६ | ५७ |
| ने | नै | ५ | ६३ |
| तेषां | तैश्च | २ | ७५ |
| गुरुणा | गुरूणां | २ | ७५ |
| पि | पिं | ५ | ७७ |
| स्य | के | १३ | ८२ |
| भ | म | ११ | ८५ |
| कारेण | कर्त्रैव | ११ | ८९ |
| थ | थं | ८ | ९० |
| क | कं | ९ | ९७ |
| तत्र | त्यत् | ११ | ९८ |
| च | चै | १२ | १०३ |
| तोषारिकता | पारितोषिकतां | १९ | १०४ |
| जन | जैन | १ | १०५ |
| कः | कैः | ८ | १०८ |
| श | शं | १७ | १०८ |
| विलायते | लन्दनेहि | १२ | ११४ |
| विलायते | लन्दनेचै | ११ | ११५ |
| म | मं | ४ | ११६ |
| दृष्टैव | दृष्ट्वैव | १३ | ११६ |
| लः | लं | ११ | ११७ |

| अशुद्ध | शुद्ध | पंक्ति | पृष्ठ |
|---|---|---|---|
| व | वं | २ | ११९ |
| ल | ला | २ | १२१ |
| च्चा | चा | १२ | १२१ |
| तथा | स्तथा | २० | १२२ |
| श्मी | श्मी | १८ | १२५ |
| घ | घु | ३ | १२६ |
| यं | र्यं | १३ | १२७ |
| मपि | माऽपि | १४ | १२७ |
| रे | रै | ९ | १२९ |
| ज्ञा | चा | १२ | १२९ |
| घृतस्व | घृतश्च | ९ | १३२ |
| के | कैं | ३ | १३६ |
| न | नं | १६ | १३७ |
| श्र | श्र | ९ | १३९ |
| ल | लं | १ | १४० |
| स्व | श्च | १० | १४० |
| श्राद्धा | श्राद्धाः | २० | १४० |
| नि | नीं | १९ | १४७ |
| द्यै | द्य | ५ | १४९ |
| निं | नीं | ८ | १५० |
| साव | शाव | १६ | १५५ |
| सन | सनं | ५ | १६० |
| वार्ता | वार्तां | १ | १६१ |
| काचेन | वर्णन | ६ | १६४ |
| गोलका | शिखरा | ६ | १६४ |
| निन्हुय च | निह्नुते च | १ | १८१ |

| अशुद्ध | शुद्ध | पंक्ति | पृष्ठ |
|---|---|---|---|
| द्रा | द्री | १६ | १८२ |
| न्दु | न्दू | २० | १८३ |
| श्र | श्रु | ५ | १८५ |
| ण | णु | १४ | १८५ |
| सषपु | सत्त्वेपु | ३ | १९१ |
| ञो | ञीं | ३ | १९१ |
| युकृत्या | युक्त्या | ७ | १९३ |
| श्र | श्रु | १५ | ९३ |
| धाय | धीय | ३ | १९६ |
| हृतिः | हृतिः | ३ | १९७ |
| मितं | र्मितं | १६ | ९७ |
| वे | वैं | ९ | १९७ |
| तर्हि | तर्हि च | १० | २०१ |
| म | मं | १८ | २०१ |
| श्र | श्रु | १६ | २०६ |
| श्र | श्रु | १६ | २०८ |
| संयमस्य प्र | संयमाःपरि | २ | २१० |
| ता | तं | ७ | २१४ |
| तः | नः | १५ | २१४ |
| षिद्यते | षिद्यन्ते | १६ | २१५ |
| व्य | ग्य | १६ | २१५ |
| ञतः | जितः | १० | २१७ |
| श्र | श्रु | १६ | २१९ |
| परपरं | परस्परं | १ | २२० |
| श्र | श्रु | १४ | २२२ |
| श्र | श्र | ११ | २२३ |

| अशुद्ध | शुद्ध | पंक्ति | पृष्ठ |
|---|---|---|---|
| त | तं | १२ | २२४ |
| विघ्नं | विघ्नं | १२ | २२४ |
| पि | यि | १९ | २२५ |
| दशां | दृत्त | १७ | २२७ |
| वौ | वो | ८ | २२९ |
| स्वा | स्वा | ४ | २३१ |
| पिता | पिडता | १७ | २३१ |
| श्लोका | श्लोका | १० | २३८ |
| ने | नैव | ११ | २३९ |
| चव | चैव | १० | २४१ |
| येः | ये | १६ | २४१ |
| स्टो | थो | १२ | २४२ |
| ति | नि | ६ | २४३ |
| ल | मंगल | ९ | २४७ |
| भाद्रिकैः | भार्गैः | १४ | २४७ |
| वर्ति | वार्ति | ८ | २४८ |
| स | श | ११ | २४८ |
| स्च | च्च | १ | २५० |
| र्न | नैवं | १९ | २५७ |
| मथ्या | मथ्र्या | २ | २६० |
| या | यो | ६ | २६१ |
| दक्रु | दृक् | १६ | २६१ |
| सव | सर्व | १९ | २६३ |
| रु | रू | ४ | २६४ |
| ताः | तः | १४ | २६४ |
| तः | तं | १९ | २६४ |

| अशुद्ध | शुद्ध | पंक्ति | पृष्ठ |
|---|---|---|---|
| चात्रेव | चाऽत्रैव | १० | २६७ |
| तत | ततः | १७ | २६९ |
| यं: | य | १६ | २७० |
| त | त् | १८ | २७० |
| यस्य | येन | १८ | २७१ |
| मु | भ्र | १८ | २७१ |
| च | व | ३ | २७२ |
| कृतम् | मतम् | ९ | २८१ |
| सी | सि | १७ | २८१ |
| शुभ | शुभं | २ | २८५ |
| त्त | त्तं | १३ | २८६ |
| के | कै | १ | २९३ |
| घेट | घट | १९ | २९६ |
| ता | ताः | ६ | २९८ |
| श्र | श्रु | २० | ३०० |
| ता | ताः | २० | ३०० |
| चि | र्चि | ३ | ३०३ |
| रत्वया | स्त्वया | १८ | ३०६ |
| ता | ताः | १० | ३०९ |
| द्वितीयंदिने | दिवसे खलु | ७ | ३११ |
| च | चै | २ | ३१२ |
| पेद् | येव् | ११ | ३१३ |
| श्र | श्रु | ६ | ३११ |
| कार्य | कार्यं | ११ | ३१७ |
| तस्तदा | तं तदा | १ | ३१९ |
| म्र | म्रि | १६ | ३२१ |

